74 | 67 | 67

अनीकानि विनिघ्नन्तं ह्रीमन्तमपराजितम् ।
कथं शांतनवं तात पाण्डुपुत्रा न्यपातयन् ॥ ६३
कथं युक्तान्यनीकानि कथं युद्धं महात्मभिः ।
कथं वा निहतो भीष्मः पिता संजय मे परैः ॥ ६४
दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः ।
दुःशासनश्च कितवो हते भीष्मे किमब्रुवन् ॥ ६५
यच्छरीरैरुपस्तीर्णां नरवारणवाजिनाम् ।
शरशक्तिगदाखड्गतोमराक्षां भयावहाम् ॥ ६६
प्राविशन्कितवा मन्दाः सभां युधि दुरासदाम् ।
प्राणद्यूते प्रतिभये केऽदीव्यन्त नरर्षभाः ॥ ६७
केऽजयन्के जितास्तत्र हृतलक्षा निपातिताः ।
अन्ये भीष्माच्छांतनवात्तन्ममाचक्ष्व संजय ॥ ६८
न हि मे शान्तिरस्तीह युधि देवव्रतं हतम् ।
पितरं भीमकर्माणं श्रुत्वा मे दुःखमाविशत् ॥ ६९

---

D4 5 8 परा शक्तिस् —d) B1 3 4 Dn D4 8 तत्तु, D6 तस्य, S स च (for तच्च) D7 तत्र (for तस्मिन्) S प्रतिष्ठित

63 K3 D2 om 63 (cf v l 55) —a) Ś1 अनेकानि, K5 यानि कानि K5 D6 °घ्नंति G1 3 तान्यनीकानि निघ्नत —b) Ś1 Ko–2 श्रीमतम्, K4 भीमं तम्, G2 मृद्गतम्, G3 भीष्म तम् (for ह्रीमन्तम्) —c) B2 3 T1 G1 2 4 तात, G3 भीष्मं —d) Ko–2 °त्रानपातयन् (sic), K4 B Da Dn D3–6 8 G1–3 M3 °त्रा न्यवारयन्, K5 D6 °त्रा अयोध°, T G4 °त्रा ह्यवार°, M1 °त्रा ह्यपात°, M2 5 °त्राभ्यपात°, M4 °त्रोस्यपातयत्

64 K3 D2 om 64 (cf v l 55) —a) B4 Dn D4 8 G3 यथा (for कथ) Cc cites स्वत्तानि (for युक्तानि) K4 त्यक्तान्य°, D1 मुक्तान्य°, D6 युद्धान्य°, T2 युक्ता ह्य° —b) Ś1 Ko–2 T युक्त, D6 युद्धे (for युद्ध) —c) K2 D3 7 च (for वा) D1 कथ स हि रणे भीष्म — K1 om (hapl) from 64d up to भीष्मे in 65d

65 K3 D2 om 65 (cf v l 55) K1 om up to भीष्मे in 65d (cf v l 64) In K4, 65cd is lost on a damaged fol —c) K5 कितवात्, T1 G दुर्धर्षो, Cc कितवो (as in text) —d) M1–3 5 तस्मिन् (for भीष्मे) K5 D3 M4 किमब्रवीत्

66 K3 D2 om 66 (cf v l 55) —a) T G या, M यां (for यत्) B Da Dn D4–8 उपा स्तीर्णां, T2 G1, 2 उप(G2 °पा)स्तीर्णा Ś1 K (K3 om) D1 यच्छरैरुपसंस्तीर्णां —b) Ś1 Ko 1 °वारणवाजिनीं, K5 D1 6 °वारणवाहिनीं, Da2 D5 °वानरवाजिना —c) K1 °महाखग (sic), K5 °गदाखड्ग, Da1 Dn D4 7 8 M5 °महाखड्ग-, D6 इरशक्तिगदाशार्ङ्ग —d) Ś1 Ko 1 D7 °तोमरर्ष्टि, K2 °तोमराश्या, Dn1 (by corr) °तोमरक्षा, D1 °तोमरक्ष B Dn D4 महाभया (B2 °गदा, D8 °भयं) (for भयावहाम्) K4 °तोमर * भयावह; Da D5 °तोमरर्ष्टिमहाभया (Da1 °य), D3 °तोमरासिमहाभयां, S °प्रासतोमरसकुला (G1 °ल, M3 5 °ला)

67 K3 D2 om 67 (cf v l 55) —a) G2 किंतुवा (sic) Da1 मेदा (for मन्दा) D1 प्राविश न्कितवान्मदान् —b) D1 सभा, D6 सम (for सभा) K4 B4 Da2 D4 5 8 युद्ध-, Da1 Dn युद्धे (for युधि) B1 2 D1 7 युद्धविशारदा (D1 °दान्), B3 युद्धदुरासदा S ता सभां युद्धदुर्गमा (T1 G M4 °मेदा, T2 °मेदा) —c) K5 महाभये, G1 3 प्रतिहते; Ca c प्रतिभये (as in text) —d) K5 के दीव्यति, Da1 Dn2 G4 केदिव्यत, T2 के दिव्यति, G2 केदीयंत D3 °र्षभ

68 K3 D2 om 68 (cf v l 55) —a) B1 4 Dn D4 6 8 के जीयते, B2 केजयत, B3 के जीवंति, Da D5 के जयंति, T2 तेजयन्के — M5 om 68b–70a —b) Ś1 D3 7 हतलक्षा, Ko–2 D6 हतलक्ष्या, K4 B Da Dn D1 4 5 8 Cc कृतलक्ष्या (B3 Da1 D1 °क्षा), G2 हृतलक्ष —c) Ś1 Ko–2 मन्ये (for अन्ये) —d) = 73d G2 4 तान्, G3 त (for तन्) ❀ Cc भीष्मादन्ये के जिता निपातिता वेत्यनुषग । ❀

69 K3 D2 M5 om 69 (cf v l 55, 68) —a) K5 न ह्रीमे Cc शान्ति (as in text) —b) K4 damaged K1 B Da Dn D4 5 8 T G M4 श्रुत्वा (for युधि) M1–3 श्रुत्वा भीष्म निपातित —c) S (M5 om) त वीर (for पितर) K5 भीष्म°, M4 वीर° (for भीम°) —d) K4 5 D1 3 6 7 मा (for मे) Ś1 आविशेत् B Da Dn D4 5 8 S (M5 om) भीष्ममाहवशोभिन

आर्तिं मे हृदये रूढां महतीं पुत्रकारिताम् ।
त्वं सिञ्चन्सर्पिषेवाग्निमुद्दीपयसि संजय ॥ ७०
महान्तं भारमुद्यम्य विश्रुतं सार्वलौकिकम् ।
दृष्ट्वा विनिहतं भीष्मं मन्ये शोचन्ति पुत्रकाः ॥ ७१
श्रोष्यामि तानि दुःखानि दुर्योधनकृतान्यहम् ।
तस्मान्मे सर्वमाचक्ष्व यद्वृत्तं तत्र संजय ॥ ७२
संग्रामे पृथिवीशानां मन्दस्याबुद्धिसंभवम् ।
अपनीतं सुनीतं वा तन्ममाचक्ष्व संजय ॥ ७३
यत्कृतं तत्र भीष्मेण संग्रामे जयमिच्छता ।
तेजोयुक्तं कृतास्त्रेण शंस तच्चाप्यशेषतः ॥ ७४
यथा तदभवद्युद्धं कुरुपाण्डवसेनयोः ।
क्रमेण येन यस्मिंश्च काले यच्च यथा च तत् ॥ ७५

C 6 587
B 6 14 80
K 6 14 78

इति श्रीमहाभारते भीष्मपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

70 K8 D2 om 70 (cf v l 55), M5 om $70^{a}$ (cf v l 68) — $^{a}$) K6 कीर्तिर्मे, G1 3 भामुक्ति (for आर्तिं मे) K1 2 हृदय रूढां, Dn1 D4 हृदया रूढा, S (M5 om) महतीं व्यू( T1 G4 °तीमू )ढां — $^{b}$) S हृदये (for महतीं) T2 शोककर्शिता B Da Dn D4 6 8 महतीं पुत्रहानिजां — $^{c}$) K0-2 त्व शिंचन्, K6 सेचयन्, B Da Dn D4 6 8 त्व हि मे (for त्व सिञ्चन्) Cc cites हिमे ( = gloss शिशिरे) G2 सर्पिषैव ❀ Cc आर्ति त्व दीपयसीत्यन्वय । ❀

71 $^{a}$) T2 महाभारतमुद्यम्य — $^{b}$) K0 1 त्रिद्रुत, K2 विद्रुम (for विश्रुत) Ś1 K0-3 5 Da1 D2 T2 G2 M2 सर्वलौ( K1 Da1 °लो )किक, D1 समरे हत — After $71^{ab}$, K5 ins ( = $36^{cd}$)

62* त विमग्न नरव्याघ्र भीष्म शससि सजय ।,

followed by a repetition of $71^{ab}$ — $^{c}$) B3 हि निहतं, Da1 G2 विनिहित — $^{d}$) = $52^{d}$ D6 पुत्रक

72 $^{a}$) K3 5 D1-3 6 7 शोचामि (for श्रोष्यामि) Ś1 K0 1 3 5 D1-3 6 7 तान्यनी( D3 7 °ली )कानि, K3 तान्यनेकानि T G तथा भ्रस्तानि दुःखानि, M अर्हं श्रोतु हि दुःखानि — $^{b}$) D7 °कृतानि वै, Cv as in text — $^{c}$) K5 एतस्मान्मे समाचक्ष्व, D7 तस्मात्सर्वं समाचक्ष्व — $^{d}$) M4 सद्वृत G2 तस्य

73 Ś1 K0-2 om (hapl) 73 In K4, 73 is lost on a damaged fol — $^{a}$) B Dn D3 4 8 यद्वृत्त (D3 समर्दं) तत्र सग्रामे — $^{b}$) G2 मतत्या युधि सभव (corrupt) — $^{c}$) B1 स्वपनीत, Cc अपनीत (as in text) B1 T2 स्वनीत, Cc सुनीत (as in text) B Dn D4 8 यत् (for वा) — $^{d}$) = $68^{d}$ B2 तत्समा° (for तन्ममा°) T2 M पृच्छते (M3 °त) (for सजय)

74 $^{ab}$) D6 यद्यत्कृत हि (for यत्कृत तत्र) K4 B Dn D3 4 8 S transp भीष्मेण and संग्रामे — $^{c}$) D2 तेजो मुक्तं, D7 अजेयेन, T3 ततो युक्त K3 5 D3 यतास्त्रेण — $^{d}$) S ब्रूहि (for शस) Ś1 K0-2 अनेकश (for अशेषत)

75 $^{a}$) B3 4 G2 तथा, M2 कथ S तच्चा° (for तद°) — $^{c}$) K5 *D2* यच्च, *M4* केन (*for* येन) D1 यस्मिन्वा, G3 यस्यापि, M4, 5 कस्मिंश्च — In K4, the portion of the text from $75^{d}$ up to the end of 6 16 16 is lost on a damaged fol — $^{d}$) G3 खले (for काले) K1 2 यश्च, M1-3 5 तच्च (for यच्च) K0-2 Dn1 T2 M2 5 तथा (for यथा) K8 D3 G1 3 च यत्, B Da Dn D4 5 8 [अ]भवत्, D6 भवेत्, M वद (for च तत्) — After 75, K3 5 D2 ins (cf $75^{cd}$)

63* यच्च यस्मिंश्च काले च वृत्त यच्च यथा च तत् ।

Colophon K4 damaged — *Adhy name* K0 3 5 धृतराष्ट्रप्रश्न, D2 °ष्ट्रप्रश्नानि, M °प्रलाप — *Adhy no* (figures, words or both) K3 Dn (Dn2 on marg) T G M2 14, Da2 D1 5 M1 3-5 15 (as in text) — *Śloka no* Dn1 79, Dn2 78, D5 76 — *Aggregate śloka no* K5 573, D1 566

# १६

संजय उवाच ।

त्वद्युक्तोऽयमनुप्रश्नो महाराज यथार्हसि ।
न तु दुर्योधने दोषमिममासक्तुमर्हसि ॥ १
य आत्मनो दुश्चरितादशुभं प्राप्नुयान्नरः ।
एनसा तेन नान्यं स उपाशङ्कितुमर्हति ॥ २
महाराज मनुष्येषु निन्द्यं यः सर्वमाचरेत् ।
स वध्यः सर्वलोकस्य निन्दितानि समाचरन् ॥ ३
निकारो निकृतिप्रज्ञैः पाण्डवैस्त्वत्प्रतीक्षया ।
अनुभूतः सहामात्यैः क्षान्तं च सुचिरं वने ॥ ४
हयानां च गजानां च शूराणां चामितौजसाम् ।
प्रत्यक्षं यन्मया दृष्टं दृष्टं योगबलेन च ॥ ५
शृणु तत्पृथिवीपाल मा च शोके मनः कृथाः ।
दिष्टमेतत्पुरा नूनमेवंभावि नराधिप ॥ ६
नमस्कृत्वा पितुस्तेऽहं पाराशर्याय धीमते ।

## 16

1 = 5 156 8[abcd] — In K4, 6 16 1–16 are missing (cf v 1 6 15 75) — [a]) = 3 181 9[a] Ś1 K0 1 T1 M3 5 तद्युक्तो, B3 यद्युक्तो, D1 यदुक्तो, D6 त्वयोक्तो, G2 त्वदुक्तो K2 उद्युक्तोयमनुप्राप्तो, Cv as in text — [b]) M3 तथार्हसि — [c]) K3 5 D2 न च, S न हि — [d]) Ś1 K0 2 आहर्तुम्, K1 आढरू° (corrupt), K3 D2 6 आवक्तुम्, B1 D7 T G1 2 4 M आधातुम्, B2 आशक्तुम्, B4 D4 आसक्तुम्, Cc as in text G3 आरोढु त्वमर्हसि (sic)

2 = (var) 5 156 9 K4 missing — [a]) B3 यथात्मनो, M3–5 आत्मनो वै — [b]) D1 प्राप्तवान् — [c]) Cc एनसा D6 नान्यत्व (for नान्य स) S एनसा न स दै(G1 दे)व वा — [d]) Ś1 तं न शकि°, K0–2 तेन शकि°, K6 D2 6 7 उपशकि°, S काल वा गं° (T2 ह°) Cd cites आशङ्कितुम् and उप K0–3 B1 3 4 Da D1 2 4–6 T2 G1 2 M4 अर्हसि

3 = 5 156 10 K4 missing — [a]) D1 यथा राजन् (for महा°) T2 मनुष्ये हि — [b]) D1 द्यूतं, G3 M1 3 नित्य (for निन्द्य) D6 सर्वदा° (for सर्वमा°) K3 5 D2 कर्म यो निंद्यमाचरेत्, T1 G4 निकृतिं य समा° — [c]) Ś1 K0 1 D1 6 T2 सर्वे लोकेषु, G3 चास्य लोकस्य — [d]) K5 T2 °चरेत्

4 = (var) 5 156 11 K4 missing — [a]) D6 T2 G3 M1 3–5 निकारा, G2 °रान्, Cc °कार (as in text) Ś1 K0–3 M4 °तिप्रज्ञ°, K5 D2 3 G1 M1–3 °तिप्रज्ञ, B2 D7 निष्कृतिप्रज्ञै ; Da1 °कृतै प्रज्ञै, D1 °तिप्राज्ञै°, D3 °ति प्राज्ञै°; T2 G2 3 M5 °तिप्रज्ञा D6 अपकारा कृता प्रज्ञै° (sic), T1 G4 न्यक्कारा हि महाप्राज्ञ Cc अनिकृति°, Cd cites निकर and निकृतिप्रज्ञ — [b]) K5 Da D5 तत्प्रती(K5 °ति)क्षया; Cc त्वत्प्रती° (as in text) — [c]) D3 S (except T1 G1 M2) °भूता — [d]) Cc cites क्षात K3 B Da Dn D2 4 5 8 T2 क्षातश्च, D3 6 T1 G M4 क्षाताश्च, M1–3 5 °तैश्च K2 वन, K3 D2 च ते D1 क्षात च सुमहावने

5 5[ab] = (var) 5. 156 12[ab] K4 missing Dn1 om 5–6 — [a]) D6 M1–4 रथानां (for गजा°). — [b]) T G M1 3 5 रथाना, M2 गजाना (for शूराणा) T2 चातितेजसा, G2 च महौजसां K3 5 B D (Dn1 om) राज्ञा चा(Da1 च)मिततेजसा (Da1 °स) — [c]) Ś1 K0–2 च मया, G2 समयो (for यन्मया) G2 दृष्ट — [d]) G1 3 यथा, G2 पुष्ट (for दृष्टं) D1 ज्ञान-, T1 G येन (for योग) Cc d योगबलेन (as in text) D3 वा, T2 इ (for च)

6 K4 missing Dn1 om 6 (cf v 1 5) — [b]) S (except T G4) मा स — [c]) K3 5 B1–3 D2 3 6 G1 3 M2 5 दृष्टम्, Cc दिष्टम् (as in text) Ś1 परा, M2 पुरो, Cc पुरा (as in text) Da Cc भूत, T G4 M1 3 4 भावि, G1–3 M2 5 भावी (for नूनम्) — [d]) K1 एव भावि, K2 B Dn1 D4 5 8 इदमेव, Da इदमेव, D1 एतद्भावि, S नूनमेतन् (for एवभावि)

7 K4 missing Before 7, B3 ins सजय उ° — [a]) K5 B1–3 Da D5–7 °स्कृत्य D3 पितुस्तेद्य, S प्रवक्ष्यामि (for पितुस्तेऽह) Cc d cite पितु — [b]) Da1 परा° B1 2 °र्यस्य धीमत — [c]) T2 G2 4 M

यस्य प्रसादाद्दिव्यं मे प्राप्तं ज्ञानमनुत्तमम् ॥ ७

दृष्टिश्चातीन्द्रिया राजन्दूराच्छ्रवणमेव च ।
परचित्तस्य विज्ञानमतीतानागतस्य च ॥ ८

व्युत्थितोत्पत्तिविज्ञानमाकाशे च गतिः सदा ।
शस्त्रैरसङ्गो युद्धेषु वरदानान्महात्मनः ॥ ९

शृणु मे विस्तरेणेदं विचित्रं परमाद्भुतम् ।
भारतानां महद्युद्धं यथाभूल्लोमहर्षणम् ॥ १०

तेष्वनीकेषु यत्तेषु व्यूढेषु च विधानतः ।
दुर्योधनो महाराज दुःशासनमथाब्रवीत् ॥ ११

दुःशासन रथास्तूर्णं युज्यन्तां भीष्मरक्षिणः ।
अनीकानि च सर्वाणि शीघ्रं त्वमनुचोदय ॥ १२

अयं मा समनुप्राप्तो वर्षपूगाभिचिन्तितः ।
पाण्डवानां ससैन्यानां कुरूणां च समागमः ॥ १३

नातः कार्यतमं मन्ये रणे भीष्मस्य रक्षणात् ।
हन्याद्गुप्तो ह्यसौ पार्थान्सोमकांश्च ससृञ्जयान् ॥ १४

अब्रवीच्च विशुद्धात्मा नाहं हन्यां शिखण्डिनम् ।
श्रूयते स्त्री ह्यसौ पूर्वं तस्माद्वर्ज्यो रणे मम ॥ १५

तस्माद्भीष्मो रक्षितव्यो विशेषेणेति मे मतिः ।

C 6 603
B 6 15 16
K 6 15 16

---

प्राप्त (for दिव्य) $B_{1.2.4}$ $D_{1}$ Dn $D_{1.4.8}$ तत् (for मे) $B_{3}$ यस्य प्रसादाज्ज्ञातव्यं, $G_{1.3}$ यत्प्रसादान्मया प्राप्त —$^{d}$) $K_{0.1}$ प्राज्ञ, $T_{2}$ $G_{1.3}$ $M_{2.4}$ दिव्य, $T_{1}$ $G_{2.4}$ $M_{1.3.5}$ दिव्य (for प्राप्त) $B_{3}$ तत्प्राप्त ज्ञानमुत्तम

8 $K_{4}$ *missing* —$^{a}$) $K_{2}$ दृष्टिर्वाती° Cc अतींद्रिया (as in text) —$^{b}$) $T_{1}$ $G_{2.4}$ दूरश्रवणम् $D_{7}$ हि (for च) — After $8^{ab}$, Da $D_{5}$ *repeat* $6^{ab}$ and om $8^{cd}$ — $D_{2}$ om (hapl.) $8^{d}$–$9^{a}$.

9 $K_{4}$ missing $D_{2}$ om $9^{a}$ (cf v l 8) —$^{a}$) $Ś_{1}$ $K_{0.1}$ $D_{1}$ धूतोपपत्ति°, $K_{2}$ $D_{7}$ व्यूहोपपत्ति°, $K_{3.5}$ $D_{3.6}$ भूतोपपत्ति°, S ययोपपत्ति° Ca cites उत्पत्ति, Cc as in text —$^{b}$) $D_{6}$ स्व- (for च) B Da Dn $D_{2-5.8}$ गतिं शुभा, S गतिं विना —$^{c}$) $Da_{1}$ Dn $D_{4.8}$ अस्त्रैर् (for शस्त्रैर्) $K_{3}$ $D_{2.3.6.7}$ युद्धे च, $K_{5}$ युद्धस्य (for युद्धेषु) $Ś_{1}$ $K_{0-2}$ शस्त्रैर मरता युद्धे, S °रवध्यो युद्धे च ($T_{1}$ $G_{4}$ °द्धेह) Cc d cite असङ्ग (as in text)

10 $K_{4}$ missing —$^{b}$) $K_{3.5}$ $D_{2}$ Cv निवृत्त, $Da_{2}$ पवित्र, Cc विचित्र (as in text) Cd cites चित्र $D_{3}$ परमद्भुत, Cv as in text —$^{c}$) B D (except $D_{6}$) $G_{2}$ भर° (for भार°) $Ś_{1}$ $K_{0-2}$ $Da_{1}$ महायुद्ध, B Dn $D_{1.4.7}$ $T_{2}$ $M_{2}$ अभूद्युद्ध —$^{d}$) B Da Dn $D_{4.6.8}$ $T_{2}$ $G_{1.2}$ $M_{1-3.5}$ य(Da $D_{5}$ त)- या तत्, $D_{6}$ तुमुल, $T_{1}$ $G_{3.4}$ $M_{4}$ यथावत् (for यथाभूत्) S (except $M_{4}$) रोम° (for लोम°)

11 $K_{4}$ missing —$^{a}$) S स्वेष्व($M_{2}$ स्वान्य)नी° $Ś_{1}$ $K_{0-2}$ $G_{3}$ युक्तेषु, $K_{5}$ युद्धेषु (for यत्तेषु) —$^{b}$) $Ś_{1}$ $K_{0.2}$ व्यूढेष्वथ, $K_{1}$ रूढेष्वथ, Dn $D_{4.8}$ व्यूहेषु च

12 $K_{4}$ missing Before 12, $D_{7}$ ins दुर्योधन उ —$^{a}$) $K_{5}$ दुर्योधन (wrongly) (for दुःशासन) $K_{5}$ $Da_{1}$ $D_{6}$ $M_{2}$ रथात्तूर्णं —$^{b}$) $Ś_{1}$ युज्यत, $K_{1}$ युजितां (sic), $K_{3}$ $Da_{1}$ $Dn_{1}$ (by corr) $T_{2}$ युज्यतां $K_{0}$ भीमरक्षिण (sic), $Da_{1}$ भीष्मरक्षणं, $D_{8}$ M °रक्षणे $D_{6}$ युधि भीष्मस्य रक्षिण —$^{c}$) $G_{2}$ तानि तानि (for अनी°) $Ś_{1}$ $K_{0-2}$ सहस्राणि (for च सर्वाणि) —$^{d}$) $M_{2}$ तम् (for त्वम्) $K_{0.2}$ $G_{3}$ (*inf lin* as in text) $M_{3}$ °शोचय, $K_{3}$ $D_{3.6}$ °नोदय (for °चोदय)

13 Cf 5 157 4 $K_{4}$ missing —$^{a}$) $K_{3.5}$ $D_{2.3}$ $T_{1}$ G स, $D_{1.6}$ मा (for मा) $K_{0}$ B Da Dn $D_{4.5.7.8}$ $T_{2}$ M अयं स मामनु($K_{0}$ साममनु, $Dn_{1}$ स मामभि, $D_{4}$ स समभि, $D_{7}$ स समय)प्राप्तो —$^{b}$) = 5 166 $1^{d}$ $Dn_{1}$ वर्षपूर्णाभि°, $D_{1}$ °पूगाभिसंचित, $D_{6}$ °वेदाभिसंचित, $T_{2}$ °पूगातिचिंतित, $M_{3.5}$ °पूगाभिचितित Ca cites पूग —$^{c}$) $G_{3}$ च, $M_{4}$ सु (for स)

14 $K_{4}$ missing —$^{a}$) $D_{3}$ अत, $D_{6}$ एतत् (for नात) $D_{3.6}$ $M_{4}$ °महं, T G $M_{1-3.5}$ °तरं (for °तमं) —$^{b}$) $D_{3}$ रक्षण, $D_{6}$ रक्षिण —$^{c}$) $K_{3.5}$ $D_{2}$ हति (for हन्याद्) $T_{1}$ $G_{3.4}$ गुप्तो यथा, $T_{2}$ गुप्तो ह्यस्मौ, $G_{3}$ एकरथे (for गुप्तो ह्यसौ) $D_{6}$ हति युक्तो ह्यपार्थाना —$^{d}$) $D_{1}$ सोमकान्सहसृजयान्, $T_{2}$ °कान्याच्छ सृ°, $G_{2}$ °कांश्चैव सृ°

15 $K_{4}$ missing —$^{a}$) $Ś_{1}$ $K_{0-2}$ $D_{1.7}$ °द्धि, $D_{3}$ °स्स (for °द्ध) $B_{4}$ °द्धाश्चो (corrupt) —$^{b}$) = 5 169 $16^{b}$, $K_{5}$ नाहं (for नाह) Da $D_{5}$ शिखण्डिनीं, $G_{3}$ °न —$^{c}$) $Ś_{1}$ पूर्वस् —$^{d}$) $K_{2}$ अस्माद् (for तस्माद्) $B_{4}$ वार्यो, $D_{2.8}$ वर्यो (for वर्ज्यो) $T_{2}$ वरो (for रणे)

16 $K_{4}$ missing. —$^{a}$) $D_{3}$ एतस्माद्रक्षणीयश्च.

शिखण्डिनो वधे यत्ताः सर्वे तिष्ठन्तु मामकाः ॥ १६
तथा प्राच्याः प्रतीच्याश्च दाक्षिणात्योत्तरापथाः ।
सर्वशस्त्रास्त्रकुशलास्ते रक्षन्तु पितामहम् ॥ १७
अरक्ष्यमाणं हि वृको हन्यात्सिंहं महाबलम् ।
मा सिंहं जम्बुकेनेव घातयामः शिखण्डिना ॥ १८
वामं चक्रं युधामन्युरुत्तमौजाश्च दक्षिणम् ।
गोप्तारौ फल्गुनस्यैतौ फल्गुनोऽपि शिखण्डिनः ॥ १९
संरक्ष्यमाणः पार्थेन भीष्मेण च विवर्जितः ।
यथा न हन्याद्गाङ्गेयं दुःशासन तथा कुरु ॥ २०
ततो रजन्यां व्युष्टायां शब्दः समभवन्महान् ।
क्रोशतां भूमिपालानां युज्यतां युज्यतामिति ॥ २१
शङ्खदुन्दुभिनिर्घोषैः सिंहनादैश्च भारत ।
हयहेषितशब्दैश्च रथनेमिस्वनैस्तथा ॥ २२
गजानां बृंहतां चैव योधानां चाभिगर्जताम् ।
क्ष्वेडितास्फोटितोत्क्रुष्टैस्तुमुलं सर्वतोऽभवत् ॥ २३
उदतिष्ठन्महाराज सर्वं युक्तमशेषतः ।

— b) D8 भीष्मो भीमपराक्रम , G8 यथावदिति मे मति — c) T2 युक्ता (for यत्ता) — d) Ś1 Ko-2 तिष्ठत

17 b) S1 Ko-2 Da1 दक्षिणा°, K8 B8 °रास्तथा, K5 दाक्षिणान्योत्तरास्तथा — c) K2 4 सर्वशास्त्रार्थे, K8 5 B Da Dn D1-6 8 S सर्वेश(B2 8 Dn1 D4 T2 °वेशा , D1 °वेथा-, D8 °वैंव्व )स्त्रेषु ( for °शस्त्रास्त्र- )

18 a) K1 Da1 D2 8 7 अरक्षमाण ( D7 °णो ) D1 सरक्षमाणो हि वृषो, G8 हरिक्षयं च वृको ( sic ) — b) Ś1 Ko-8 D1 2 7 °वने ( for °बलम् ) — c) Da1 D8 G °नैव ( for °नेव ) — d) Ś1 Ko 1 घातयेत, Da D5 7 °येथा°, D1. 8 T2 G1 °येय, D3 ( marg *sec m.* ) हन्यतेय, T1 G2 4 M3 8 5 घातयेम, M1 घातयेम; G8 खातयेय, M4 घातयाम

19 a) K5 चापचक्र, Da2 वाम चक्रे, D2 8 वाम चक्र, D7 S वामे चक्रे — b) K2 °मोजाश्च K5 D7 S दक्षिणे — c) Ko फल्गुण°, K1 5 D2 8 6 फाल्गुन ( K1 °ण )स्येतौ, K2 8 D1 7 फाल्गुनस्यै°, K4 B4 Dn D4 फाल्गुन प्रासौ, B1-3 Da D5 फाल्गुनस्याजौ, D8 om , T1 G1. 4 M फल्गुनस्यास्ता; T2 °नन्यस्त, G2 °नस्याता , G8 दक्षिणस्यास्ता — d) N ( except Ś1 ) फाल्गुनो° ( Ko फल्गुणो° ), G8 अर्जुनो°

20 a) K1 2 D2 सरक्ष°, K6 D6 स रक्ष°, D6 M1 सरक्ष्यमाण, T1 G M4 स रक्ष्य° — b) K2 भीष्मेन G2 विसर्जित°, M8 विनि°, Cc विव° ( as in text ) — d) Da1 यथा — After 20, N ( except Ś1 Ko 1 ) M ins an addl colophon ( *Adhy no* Da2 D1 5 M1 8-5 16, Dn M2 15 — *Aggregate śloka no* K5 593, D1 576 )

21 Before 21, N M2 4 ins सजय उ° ( Ś1 K1 M4 om उ° ) — a) Ko 2 तथा ( for ततो ) Cc व्युष्टाया ( as in text ) — b) Da1 m ( hypermetric ) स शब्द ( for शब्द ) B1 8 स शब्द सुमहानभूत्, B2 4 Dn D4 8 स शब्द समभून्महान् — d) D5 युज्यतामिति भारत, D6 युध्यता युध्यतामिति, M5 युज्यता युध्यतामिति

22 a) = 5 92 4c K4 B Da1 ( before corr ) D1 2 6 7 °भिघोषैश्च, Da Dn D4 5 8 °भिघोषाश्च- — b) B Da Dn2 D4 5 8 °नादाश्च ( °नादैश्च ) T1 G °नादरवेण च, T2 M °नादरवैरपि — c) B Da Dn D8-6 8 °नादै( Dn1 °दा )श्च — d) M4 °स्वनैरपि

23 a) Ko 2 बृहित, K1 Da1 ( before corr ) D5 व्यूहता, K8 5 D2 S बृहितैश्, D3 बृहता — b) K4 damaged M यौधाना Ś1 चाभिगर्जिता, B Da Dn D8 5 6 8 चापि गर्जता, D1 अभिगर्जता, T1 G1 8. 4 M4 चैव गर्जता, T2 चापि गर्जितात्, G3 चैव गर्जन, M1-8 5 चैव गर्जिते — c) K2 क्षोभि°, K4 B Da Dn D4-6 8 S क्ष्वेलि° ( for क्ष्वेडि° ) Ca c cite क्ष्वेडित Cd आक्ष्वेडित K1. 2 °तोत्कोष्टैस्, Da1 °ताक्रुष्टैस्, D8 °तोत्कोशैस्, T2 G3 8 M2 °तोद्धुष्टैस्, M8 5 °ताक्रुष्टैस् Ca c d cite आस्फोटित and उत्क्रुष्टं — d) K1-3 D8 तुमलं, Da Dn1 D5 S Cc तुमुल

24 a) Cd उदतिष्ठत् ( as in text ) — b) K2 सर्वे युक्त°, K5 Da1 सर्वयुक्त°, D8 6 रजो भौम° Ca c d cite युक्त — After 24ab, G2 reads 26ab *repeating* it in its proper place — c) Da1 महासैन्य, D8 6 दिशो वृण्वन् Cc cites सैन्य — d) K8 5 D2 8 °वयोस्तदा ( K5 D3 °था ), Dn1 °वसैन्ययो -

सूर्योदये महत्सैन्यं कुरुपाण्डवसेनयोः ।
तत्र राजेन्द्र पुत्राणां पाण्डवानां तथैव च ॥ २४
तत्र नागा रथाश्चैव जाम्बूनदपरिष्कृताः ।
विभ्राजमाना दृश्यन्ते मेघा इव सविद्युतः ॥ २५
रथानीकान्यदृश्यन्त नगराणीव भूरिशः ।
अतीव शुशुभे तत्र पिता ते पूर्णचन्द्रवत् ॥ २६
धनुर्भिर्ऋष्टिभिः खड्गैर्गदाभिः शक्तितोमरैः ।
योधाः प्रहरणैः शुभ्रैः स्वेष्वनीकेष्ववस्थिताः ॥ २७
गजा रथाः पदाताश्च तुरगाश्च विशां पते ।
व्यतिष्ठन्वागुराकाराः शतशोऽथ सहस्रशः ॥ २८
ध्वजा बहुविधाकारा व्यदृश्यन्त समुच्छ्रिताः ।
स्वेषां चैव परेषां च द्युतिमन्तः सहस्रशः ॥ २९
काञ्चना मणिचित्राङ्गा ज्वलन्त इव पावकाः ।
अर्चिष्मन्तो व्यरोचन्त ध्वजा राज्ञां सहस्रशः ॥ ३०
महेन्द्रकेतवः शुभ्रा महेन्द्रसदनेष्विव ।
संनद्धास्तेषु ते वीरा ददृशुर्युद्धकाङ्क्षिणः ॥ ३१
उद्यतैरायुधैश्चित्रास्तलबद्धाः कलापिनः ।
ऋषभाक्षा मनुष्येन्द्राश्चमूमुखगता बभुः ॥ ३२

C 6 621
B 6 16 14
K 6 16 14

— $^c$) B D (except D2 5 6) transp तत्र and राजेन्द्र — $^f$) K5 तथा वच· (for तथैव च) — After 24, K3–5 B D S ins

64* दुष्प्रधृष्याणि चास्त्राणि सशस्त्रकवचानि च ।
तत· प्रकाशे सैन्यानि समदृश्यन्त भारत ।
त्वदीयाना परेषा च शस्त्रवन्ति महान्ति च ।

[(L 1) K3 5 D2 अप्रधृष्याणि, Da D5 दुष्प्रधर्षाणि, D3 दुष्प्रदृश्यानि, D6 प्रवेशानि च K3.5 D1 2 6 7 चारूणि, Da D5 चापानि, D3 रूपाणि, S शस्त्राणि (for चास्त्राणि) Cc cites अस्त्राणि K3 5 D2 6 सहस्र-, D3 शस्त्रास्त्र-, D7 शस्त्राणि, S सचाप- — (L 3) K5 स्वनवति (for शस्त्र°)]

25 = (var) 6 18 5 — In K4, 25$^{ab}$ is lost on a damaged fol — $^a$) B1 ततो K1 D6 T2 नागरथा°, G2 नागा रथै° — $^b$) Some N MSS °परिस्कृता; D3 °विभूषिता — $^c$) Da विराज° S भ्राजमाना व्य(T2 द्य)दृश्यत — After 25, D7 ins (cf 37$^{ab}$)·

65* सनाहा· समदृश्यन्त स्वेष्वनीकेष्ववस्थिता· ।

26 $^a$) G3 तथा°, M4 तदा° (for रथा°) K2 D1 3 7 °कानि दृश्यते, K4 °का नादृश्यत, K5 °कान्य दृश्यते — $^b$) T1 G1 3 णि च (for °णीव) — $^d$) M1 मे (for ते) K1 पूर्णचद्र° (sic)

27 $^a$) K1 नृष्टि°, K2 3 5 D2 T1 G2–4 यष्टि°, B2 Da D3 5 इषु°, M4 मुष्टि° T2 धनुर्वराभि कवचैर् — $^c$) M योधा M4 उग्रै· (for शुभ्रै·) — $^d$) = 37$^b$ K3.4 B Da Dn D1 2 5 6 T2 तेष्व-नीकेष्वव°, K5 D3 स्वे(K5 ते)ष्वनीके व्यव°, M4 स्वनीकेषु व्यव°

28 $^a$) K5 गजा रथा[] पताकाश्च, B D (except D1–3.7) S गजा· पदाता (T G3 4 M4 °ति) रथिनस् — $^b$) K4 damaged Da D1 5 7 T1 G4 तुरगाश्च — $^c$) Da1 अतिष्ठन्, Cc सर्वतो (for व्यति°) S दारुणा°, Ca c d वागुरा° (as in text) Cv as in text

29 Ś1 K0–2 T2 om (hapl) 29–30 — $^a$) = 6 18 6$^a$ — $^b$) K3 5 D2 दृश्यते समुपस्थिता·, Da1 °श्यत समुत्थिता·, D1 दृश्यते स समुच्छ्रिता·, D6 °श्यत समुच्चका·

30 Ś1 K0–2 5 (hapl) T2 om 30 (for Ś1 K0–2 T2, cf v l 29) With 30$^{ab}$, cf 6 18 6$^{cd}$ — $^a$) D7 °ना मणिरत्नाश्च, S (T2 om) मणिकांचन-चित्रागा — $^b$) S (T2 om) ज्वलिता K3 पर्वता· (for पावका·) — $^c$) K4 D1 व्यदृश्यत, Da D5 M1–3 व्यराजत — $^d$) B4 Dn1 गजारोहा·, Dn2 D4 3 ध्वजारोहा, T1 G M4 ध्वजा राजन् (for ध्वजा राज्ञा)

31 31$^{ab}$ = 6 18 7$^{cd}$ — $^a$) B1 शुद्धा (for शुभ्रा) D6 महेंद्रकेतनरुचो — $^b$) M2 °भवने° (for सदने°) — K2 om 31$^c$–34$^b$ — $^c$) Ś1 K0 शूरा (for वीरा) B Dn D4 3 सनद्धास्ते प्रवीराश्च, Da D5 °द्धास्ते सुवीराश्च, D7 °द्धास्ते महावीरा

32 = (var) 6 18 9 K2 om 32 (cf v l 31) Ś1 K0 1 om (hapl) 32–33 — $^a$) K3 5 Da1 (before corr) as Dn2 D3–5 3 S (except T2 G3 M2) चित्रैस्, D2 तीक्ष्णैस् — $^b$) Da1 Dn2 °वद्धा·-, D2 वधा·, Co °बद्धा· (as in text) B4 पता-

शकुनिः सौबलः शल्यः सैन्धवोऽथ जयद्रथः ।
विन्दानुविन्दावावन्त्यौ काम्बोजश्च सुदक्षिणः ॥ ३३
श्रुतायुधश्च कालिङ्गो जयत्सेनश्च पार्थिवः ।
बृहद्बलश्च कौशल्यः कृतवर्मा च सात्वतः ॥ ३४
दशैते पुरुषव्याघ्राः शूराः परिघबाहवः ।
अक्षौहिणीनां पतयो यज्वानो भूरिदक्षिणाः ॥ ३५
एते चान्ये च बहवो दुर्योधनवशानुगाः ।
राजानो राजपुत्राश्च नीतिमन्तो महाबलाः ॥ ३६
संनद्धाः समदृश्यन्त स्वेष्वनीकेष्ववस्थिताः ।
बद्धकृष्णाजिनाः सर्वे ध्वजिनो मुञ्जमालिनः ॥ ३७
सृष्टा दुर्योधनस्यार्थे ब्रह्मलोकाय दीक्षिताः ।
समृद्धा दश वाहिन्यः परिगृह्य व्यवस्थिताः ॥ ३८
एकादशी धार्तराष्ट्री कौरवाणां महाचमूः ।
अग्रतः सर्वसैन्यानां यत्र शांतनवोऽग्रणीः ॥ ३९
श्वेतोष्णीषं श्वेतहयं श्वेतवर्माणमच्युतम् ।
अपश्याम महाराज भीष्मं चन्द्रमिवोदितम् ॥ ४०
हेमतालध्वजं भीष्मं राजते स्यन्दने स्थितम् ।
श्वेताभ्र इव तीक्ष्णांशुं ददृशुः कुरुपाण्डवाः ॥ ४१
दृष्ट्वा चमूमुखे भीष्मं समकम्पन्त पाण्डवाः ।
सृञ्जयाश्च महेष्वासा धृष्टद्युम्नपुरोगमाः ॥ ४२

---

किन॰, Cc कलापिन॰ ( as in text ) — c) K3 5 D2 8 समक( K5 ॰का )क्षा ; Da1 ऋषभवृक्षा॰ ( sic ) S ऋषभा इव गर्जंतो — d) D8 चमूमुखनता ; S नृपा॰ सेनामुखे ( M4 ॰मुख ) B3 भुव॰, T2 M4 बहु ( for वभु॰ )

33 Ś1 K0–2 om 33 ( cf v l 31, 32 ) — a) T1 G4 सबल॰ ( for सौबल॰ ) D8 ( marg *sec m* as in text ) T2 चैव ( for शल्य ) — b) K3–5 B Da Dn D2 3 5 8 श्चावत्योथ, D1 कैकेयोथ, D6 T2 सैंधव श्च — c) = 6 17 $37^{c}$ K3–5 B D ( except D1, 6 7 ) ॰विंदौ ( K5 ॰दा ) कैकेया॰, T2 ॰विंदौ चावत्यौ ❀ Co श्चावन्त्य इति । व्यवहितयोर्विन्दानुविन्दयोर्विशेषणमेक-वचनं च । समुदायापेक्षमुभयोरेकाक्षौहिणीपतित्वमाचष्टे । ❀ — d) = 6 17 $26^{b}$ T2 कांभो॰ — For $33^{cd}$, M4 subst

66* भगदत्तो महावीर्य॰ कौसल्यश्च बृहद्रथ ।

34 K2 om $34^{ab}$ ( cf v l 31 ) — a) K4 ॰युध॰ कलिंगोथ, S ॰युश्चाथ कालिंग — b) D7 जयसेनश्च M3–5 कांबो( M5 ॰भो )जश्च सुदक्षिण॰ ( = $33^{d}$ ) — c) K2 बृहद्बनश्च, M3–5 जयत्सेनश्च Ś1 K0–3 D3 M4 कौरव्य ( M4 ॰व्य ), G1 M1–3 5 कौसल्य॰ — d) K1 ॰वर्मश्च K1 साद्वत , D5 सात्वती, D6 शाश्वत॰

35 a) Ś1 K0–3 5 D1 2 6 7 सर्वे ते ( for दशैते ) Co cites पच — b) T2 राजन् ( for शूरा ) — c) S ( mostly ) अक्षो॰ — d) G2 यज्विनो

36 Da D5 om $36^{d}$–$37^{a}$ — d) B2–4 Dn D3 4 8 T G1 3 4 M3 4 महारथा

37 Da D5 om $37^{a}$ ( cf v l 36 ) — a) G2 समृद्धा॰ K3 ॰दृश्यते Ca as in text — b) = $27^{d}$ K3 D2 4 7 तेष्वनीकेष्व॰ ; K5 तेष्वनीके व्यव स्थिता॰ Ca as in text — d) K3 D2 6 ध्वजिनोंबुज-मालिन , K5 धन्विनो युज॰, Dn D4 7 बलिनो युद्ध शालिन॰, D1 ध्वजिनो मुडमालिन॰, D3 ॰नो मुजमेखला , T1 G ॰नो मुंज( T1 G4 दृष्ट )धारिण॰, M3 ( *inf lin* ) 4 ॰नो मुक्तमौलिन॰

38 a) K3 5 D2 स्थिता, K4 B Da2 Dn D1 3–5 7 G1 M1–3 5 हृष्टा, Da1 D5 दृष्ट्वा, D6 मृद्धा ( for सृष्टा ) — b) D3 स्वर्ग॰ ( for ब्रह्म॰ ) T2 ब्रह्मणा कालदीक्षिता॰ — Ś1 K1 G3 om ( hapl ) $38^{cd}$ — c) B Dn2 D7 समर्था, D8 सनद्धा Cc वाहिन्य॰ ( as in text ) Cv as in text — d) Cv परिगृह्य ( as in text )

39 a) K0 एकादशीर्धातराष्ट्री॰ — c) M4 ॰यौधाना ( for ॰सैन्याना ) — d) Ś1 K0–2 D3 येषां ( for यत्र ) Co अग्रणी ( as in text )

40 a) B2 ॰वस्त्र ( for ॰हय ) — b) Ś1 K0–2 श्वेतवर्णं तमच्युत — c) K3 5 D2 प्रपश्यामि, B2 अप श्य मे ( sic )

41 D6 om $41^{a}$–$45^{b}$ — c) Ś1 K0 1 G2 शी ( K0 श्वे )ताशु ; K2 श्वेताश्व, K5 तीरस्थ ( for तीक्ष्णा शु ) — d) K5 कृष्ण॰ ( for कुरु॰ )

42 D6 om 42 ( cf v l 41 ) B Dn D4 8 om ( hapl ) $42^{ab}$ — c) D3 ज़ृभया॰ ( for सृञ्जया॰ ) D8 महेष्वास, T2 महाभागा, G3 महेष्वासौ, M4 महाराज K5 सजयश्च महेष्वासो

जृम्भमाणं महासिंहं दृष्ट्वा क्षुद्रमृगा यथा ।
धृष्टद्युम्नमुखाः सर्वे समुद्विविजिरे मुहुः ॥ ४३
एकादशैताः श्रीजुष्टा वाहिन्यस्तव भारत ।
पाण्डवानां तथा सप्त महापुरुषपालिताः ॥ ४४
उन्मत्तमकरावर्तौ महाग्राहसमाकुलौ ।
युगान्ते समुपेतौ द्वौ दृश्येते सागराविव ॥ ४५
नैव नस्तादृशो राजन्दृष्टपूर्वो न च श्रुतः ।
अनीकानां समेतानां समवायस्तथाविधः ॥ ४६

इति श्रीमहाभारते भीष्मपर्वणि षोडशोऽध्यायः ॥ १६ ॥

## १७

संजय उवाच ।
यथा स भगवान्व्यासः कृष्णद्वैपायनोऽब्रवीत् ।
तथैव सहिताः सर्वे समाजग्मुर्महीक्षितः ॥ १
मघाविषयगः सोमस्तद्दिनं प्रत्यपद्यत ।
दीप्यमानाश्च संपेतुर्दिवि सप्त महाग्रहाः ॥ २
द्विधाभूत इवादित्य उदये प्रत्यदृश्यत ।

C 6 638
B 6 17 3
K 6 17 3

---

43 D6 om 43 (cf v l 41) — [b]) D1 3 इव (for यथा) — [c]) Da1 °म्नस्तया सर्वे — [d]) Ca d समुद्वि° (as in text) K5 D1 M1 5 समुद्विजिजिरे मुहु, D3 °द्विग्ना विचेतस, G2 समसुद्वेजिरे मुहु

44 D6 om 44 (cf v l 41) — [a]) K1 श्रीतुष्टा, K4 भ्राजुष्टा, K5 श्रीर्जुष्टा, B2 श्रीहृष्टा, D1 ता जुष्टा, T2 जुष्टाश्च, G2 निजुपा (sic) — [b]) D1 तत्र (for तव) B D (except D1 2, 7, D6 om) S पार्थिव (for भारत) — [d]) D1 तथा, D2 महत्- (for महा) S °मानिना, M1 (sup lin) °वाहिनीं (for °पालिता) .

45 D6 om 45[ab] (cf v l 41) — [a]) K1 उन्मत्तौ मकरावर्तौ, T1 G4 M5 उद्वृत्तमकरावृत्तौ, G2 3 M1 3 उद्वृत्त(G3 °द्वृतं)मकरावर्तौ — [c]) K5 समपेतौ, Dn D1 6 T2 समवेतौ (for समुपेतौ) — [d]) Ś1 K0-3 दृश्यते B Da2 D4 5 Ca सागराविव दृश्यते (B2 D5 °त, Da2 °त, D4 °ता) S सागराविव विष्टि(T1 G2 4 चेष्टि, G1 3 वेष्टि, M2 विक्षि)तौ

46 [c]) K0 2 अने° (for अनी°) K4 Da D5 Ca समावेश (for समेतानां) — [d]) Ś1 दृष्टो भीष्मो, K0-2 दृष्टपूर्वस्, K3 5 D2 4 7 समुदायस्, K4 B Da Dn D5 कौरवाणा, D1 समुद्वीप, D3 समुद्योगो, Cd समुद्दर्प (for समवायस्) Ś1 D3 6 M यथाविध, T G यथाविधि, Ca तथाविध

Colophon om in K0 1 D6 — Adhy name K3 5 D2 पृतनावर्णन, M धार्तराष्ट्रसेनासमुत्थानकथन —Adhy no (figures, words or both) Da2 D1 5 M1 3-5 17, Dn M2 16 (as in text), T G 15 —Śloka no Dn1 28, Dn2 D5 27 — Aggregate śloka no K5 620, D1 604

### 17

1 Before 1, Ś1 K0 1 ins

67* धृतराष्ट्र ।
उभयो सेनयोस्तत्र दृष्ट्वा च कुरुपाण्डवान् ।
अनिमित्तान्ययो ब्रूहि कुशलो ह्यसि सजय ।

— D6 om 1-17 — [a]) T1 G2 4 M4 यथा च, T2 यथैव, G1 3 यथा हि — [d]) B1 महीक्षिता; T1 G M4 महाग्रहा

2 D6 om 2 (cf v l 1) — [a]) K3 5 तथा विषयग, D3 सर्वाविष°, T2 महाविष°, M1-3 4 मखाविष°, T1 G4 मघाविषयक, Ca c d °विषयग (as in text) D3 मेघावनद्धमाकाशं — [b]) D3 दुर्दिन, T G M4 स्तानित, M1-3 5 तदानीं (for तद्दिन) K1 2 D3 प्रतिपद्यत, B3 D3 G3 M2 5 प्रत्यदृश्यत, Cd °पद्यत (as in text) — [c]) Cc दीप्यमाना (as in text) Ca c सपेतु (as in text), Cd समिलु — [d]) Cc सप्त (as in text) T1 G ग्रहास्तथा, Cc महाग्रहा (as in text)

3 D6 om 3 (cf v l 1) — [a]) K3 द्विधा-

ज्वलन्त्या शिखया भूयो भानुमानुदितो दिवि ॥ ३
ववाशिरे च दीप्तायां दिशि गोमायुवायसाः ।
लिप्समानाः शरीराणि मांसशोणितभोजनाः ॥ ४
अहन्यहनि पार्थानां वृद्धः कुरुपितामहः ।
भरद्वाजात्मजश्चैव प्रातरुत्थाय संयतौ ॥ ५
जयोऽस्तु पाण्डुपुत्राणामित्यूचतुररिंदमौ ।
युयुधाते तवार्थाय यथा स समयः कृतः ॥ ६
सर्वधर्मविशेषज्ञः पिता देवव्रतस्तव ।
समानीय महीपालानिदं वचनमब्रवीत् ॥ ७
इदं वः क्षत्रिया द्वारं स्वर्गायापावृतं महत् ।
गच्छध्वं तेन शक्रस्य ब्रह्मणश्च सलोकताम् ॥ ८
एष वः शाश्वतः पन्थाः पूर्वैः पूर्वतरैर्गतः ।
संभावयत चात्मानमव्यग्रमनसो युधि ॥ ९
नाभागो हि ययातिश्च मान्धाता नहुषो नृगः ।
संसिद्धाः परमं स्थानं गताः कर्मभिरीदृशैः ॥ १०
अधर्मः क्षत्रियस्यैष यद्व्याधिमरणं गृहे ।
यदाजौ निधनं याति सोऽस्य धर्मः सनातनः ॥ ११
एवमुक्ता महीपाला भीष्मेण भरतर्षभ ।
निर्ययुः स्वान्यनीकानि शोभयन्तो रथोत्तमैः ॥ १२
स तु वैकर्तनः कर्णः सामात्यः सह बन्धुभिः ।

---

भूतम्, D2 °कृत, Cc °भूत (as in text) D3 विगतां-शुस्तथादित्य — [b]) Dn2 उदग्रे, D8 उदित. Ko पुत्र-दृश्यत (sic), Da D5 प्रत्यपद्यत — [c]) G1 2 M1. 3 4 ज्वलत्या Cd cites शिपा S राजन्, Cc भूयो (as in text). — [d]) Co भानुमान् (as in text) B1-3 Dn D1. 3 4 8 रवि, G2 M2 भुवि (for दिवि). K3 5 D2 दृश्यते भानुमान्दिवि

4 D6 om. 4 (cf. v l 1) — [a]) K3 5 D3 7 ववासिरे, D1 चकाशिरे, G2 विवाशिरे Co d दीप्तायां (as in text). T2 ववाशिरे ह दीप्ता वा — [b]) M4 दिवि (for दिशि) K5 °वासता — [c]) कांक्षमाणा (for लिप्स°). — [d]) B8 °कर्दमा

5 D6 om. 5 (cf. v l 1). — [b]) D3 T2 कुरु वृद्ध (for वृद्ध कुरु-). — [c]) T1 G4 M4 भारद्वाजा° D8 भारद्वाज कृपश्चैव — [d]) Ko 3 D2 सयुतौ; K5 समते; D1 संगतौ, S दसितौ; Cd संयतौ (as in text)

6 D6 om 6 (cf v l. 1) — [c]) T1 वधा° (for तवा°) — [d]) T2 युधा (for यथा) Ca समय (as in text) D2 यथा स सजय ध्रुव

7 D6 om 7 (cf v l 1) — [a]) K3 M5 °पज्ञ

8 D6 om 8 (cf v l 1) — [a]) D3 इह व, M2 इम व — [b]) K1 5 G3 °यापवृतं, B3 °च प्रवृत — [c]) K5 गच्छतस्तेन सक्रम्य. — [d]) Ca ब्रह्मण (as in text) B Da Dn D1 4 5 8 °ण सहलोकता

9 D6 om 9 (cf v l 1) — [a]) K4 य एव, M2 स एव (for एव व) — [b]) D7 सर्वे (for पूर्वै) K1. 5 T1 G M °रं गत, K3 D2 T2 °रं कृत, K4 °र कृत; B Da Dn D4 5 7 8 °रै कृत D3 पूर्वैर्जुष्टो नराधिपै — [c]) Ca. c सभावयध्व K1 M3 5 वात्मा°, D7 आत्मा° (for चात्मा°) K3 5 D2 3 सम भावयतात्मानम्; K4 B Da Dn D1 4 5 8 संभावयध्व-मात्मानम्, T1 G4 समाधाय तथात्मानम्, G2 स भवाय तथात्मानम् — [d]) S (M1 inf lin as in text) भुवि (for युधि)

10 D6 om 10 (cf v l 1) — [a]) K4 नहुषो (for नाभागो) B D (except D1. 2, D6 om) S [s]थ (for हि) — [b]) K3. 5 Da1 D2 नहुषो; K4 नाभागो (for नहुषो) Ś1 K Dn (Dn2 m as in text) D2 3 नृप, T2 ग्रह — After 10[ab], D8 ins

68* अर्जुन सगरो वैन्यो ये चान्ये क्षत्रियोत्तमा ।

— [c]) D2 संविद्धा T2 परमाज्ञानं

11 D6 om 11 (cf. v l 1) — With 11[ab], cf B 12 97 23[ab] — [a]) Da1 M5 अधर्म K4 °र्म क्षत्रियाणां हि — [b]) D7 नृपा (for गृहे) — B2 om 11[cd] — [c]) S युद्धे तु (for यदाजौ) B3 Dn2 यदयोनिधनं याति Cn cites अयोनिधन

12 D6 om. 12 (cf. v l 1) — [b]) D7 भरतो त्तम — Ś1 Ko M2 om (hapl) 12[c]-13[d] — [c]) K5 T2 G1 M (M2 om) तान्य° (for स्वान्य°) — [d]) T1 G2 4 रथोत्तमा

13 Ś1 Ko D6 M2 om 13 (cf v l 1, 12)

न्यासितः समरे शस्त्रं भीष्मेण भरतर्षभ ॥ १३
अपेतकर्णाः पुत्रास्ते राजानश्चैव तावकाः ।
निर्ययुः सिंहनादेन नादयन्तो दिशो दश ॥ १४
श्वेतैश्छत्रैः पताकाभिर्ध्वजवारणवाजिभिः ।
तान्यनीकान्यशोभन्त रथैरथ पदातिभिः ॥ १५
भेरीपणवशब्दैश्च पटहानां च निस्वनैः ।
रथनेमिनिनादैश्च बभूवाकुलिता मही ॥ १६
काञ्चनाङ्गदकेयूरैः कार्मुकैश्च महारथाः ।
भ्राजमाना व्यदृश्यन्त जङ्गमाः पर्वता इव ॥ १७
तालेन महता भीष्मः पञ्चतारेण केतुना ।
विमलादित्यसंकाशस्तस्थौ कुरुचमूपतिः ॥ १८
ये त्वदीया महेष्वासा राजानो भरतर्षभ ।
अवर्तन्त यथादेशं राजञ्शांतनवस्य ते ॥ १९
स तु गोवासनः शैब्यः सहितः सर्वराजभिः ।
ययौ मातङ्गराजेन राजार्हेण पताकिना ।
पद्मवर्णस्त्वनीकानां सर्वेषामग्रतः स्थितः ॥ २०
अश्वत्थामा ययौ यत्तः सिंहलाङ्गूलकेतनः ।
श्रुतायुश्चित्रसेनश्च पुरुमित्रो विविंशतिः ॥ २१

C 6 657 B 6 17 21 K 6 17 21

— a ) D7 न ( for स ) B4 °तैनि — c ) T1 G2 4 स्यासित ( for न्यासित )

14 D6 om 14 ( cf v l 1 ) — a ) Ś1 K0-2 अतीत°, S व्यपेत° — b ) M3 पावका — d ) Da1 दिशश्च ते, Dn1 D2 8 दिशो दिश

15 D6 om 15 ( cf v l 1 ) — a ) K4 Da1 S श्वेतच्छत्रै — b ) K1 भुजवारण°, Da1 ( before corr ) a2 D5 ध्वजवानर° — c ) B Dn D1. 8 M5 °कानि शोभते — d ) K4 Da D5 राजन्नथपदा°, B Dn D4 8 गजैरथ पदा°, D8 तथा रथपदा°, S रथैश्च स पदा°

16 D6 om. 16 ( cf v l 1 ) — a ) K0 भीरी S °शखै( G1 3 °संघै )श्च ( for °शब्दैश्च ) — b ) K4 B D ( except D1 2 7, D6 om ) S दुंदुभीनां ( for पटहाना ) K1 om. from ना up to महा in 17[b] A few MSS निःस्वनै — d ) Ś1 K0 2 बभूव लुलिता, B8 °वाक्षोलिता, D8 °व क्षुभिता, S °वालोलिता

17 D6 om 17 ( cf. v l 1 ) K1 om up to महा in 17[b] ( cf v l 16 ) — b ) T2 महारथै — c ) K4 B Da Dn D1 4 5 8 G2 8 व्यराजत, D8 T G1. 4 M व्यरोचत — d ) K3 5 D2 सशृगा, K4 B Da Dn D1 3-5 7 8 S साश्रय ( for जङ्गमा ) K0-2 इव पर्वता ( by transp )

18 a ) B8 तानेव ( for तालेन ) B2 राजन् ( for भीष्म ) — b ) K1 3 5 D1 8 G1-3 °तालेन, D2 °मालेन, D7 °तोरण, M4 ( *sup lin* ) °कारेण Ca d cite तारा Cc cites पचतार, Cop °ताल — d ) M4 तथा ( for तस्थौ ) K1 गुरु ( for कुरु ) B Da D5 7 S °मुखे, Dn D4 6 8 °परि ( for °पति )

19 a ) S ( except M2 ) महात्मानो ( for महेष्वासा ) — D6 om ( hapl ) 19[b]-22[c]. — After 19[ab], Ś1 K0-3 ins ( K0 2 om post half, see below )

69* पुत्राश्च तव राजेन्द्र सारोहा सरथा गजै ।

— K0 2 om from the post half of 69* up to 20[c] — c ) K3 4 Da1 Dn2 D8 आवर्तंत Ca c यथादेश ( as in text ) K5 S यथादेशमवर्तत ( by transp ) — d ) K1 राजा, S राज्ञ ( for राजन् ) B4 ह; D1 च ( for ते )

20 K0 2 D6 om. 20 ( cf v l 19 ) — a ) B8 मत्तगोधासन, S यस्तु ( M2 स तु ) गोपायन ( T2 °ते, G2 °नि ) Ca c d cite गोवासन ( as in text ) D8 सैन्ये, G2 शल्य ( for शैब्य ) Cv शत्रुगावसन सैन्य ( sic ) — b ) Ś1 K1 सह राजभि S सर्वमागधै — After 20[ab], M4 reads 21[cd], *repeating* it in its proper place — c ) D8 मतग° — d ) K0 5 राजार्हेन पता°, K3 राजा हेमपता°, T1 G4 र्हेण पदातिना — e ) G2 पत्र°, Co v पद्म° ( as in text )

21 D6 om 21 ( cf v l 19 ) — a ) Ś1 K0 1 राजा; K3 5 D2 Cv तस्मिन्, D1 7 तत्र, D8 यत ( for यत्त ) — b ) K3 4 B Da Dn D1 4 5 8 °के( B2 °हे )तुना, S °केतुमान् Cc cites सिंहलागूल — c ) K3-5 B ( except B8 ) D ( except D8 ) M श्रुतायुधश्चित्रसेन

शल्यो भूरिश्रवाश्चैव विकर्णश्च महारथः ।
एते सप्त महेष्वासा द्रोणपुत्रपुरोगमाः ।
स्यन्दनैर्वरवर्णाभैर्भीष्मस्यासन्पुरःसराः ॥ २२
तेषामपि महोत्सेधाः शोभयन्तो रथोत्तमान् ।
भ्राजमाना व्यदृश्यन्त जाम्बूनदमया ध्वजाः ॥ २३
जाम्बूनदमयी वेदिः कमण्डलुविभूषिता ।
केतुराचार्यमुख्यस्य द्रोणस्य धनुषा सह ॥ २४
अनेकशतसाहस्रमनीकमनुकर्षतः ।
महान्दुर्योधनस्यासीन्नागो मणिमयो ध्वजः ॥ २५
तस्य पौरवकालिङ्गौ काम्बोजश्च सुदक्षिणः ।
क्षेमधन्वा सुमित्रश्च तस्थुः प्रमुखतो रथाः ॥ २६
स्यन्दनेन महार्हेण केतुना वृषभेण च ।
प्रकर्षन्निव सेनाग्रं मागधश्च नृपो ययौ ॥ २७
तदङ्गपतिना गुप्तं कृपेण च महात्मना ।
शारदाभ्रचयप्रख्यं प्राच्यानामभवद्बलम् ॥ २८
अनीकप्रमुखे तिष्ठन्वराहेण महायशाः ।
शुशुभे केतुमुख्येन राजतेन जयद्रथः ॥ २९
शतं रथसहस्राणां तस्यासन्वशवर्तिनः ।

---

22 D6 om $22^{abc}$ (of v l 19) —$^{a}$) G1 3 शल्यो —$^{b}$) G1-3 महाबल — K4 om $22^{ef}$ —$^{e}$) K3 5 D2 °वैरनागैश्च, B Da Dn D1 3-5, 7 8 M1-3 5 °वैरव( B1 B3 °वैद्धव, Da1 °वैरम )र्माणो, T G M4 °वीरक( T2 G1 °वरक-, G2 °वीरव )र्माणो —$^{f}$) K3 5 Da1 (by corr ) Dn D2 4 8 S °स्यासन्पु ( K5 °स्यासीत्पु)रोगमा

23 $^{a}$) D3 6 एषामपि B3 महायोधा, B4 D7 T1 G4 महेष्वासा, M4 महोत्साहा, Cv महोत्सेधा (as in text) —$^{b}$) D6 शोभयंति D8 महारथान्, T2 G1 3 रथोत्तमा —$^{c}$) B4 राजमाना K4 B1 4 Da Dn D3-5 8 T2 M1 3-5 व्यरोचत, B2 3 व्यराजत, G1-3 त्वदृश्यत —$^{d}$) K5 D2 G2 °महाध्वजा, D6 7 T3 G1 3 °मयध्वजा; T1 G4 °महद्ध्वजा, M5 °महारथा

24 $^{a}$) K1 °मयी वेद, K2 3, 5 B D T2 G1 M1-3 5 °मयी ( K3 5 D2 3 °मया ) वेदी, K4 °मयी वेदी, G2 °मयी वेष्टि —$^{b}$) K1 4 Da1 T2 G3 °षिता — Ś1 Ko-2 om $24^{c}$-$25^{b}$ —$^{c}$) K5 केतूराचार्य°

25 Ś1 Ko-2 om $25^{ab}$ (cf v l 24) —$^{a}$) G2 अनेन शत° —$^{b}$) Cc अनुकर्षण D6 अनीकानि विकर्षत — After $25^{ab}$, M4 reads 27-28 —$^{c}$) Ś1 Ko-2 राज्ञो, Dn2 M5 महा (for महान्) —$^{d}$) K5 नागे, T1 G2-4 अग्रे (for नागो)

26 $^{a}$) Da D5 यस्य Ś1 K3 5 D2 पौरवकालिंगो ( K3 °ग्यो, K5 D2 °ग्यौ ), K4 B Dn D1 4 6 8 M2 पौरवकालिंग, Da D3 5 T1 G M1 3-5 पौरव कालिंगा ( M5 °ग ) —$^{b}$) = 6 16 $33^{d}$ Ś1 Ko काम्भोजश्च, K1 काभूज°, B3 Da D3 5 T1 G काबोजाश्च K3 4 B1-3 Da1 D3 5 6 T1 G सुदक्षिणा, K5 सुदारुण B4 Dn D1 4 8 कांबोजा ससुदक्षिणा —$^{c}$) K4 B Da Dn D1 3 4 8 T G2 4 M4 च शल्यश्च, D7 सुधन्वा च, G1 3 M1-3 5 च शैव्यश्च (for सुमित्रश्च), K1 D2 °धन्वाश्च मित्रश्च —$^{d}$) D6 तस्य, G1 3 स्थिता (for तस्थु ) M2 प्रहरतो, M4 प्रथमतो D7 नृपा

27 M4 reads 27-28 after $25^{ab}$ —$^{b}$) K4 मृषभेण, Da1 वृषणेन —$^{c}$) Ś1 Ko-2 प्रकर्षंश्चैव, K3 5 °षंति च, B4 Dn D1 3 4 8 M3 °षन्नेव, D6 प्रहसन्निव, M2 5 प्रहर्ष° —$^{d}$) K4 B Dn D4 6-8 T G1 3, 4 M Cc मागधस्य, Da D5 Ca d माधवस्य- Ko 2 रिपून्, K4 B D (except D1-3) T G1 3 4 M Cop कृपो (for नृपो) G2 अगदेशाधिपो युवा

28 For sequence in M4, cf v l 27 —$^{a}$) D6 युक्त (for गुप्त ) —$^{b}$) K1 कृपेन, Dn D4 8 द्रुमेण (for कृपेण) B Dn D3-5 8 S मनस्विना (for महात्मना ) —$^{c}$) Ś1 Ko °दाभ्रमयप्रख्य, K1 °दाख्यामय°, K2 3 5 Dn D2-4 6 8 °दाभ्रघनप्रख्य ( K3 D2 °क्ष ), B °दाम्बुधरप्रख्य, Da °दाम्बुघन°, D5 शरदा त्ववनप्रख्य, S °दाभ्रप्रतीकाश —$^{d}$) D1 पुत्राणाम् (for प्राच्यानाम् ) B Da Dn D4 5 8 °ना सुमहद्बलं, M4 व्यरोचत महद्बल

29 $^{a}$) K5 तस्मिन्, D6 दृष्टे (for तिष्ठन् ) —$^{b}$) Da1 D3 G1 3 M5 वराहेण, Dn1 D3 4 7 वाराहेण; Cc वराहेण (as in text) —$^{d}$) K4 राजते च, G2 राजस्तेन, M4 जामाता ते, Cc राजतेन (as in text) Ś1 Ko-2 वलेन चतुरंगिणा

30 $^{a}$) Ś1 Ko-2 शत शतसह°, D6 शत दशसह°, T1 G1 3 4 M2 4 शत रथा सहस्राणा, M1 3 5 शत रथसहस्राणि —$^{b}$) D2 (orig ) °वर्तिना (by corr °न), Cd °वर्तिन (as in text) —$^{c}$) S अष्टौ ( M2 3 5 °ष्ट ) दतिसह° —$^{d}$) B2 3 Da Dn1

अष्टौ नागसहस्राणि सादिनामयुतानि षट् ॥ ३०
तत्सिन्धुपतिना राजन्पालितं ध्वजिनीमुखम् ।
अनन्तरथनागाश्वमशोभत महद्बलम् ॥ ३१
षष्ठ्या रथसहस्रैस्तु नागानामयुतेन च ।
पतिः सर्वकलिङ्गानां ययौ केतुमता सह ॥ ३२
तस्य पर्वतसंकाशा व्यरोचन्त महागजाः ।
यन्त्रतोमरतूणीरैः पताकाभिश्च शोभिताः ॥ ३३
शुशुभे केतुमुख्येन पादपेन कलिङ्गपः ।
श्वेतच्छत्रेण निष्केण चामरव्यजनेन च ॥ ३४
केतुमानपि मातङ्गं विचित्रपरमाङ्कुशम् ।
आस्थितः समरे राजन्मेघस्थ इव भानुमान् ॥ ३५
तेजसा दीप्यमानस्तु वारणोत्तममास्थितः ।
भगदत्तो ययौ राजा यथा वज्रधरस्तथा ॥ ३६
गजस्कन्धगतावास्तां भगदत्तेन संमितौ ।
विन्दानुविन्दावावन्त्यौ केतुमन्तमनुव्रतौ ॥ ३७
स रथानीकवान्व्यूहो हस्त्यङ्गोत्तमशीर्षवान् ।
वाजिपक्षः पतन्नुग्रः प्राहरत्सर्वतोमुखः ॥ ३८
द्रोणेन विहितो राजन्राज्ञा शांतनवेन च ।
तथैवाचार्यपुत्रेण बाह्लीकेन कृपेण च ॥ ३९

C 6 675
B 6 17 39
K 6 17 39

इति श्रीमहाभारते भीष्मपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

---

(marg) D4 हयानाम्, Dn1 रथानाम्, M1 सादीनाम्, Cd सादिनां (as in text) K3 5 Da (Da1 damaged) D2 5 6 च (for षट्) Cd cites षडयुतानि

31 $^a$) G3 त (for तत्) Ś1 om from न्पालित up to नाम in 32$^b$ K3-5 B D राज्ञा (for राजन्) — $^b$) K0 युतेन, K1 पुतेन, K5 पालिता, G3 M1 3. 4 पालित· K0-2 समतिष्ठत, K3 5 D2 ध्वजिनीमुखे, Cc °मुखम् (as in text) T2 पालितध्वजिनीमुख· — K0-2 om 31$^c$-32$^b$ — $^{cd}$) D6 अत्यतरथ° M4 महाबल (for महद्बलम्) Da D5 °रथनागाश्वस(sic)शोभत मह°

32 K0-2 om 32$^{ab}$, Ś1 om up to °नाम in 32$^b$ (cf v l 31) — $^a$) D1 ययौ (for षष्ठ्या) D2 S (except G1) °सहस्राणा, D6 °सहस्रेण (for °सहस्रैस्तु) — $^b$) D2 तु (for च) D6 °युतैस्त्रिभि·, T2 °युतानि च — $^c$) Ś1 K0 पीत·, K1 येना (sic), D3 G2 पत्ति, Cc पति· (as in text) Cc सर्व° (as in text) — $^d$) Ca c d केतुमता (as in text) K2 हत (for सह)

33 $^b$) M4 प्रारो° (for व्यरो°) — $^c$) K0-2 यत्र तोरणतूणीरै, Da1 यन्त्रतोरण°, D1 6 यत्र तोमरतूणीरै, S यत्र(M2 यत्र)तोमरतूणीर (T2 °णीभि·) — $^d$) Dn D3 4 8 पताकाश्च (D3 °भि·) सुशोभिता·, T1 G °भिरलकृता

34 $^a$) K1 °मुखेन — $^b$) K2 पादकेन, K3 B D S पावकेन K4 B Da Dn D1 4-6 8 कलिंगक·, D3 S कलिंगराट् (T2 °वान्, G2 °कान्) — $^c$) After श्वे, K1 *repeats* 29$^d$-31$^a$, 32$^c$-34$^a$ Da1 D2 Ca c निष्केन; M1-3 5 शुभ्रेण (for निष्केण) Cd cites निष्क — $^d$) Ś1 K0-2 पादप° (for चामर°) D2 वै (for च)

35 $^b$) G3 M1. 4 विचित्र पर° — $^c$) D3 रमते (for समरे) D6 7 S (except T G4) राजा (for राजन्). — $^d$) Cc भानु° (as in text)

36 $^a$) T2 °मानस्य — $^c$) K1 °दत्तो, Da1 D3 M5 °दत्तौ D3 राजन् — $^d$) K4 यथा शक्रस्तथैव स·

37 B1 2 om 37 — $^b$) K1 °वृतेन T1 G4 समतौ — $^d$) K5 केतूमतम् D5 अनुत्तमौ, Ca अनुव्रतौ (as in text).

38 $^a$) G3 तथा° (for रथा°) D2 व्यूहो Cv as in text — $^b$) K2 4 5 B D (except D2) हस्त्यगो नृप°, D2 (marg sec m) °त्तमवीर्यवान्, T2 °त्तमहर्षयात्, Cd as in text Cc cites नृपशीर्षवान् — $^c$) D6 वाजिपत्यु·, Cc °पक्ष· (as in text) K3 D2 6 7 S पदात्युग्र (M2 °ग्रं), K4 B2 4 Da Dn D1. 4 5 8 Ca पतत्युग्र·, B1 पदानुग्र·, D3 पत्तिपाद· Cc cites पतति K5 वाजिपदात्युग्रमुख — $^d$) K0 2 5 प्राहरन्, K3 D7 T2 M2 5 प्रहरन्, K4 B Da Dn D1 4 5 8 T1 G M1. 3 4 प्रहसन्, D6 प्राहसन् G1-3 °मुख

39 B2 om 39$^{ab}$ — $^a$) K1 विहतो, T2 सहितो D7 व्यूहो (for राजन्) — $^d$) Ś1 K0 Da1 D6 7 M4 वाह्लिकेन, K1 वह्लिकेण, D8 शल्येन च K1 कृपेन, G3 नृपेन D3 वै

# १८

संजय उवाच ।

ततो मुहूर्तात्तुमुलः शब्दो हृदयकम्पनः ।
अश्रूयत महाराज योधानां प्रयुयुत्सताम् ॥ १
शङ्खदुन्दुभिनिर्घोषैर्वारणानां च बृंहितैः ।
रथानां नेमिघोषैश्च दीर्यतीव वसुंधरा ॥ २
हयानां हेषमाणानां योधानां तत्र गर्जताम् ।
क्षणेन खं दिशश्चैव शब्देनापूरितं तदा ॥ ३
पुत्राणां तव दुर्धर्ष पाण्डवानां तथैव च ।
समकम्पन्त सैन्यानि परस्परसमागमे ॥ ४
तत्र नागा रथाश्चैव जाम्बूनदविभूषिताः ।
भ्राजमाना व्यदृश्यन्त मेघा इव सविद्युतः ॥ ५
ध्वजा बहुविधाकारास्तावकानां नराधिप ।
काञ्चनाङ्गदिनो रेजुर्ज्वलिता इव पावकाः ॥ ६
स्वेषां चैव परेषां च समदृश्यन्त भारत ।
महेन्द्रकेतवः शुभ्रा महेन्द्रसदनेष्विव ॥ ७
काञ्चनैः कवचैर्वीरा ज्वलनार्कसमप्रभैः ।
संनद्धाः प्रत्यदृश्यन्त ग्रहाः प्रज्वलिता इव ॥ ८
उद्यतैरायुधैश्चित्रैस्तलबद्धाः पताकिनः ।

---

Colophon. — *Adhy name* Ko भीष्मनिर्याणं, K3 5 D2 सेनानिर्या( D2 °र्मा )ण, D6 सम्रामोद्यम°, M कुरुचमूवर्णन — *Adhy no* ( figures, words or both ) Da2 D1 5 M1 3-5 18, Dn2 M2 17 ( as in text ), T G 16 — *Śloka no* Dn1 D5 40, Dn2 38 — *Aggregate śloka no* K5 661, D1 644

## 18

1 $^{a}$) T G2-4 मुहूर्तं K3 5 D2 3 6 तुमल° — $^{d}$) G1 M1 3-5 यौधाना K5 प्रययु° शतं; D6 प्रयुयुध्यतां, D7 च युयुत्स°

2 $^{a}$) Ko-2 °निर्घोष, K4 B D ( except D1-3. 7 ) T1 °घोषैश्च — $^{b}$) D3 निस्वनै° ( for बृंहितै ) — $^{c}$) B D ( except D1 2 7 ) S नेमिघोषै रथाना च ( by transp ) — $^{d}$) Ko-2 M5 दीर्यतेव

3 $^{a}$) B3 D7 हेषमाणाना, G3 हेषिताना च. — $^{b}$) M यौधाना K4 B D ( except D1 2 ) S चैव ( for तत्र ) — $^{c}$) M3 क्षणेनैव ( for °न ख ) K3 5 D1 2 6 दिशो भूमि, S ततो ( T1 G4 °था, G2 °दा ) भूमि ( for दिशश्चैव ) K4 B Da Dn D4 5 7 8 क्षणेनैव नभो भूमि° ( Da2 D4 5 °भूमी ) — K1 om ( hapl ) 3$^{d}$-5$^{a}$ — $^{d}$) B Da D4 5 8 M4 °पूरिते ( B3 °ता, M4 °तौ )

4 K1 om 4 ( cf v l 3 ) — $^{a}$) G2 राजेंद्र ( for दुर्धर्ष ) — $^{c}$) K3 5 Da Dn2 D1 3 M3 5 °कपत

5 = ( var ) 6 16 25 — K1 om 5$^{a}$ ( cf v l 3 ) — $^{a}$) B2 D3 M2 नाग- ( for नागा ) — $^{c}$) Ś1 K1 2 प्रेंग्रमाणा ( for भ्राजमाना ) D3 प्रदृश्यते

$^{a}$) = 6 16 29$^{a}$ D6 ध्वजान् K4 ध्वजा बहुविधा भाति, G2 ध्वजाश्च विविधाकारास् — $^{b}$) K4 तारकाणां — With 6$^{cd}$, cf 6 16 30$^{ab}$ — $^{c}$) D3 राजन् ( for रेजुर् ) — $^{d}$) K3 5 D2 6 transp इव and पावका° D7 पावका ज्वलिता इव ( by transp ).

7 7$^{cd}$ = 6 16 31$^{ab}$ — $^{c}$) Ś1 Ko-2 °केतना°.

8 $^{b}$) K3 D2 ज्वलिताग्निसमप्रभै°, B3 ज्वलनार्कज्वलप्रभा, D1. 6 ज्वलितार्कसमप्रभै° — After 8$^{ab}$, B3 S ins 70* — B2 om 8$^{cd}$ — $^{c}$) K3 D2 °द्धाश्च प्रदृश्यते, K4 B ( B3 om ) Da Dn D4 5 7 8 S °द्धा समदृ( T2 इव दृ )श्यत — $^{d}$) K4 ग्रहा ******, B ( B3 om ) Da D5 Ca ग्रहार्क( Da1 ग्रहद्यु )-ज्वलनप्रभा°, Dn D4 7 8 ज्वलनार्कसमप्रभा° — K4 B1 2 4 Da Dn D4 5 7 8 ins after 8$^{cd}$ B3 ( which om 8$^{cd}$ ) S ins after 8$^{ab}$

70* कुरुयोधवरा राजन्विचित्रायुधकार्मुका° ।
[ M कुरु( M5 क्रूर )यौधवरा ]

9 = ( var ) 6 16 32 — $^{a}$) K1 उदितै°, D3 उद्यानै°, T1 G M4 उज्ज्वलै°, M1 ( *inf lin* as in

ऋषभाक्षा महेष्वासाश्चमूमुखगता बभुः ॥ ९
पृष्ठगोपास्तु भीष्मस्य पुत्रास्तव नराधिप ।
दुःशासनो दुर्विषहो दुर्मुखो दुःसहस्तथा ॥ १०
विविंशतिश्चित्रसेनो विकर्णश्च महारथः ।
सत्यव्रतः पुरुमित्रो जयो भूरिश्रवाः शलः ॥ ११
रथा विंशतिसाहस्रास्तथैषामनुयायिनः ।
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ॥ १२
शाल्वा मत्स्यास्तथाम्बष्ठास्त्रिगर्ताः केकयास्तथा ।
सौवीराः कितवाः प्राच्याः प्रतीच्योदीच्यमालवाः १३
द्वादशैते जनपदाः सर्वे शूरास्तनुत्यजः ।
महता रथवंशेन तेऽभ्यरक्षन्पितामहम् ॥ १४
अनीकं दशसाहस्रं कुञ्जराणां तरस्विनाम् ।
मागधो येन नृपतिस्तद्रथानीकमन्वयात् ॥ १५
रथानां चक्ररक्षाश्च पादरक्षाश्च दन्तिनाम् ।
अभूवन्वाहिनीमध्ये शतानामयुतानि षट् ॥ १६
पादाताश्चाग्रतोऽगच्छन्धनुश्चर्मासिपाणयः ।
अनेकशतसाहस्रा नखरप्रासयोधिनः ॥ १७
अक्षौहिण्यो दशैका च तव पुत्रस्य भारत ।
अदृश्यन्त महाराज गङ्गेव यमुनान्तरे ॥ १८

C 6 694
B 6 18 18
K 6 18 18

इति श्रीमहाभारते भीष्मपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

---

text ) 8 5 उचिते° T2 तत्र ( for चित्रेस् ) — $^{b}$) K1 तलवधा, G3 तालवद्धा Cd cites ताल° — $^{c}$) Ko D2 वृष°, M4 ऋषभाक्ष° — $^{d}$) K5 चतुर्मुख° B3 मुख°, T2 G4 बहु ( for बभु ) K1 चमूमुखगतावुभौ

10 $^{d}$) T G1 4 M1–4 दुष्प्रहस ( for दुःसहस )

11 $^{b}$) D6 पृष्टग° ( for विकर्ण° ) B2 S महाबल — $^{c}$) T2 G3 पुरुर्मित्रो, M2 पूरुमित्रो K3 5 D2 पुरुमित्रो जयो भोजो — $^{d}$) K3 5 D2 भूरिर् ( for जयो ) K1 T2 °श्रव°, D2 °श्रवा

12 $^{b}$) D6 मनुशायिन°, T2 मनुजाधिप — 12$^{cd}$ = 6 102 7$^{cd}$ — $^{c}$) D8 T1 G M1 8 5 अभीषहा°, T2 अतीर्षभा K3 D3 सूरसेना° K5 आभीरा सूरसेनाश्च — $^{d}$) Ś1 Ko Dn2 शिवयो°, K1 शिवरो°, G2 3 कवयो°, M3 5 शिववो° K4 B D7 वशातय°, T1 ( by corr ) पदातय°, G2 वसादय°

13 $^{a}$) Ś1 Ko–2 D7 शा( Ko 1 सा )ल्वमत्स्यास्, K4 शाल्वानूपास्, K5 शाल्वा म्लेच्छास्, B1 2 Da शाल्वाश्रयास्, T1 G1 4 M साल्वा मत्स्यास् D6 तथा वत्सास् — $^{b}$) B3 4 D ( except D1–8, 6 ) त्रैगर्ता°, G2 त्रिकर्ता° K3 5 D ( except Da2 D5 8 ) कैकयास्तथा, S ( T1 by corr ) केकयै° ( T1 G4 °या° ) सह — 13$^{cd}$ = 6 102 7$^{ab}$ — $^{c}$) Da1 ( before corr ) Dn D4 8 T1 G4 कैतवा° D7 जाल्मा° ( for प्राच्या° ) — $^{d}$) = B 7 7 15$^{b}$ N °वासिन, T G °प( T1 G2 4 °पा )र्वता ( for °मालवा° )

14 $^{a}$) K5 सादशैस्ते ( for द्वादशैते ) — In K4, 14$^{bc}$ is lost on a damaged fol — $^{b}$) D1 G2 °त्यजा° — $^{c}$) S सरथा ( for महता ) — $^{d}$) K4 *** क्षन्, B Da Dn D4 5 8 ते ररक्षु°; D8 ते रक्ष्यंति, T2 G1 ते ह्यरक्षन्, G2 तेसरक्षन् ( sic )

15 $^{a}$) G2 अनीक° — D6 om ( hapl ) 15$^{c}$–16$^{b}$ — $^{c}$) K5 यश्च, Da D5 M यत्र ( for येन ) D7 मागधेयोथ नृपतिस्, T1 G4 °धेयो नरपती, G2 °धेयेन नृपती — $^{d}$) K3 5 D2 7 8 अन्वगात् ( K5 °गा ), K4 B4 M अभ्ययात् B3 तथानीक समन्वयात्, Da1 तथानीकमवन्व°, T G रथानीकेन चाभ्ययात्

16 D6 om 16$^{ab}$ ( cf v l 15 ) — $^{a}$) Ko दक्ष° ( for चक्र° ) — $^{b}$) K4 दक्षिना — $^{c}$) K3 5 B Da Dn D1 2 4 5 8 अभवन्, D3 6 अभवद्, D7 S बभूवुर् D7 °मुख्या ( for °मध्ये ) — $^{d}$) K5 च ( for षट् ) Cd as in text

17 Cf 6 19 29 D7 reads 17$^{a}$–18$^{b}$ on marg — $^{a}$) Ko B1 Da D3–5 T1 G4 M3 पदाताश्, T2 पताकाश् S च ततो ( for चाग्रतो ) — $^{b}$) Ko 1 °चर्मानि ( Ko °णि ) — $^{c}$) M2 °रथ° ( for °शत° ) — $^{d}$) Ś1 Ko 1 नखरप्रासयोनय°, B2 रथरप्रास° योधिन, B3 नरास्तु प्रास°, D2 मुद्गरप्रास°, D7 तत्पर प्रास°, T1 G2 4 असल्या प्रास°, M1–3 5 मुसलप्रास°, Ca as in text Cd cites नखर° and प्रास

18 K5 om 18 In K4, 18$^{ab}$ is lost — $^{a}$) Some S MSS अक्षो° — $^{b}$) Ś1 Ko 1 पुत्राश्च — K3 D2 om 18$^{cd}$ — $^{c}$) T2 G1–3 अदृश्यत — $^{d}$) Ś1 यमुनांत*, B Da Dn D4 5 8 Cc °नातरा, D3 °नामनु, D6 °नोत्तरा — After 18, Ś1 reads 6 19 1–2

# १९

धृतराष्ट्र उवाच ।

अक्षौहिण्यो दशैकां च व्यूढां दृष्ट्वा युधिष्ठिरः ।
कथमल्पेन सैन्येन प्रत्यव्यूहत पाण्डवः ॥ १
यो वेद मानुषं व्यूहं दैवं गान्धर्वमासुरम् ।
कथं भीष्मं स कौन्तेयः प्रत्यव्यूहत पाण्डवः ॥ २

संजय उवाच ।

धार्तराष्ट्राण्यनीकानि दृष्ट्वा व्यूढानि पाण्डवः ।
अभ्यभाषत धर्मात्मा धर्मराजो धनंजयम् ॥ ३
महर्षेर्वचनात्तात वेदयन्ति बृहस्पतेः ।
संहतान्योधयेदल्पान्कामं विस्तारयेद्बहून् ॥ ४
सूचीमुखमनीकं स्यादल्पानां बहुभिः सह ।
अस्माकं च तथा सैन्यमल्पीयः सुतरां परैः ॥ ५
एतद्वचनमाज्ञाय महर्षेर्व्यूह पाण्डव ।
तच्छ्रुत्वा धर्मराजस्य प्रत्यभाषत फल्गुनः ॥ ६
एष व्यूहामि ते राजन्व्यूहं परमदुर्जयम् ।
अचलं नाम वज्राख्यं विहितं वज्रपाणिना ॥ ७

---

Colophon om in Ko 1, Ś1 reads it after 6 19 2 — *Adhy name* K8 D2 कुरुसेनानिर्या( D2 °र्मा )ण; K6 सेनानिर्याण, D1 सैन्यसमुच्चय, D6 सेनासदर्शन, M रक्षा( M8 भीष्मरक्षा )विधान — *Adhy no* ( figures, words or both ) K6 Da2 D1 6 M1 8-6 19, Dn M2 18 ( as in text ), T G 17 — *Śloka no* Dn 18, D5 20 — *Aggregate śloka no* K6 679, D1 662

## 19

1 Ś1 reads 1-2 after 6 18 18 — $^{a}$ ) K4 Da2 T G1 3 4 अक्षौ( T G1 4 °क्षो )हिणीं; K6 Da1 D2 G2 °हिणी, D1 5 7 °हिणीर् Ko 2 3 5 Dn D1-4 6 8 M दशैका च, K1 दशैकाश्च — $^{b}$ ) K6-5 B Da1 D2 8 7 M1-4 व्यूढा, Dn D4 8 व्यूह ❀ Ca अक्षौहिण्यो दशैका चागमन् तासा व्यूह दृष्ट्वेति योजनम् । ❀ — $^{d}$ ) K1 T2 G1 8 प्रतिव्यूहत, M8 प्रत्यव्यूहत K6 प्रत्यव्यूहत पाडवा — After 1, G3 reads $3^{cd}$, *repeating* it in its proper place

2 For sequence in Ś1, cf v 1 1 With $2^{ab}$, cf 6 20 $18^{ab}$ — $^{a}$ ) B8 M1 वेद मानुष, B1 देवमानुष — $^{b}$ ) Ko 3 5 Da Dn1 D1 5 6 8 G3 दैव गधर्वम्, D8 देवगाधर्वम्, M8 दैवगाधर्वम् — $^{c}$ ) S ( except T2 ) स भीष्मं ( by transp ) M गांगेय ( for कौन्तेय. ) — $^{d}$ ) D6 प्रत्यव्यूहत, G1-3 प्रतिव्यूहत K4 B Da Dn D1 4 6 8 सजय ( for पाण्डव )

3 $^{a}$ ) K3-5 D2 6 M धार्तराष्ट्रस्य सैन्यानि, Dn D1 3 4 7 8 T2 G2 3 °ष्ट्रान्यनीकानि — $^{b}$ ) K4 damaged Dn2 D8 G2 व्यूहानि — $^{c}$ ) K1 अभि° — $^{d}$ ) D1 कुतीपुत्रो ( for धर्मराजो )

4 $^{a}$ ) D8 वचन D7 महामुनिर्महाभागो — $^{b}$ ) D2 ( marg *sec m* ) 5 6 विदित ते, Ca c वेद° ( as in text ) M2 बृहस्पति D7 यज्जगाद बृहस्पति — $4^{cd}$ = B 12 100 $47^{ab}$, Manu 7 $131^{ab}$ — $^{c}$ ) T1 G4 M4 सगतान्, M1-3 5 सहतान्, Cv सयतान्, Cc सह° ( as in text ) K1 वेदयेद्, G2 M1-3 5 योजयेद्, Cc योधयन्ते D7 ( m as in text ) सर्वान्, M2 अश्वान्, M5 दर्पात्, Cc v अल्पान् ( as in text ) — $^{d}$ ) Co.d काम ( as in text ) G1 3 विस्तारयन्, Cc v °येत ( as in text ) Ca cites $4^{cd}$ as in text

5 $5^{ab}$ = B 12 100 $47^{cd}$ — $^{a}$ ) K6 Cv शूची° — $^{c}$ ) D7 च यथा — $^{d}$ ) K5 D2 अल्पीय, D1 अल्प तु Cc अल्पीय सुतरा ( as in text )

6 $^{a}$ ) T2 स तद् ( for एतद् ) — $^{b}$ ) K1 3 5 Da1 D6 8 महर्षे K6 3 D6 T2 व्यूह्य K1 5 D6 T2 G1 3 M4 पाडव — $^{c}$ ) Dn2 एतच्छ्रुत्वा धर्मराज — $^{d}$ ) Ko फल्गुण, K2-5 B3 D1-3 फाल्गुन, B1 2 4 Da Dn D4 5 8 पांडव

7 $^{ab}$ ) K4 transp राजन् and व्यूह B Da Dn D4 5 8 व्यूह, T1 G1 3 4 नित्य, G2 सैन्य ( for राजन् ) B Da Dn D4 5 8 राजसत्तम दुर्जय ( for $^{b}$ ) — $^{c}$ ) Cc cites अचल and वज्राख्य ( as in text )

काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक्पृथक् ॥ १८
स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९
अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः ।
प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २०
हृषीकेशं तदा वाक्यमिदमाह महीपते ।
सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१
यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥ २२
योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३
एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति ॥ २५
तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान् ।
आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ॥ २६
श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ।
तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ॥ २७

---

17 = ( var ) 6 47 27 G$_1$ om 17 ( cf v l 10 ), K$_1$ om $17^{ab}$ ( cf v l 16 ) — $^{a}$) G$_2$ M$_2$ परमेष्वासा , Cl u °ष्वास ( as in text ) — $^{b}$) = 5 81 $31^{d}$, 138 $23^{b}$, 150 $6^{b}$ B 7 111 $45^{d}$ Ś$_1$ °रथा Cl u °रथ ( as in text ) — $^{d}$) = B 7 130 $4^{d}$ G$_2$ सात्विकिश् ( sic ) K$_1$ reads सातिकिं वा ( for सात्यकिश्चा ), and om from पराजित up to याश्च in $18^{b}$ ( cf v l $18^{ab}$ in Ś$_{1-3}$ K$_{0-2}$ $_{6}$ D$_3$ Cb )

18 G$_1$ om 18 ( cf v l 10 ). — $^{ab}$) Ś$_{1-3}$ K$_{0-2}$ $_{6}$ D$_3$ Cb पाचालश्च महेष्वासो द्रौपदेयाश्च ( K$_1$ om up to याश्च, cf v l $17^{d}$ ) पंच ये ( Ś$_2$ के, K$_{0}$ $_{6}$ च ), Cl u as in text — $^{d}$) = B 7 146 $137^{d}$ B 8 87 $90^{b}$ K$_1$ B$_1$ शस्त्र, Cl r u शङ्खान् ( as in text )

19 G$_1$ om 19 ( cf v l 10 ) — $^{a}$) K$_1$ सुघोषो, Cl r u स घोषो ( as in text ) — $^{b}$) Ś$_1$ K$_1$ Ñ$_1$ D$_{2}$ $_{8}$ Cl विदारयत् ( Ñ$_1$ D$_2$ °न् ), K$_6$ Da$_1$ Dn$_1$ D$_{5}$ $_{6}$ $_{8}$ M$_2$ व्यदारयन्, D$_1$ व्यकपयत्, Cu व्यदारयत् ( as in text ) — $19^{cd}$ = ( var ) 6 47 $29^{cd}$ — $^{c}$) D$_6$ पृथिवी ( sic ) — $^{d}$) A few MSS तुमलो K$_3$ D$_{1}$ $_{8}$ व्यनुनादयत्, K$_6$ B$_3$ [s]भ्यनुनादयन्, M$_4$ [s]प्यनु°, Cb l u व्यनु° ( as in text ) Cc cites अनु°

20 G$_1$ om 20 ( cf v l 10 ) — $^{a}$) Cr cites अवस्थितान्

21 G$_1$ om 21 ( cf v l 10 ) Before $21^{cd}$, Ś$_1$ K$_{2}$ $_{6}$ Ñ$_1$ B Dn$_2$ ( marg ) D$_{2}$ $_{4}$ $_{6}$ $_{7}$ T$_2$ G$_{2}$ $_{3}$ M$_2$ ins अर्जुन उ° ( S MSS om उ° ) — $^{c}$) = $21^{c}$, 6 24 $10^{c}$ Ś$_{1}$ $_{2}$ K$_{0}$ $_{1}$ $_{6}$ Cb उभयो सेनयोर्मध्ये ( by transp ), Cl r u as in text

22 G$_1$ om 22 ( cf v l 10 ) — $^{a}$) K$_2$ $_{4}$ Dn D$_{1-4}$ $_{6}$ T G$_{2}$ $_{4}$ निरीक्ष्ये ( sic ) — $^{c}$) D$_5$ यैर्, M$_2$ तैर्, Cl n u कैर् ( as in text ) — $^{d}$) Dn$_1$ °समुद्यते ( sic )

23 G$_1$ om 23 ( cf v l 10 ) — $^{a}$) M$_2$ योध्य मानान्, Cn u योत्स्यमानान् ( as in text ) K$_{3}$ $_{5}$ D ( except D$_7$, Da$_2$ om ) T$_2$ G$_{2}$ $_{3}$ अवेक्ष्ये ( sic ) — $^{c}$) K$_6$ धृतराष्ट्रस्य, D$_3$ m दुर्योधनस्य, Cu धार्तराष्ट्रस्य ( as in text ) K$_{1}$ $_{3}$ D$_6$ M$_3$ दुर्बुद्धे ( sic )

24 G$_1$ om 24 ( cf v l 10 ) Before 24, all MSS ( K$_4$ Da$_2$ G$_1$ om ) ins संजय उ° ( Ś$_1$ K$_1$ D$_1$ S om उ° ) — $^{c}$) = $21^{c}$, 6 24 $10^{c}$ Ś$_{1}$ $_{2}$ K$_{0-2}$ $_{6}$ Cb उभयो सेनयोर्मध्ये ( by transp ), Cl u as in text

25 G$_1$ om 25 ( cf v l 10 ) — $^{b}$) = 1 1 $11^{f}$

26 G$_1$ om 26 ( cf v l 10 ) — $^{a}$) M$_2$ कुरून्, Cl u स्थितान् ( as in text ) — $^{d}$) = B 10 11 $1^{b}$

27 G$_1$ om 27 ( cf v l 10 ) — $^{a}$) Some MSS श्वसुरान्, स्वसु° Ñ$_1$ श्यालान् ( for चैव ) — $^{c}$) K$_5$ D$_2$ समीक्ष्याथ, G$_4$ समीक्ष्य च, Cl u समीक्ष्य स ( as in text )

कृपया परयाविष्टो विषीदन्निदमब्रवीत् ।
दृष्ट्वेमान्स्वजनान्कृष्ण युयुत्सून्समवस्थितान् ॥ २८
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ २९
गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥ ३०
निमित्तानि च पश्यामि विपरीतानि केशव ।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥ ३१
न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥ ३२
येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥ ३३
आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः स्यालाः संबन्धिनस्तथा ॥ ३४
एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥ ३५
निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।
पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ॥ ३६
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्सबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ३७ C 6 868 B 6 25 37 K 6 25 37

---

28 G1 om 28 (cf v l 10) — a) = 3 284 8c B 12 49 55a — b) S (Ś6 om) K0-2 6 B Cb k सीदमानोब्रवीदिद, Cl u as in text — Before 28cd, all MSS (except D2 8, K4 Da2 G1 om) ins अर्जुन उ॰ (Ś1 K1 D1 T G2-4 M om उ॰) — c) K3 5 Ñ1 Da1 Dn D1 4 7 S (G1 om) Cu दृष्ट्वेम, B4 D8 6 दृष्ट्वैतान्, D5 दृष्ट्वा स- (sic), D8 दृष्ट्वैव (for दृष्ट्वेमान्) K0-2 सुजनान्, K3 5 Ñ1 D (except D2 8, Da2 om) Cn u स्वजन (for स्वजनान्) — d) = (var) 5 193 61b B 7 139 80b K3 5 B1 2 4 D (except D2 8 6, Da2 om) S (G1 om) Cu युयुत्सु, Ñ1 युद्धाय (for युयुत्सून्) K3 5 Ñ1 Da1 Dn D1. 4 5 7 8 S (G1 om) Cu समुप(K5 G4 M2 ॰मव)स्थित, B D8 6 समुपस्थितान् (for समव॰)

29 G1 om 29 (cf v l 10) — a) = B 7 74 9c Ś2 सर्वे, Cb u मम (as in text) — b) = B 15 3 60b M1 3 5 परिशुष्यते, Cl ॰शुष्यति (as in text) D6 मुख चापि विशु॰ — With 29cd, cf B 8 26 16c

30 G1 om 30 (cf v l 10) — a) D8 गाढिव, D6 गाजीव (sic), Cu गाण्डीव (as in text) D2 8 6 श्रंसते (sic) S1 2 K0-2 Cb स्रसते गांढिव — b) K5 D8 6 परिदह्यति, Cl u ॰दह्यते (as in text)

31 G1 om 31 (cf v l 10) With 31ab, cf 5 73 16ab — After 31ab, T1 G4 *repeat* 30cd — c) T1 G4 श्रेयो न, Cu श्रेयोऽनु (as in text) — d) K6 हत्वाहवे स्वबांधवान्

32 G1 om 32 (cf v l 10) — a) D8 न काङ्क्ष्ये, G2 नाकाङ्क्षे, Cu न काङ्क्षे (as in text) — b) Ś2 K1 6 न राज्य न, Cb l न च राज्य (as in text) — d) = 5 131 36d, 133. 3d G2 (before corr) 8 च, Cu वा (as in text)

33 G1 om 33 (cf v l 10) — a) D2 येमाम्, M1-3 5 एषाम्, Cu येषाम् (as in text) Ś1 K0-2 जीवित मे, Cl u काङ्क्षित नो (as in text) — b) T2 भोगै॰, Cu भोगा॰ (as in text) — c) Ś1 2 K0-2 6 Cb त एव (K6 Cb एवे) मे स्थिता योद्धु — d) = B 9 2 21d Ś1. 2 K0-2 6 Cb सुदुस्त्यजान्, Cu धनानि च (as in text)

34 G1 om 34 (cf v l 10) — b) = 3 81 23b K1 प्र (for च) — c) MSS (indiscriminately) श्वसुरा, स्वसुरा, स्वशुरा K1 पुत्रा॰, G3 पौरा (for पौत्रा) — d) N (except K1 B2 Dn2 D1, Ś6 K4 Da2 om) श्याला, Cn u स्याला (as in text) D8 शाला सबंधिबांधवा

35 G1 om 35 (cf v l 10) — d) Ś1-3 K0 6 किमु, Cb c l किं नु (as in text) B4 (m as in text) महीपते, Cn महीकृते (as in text)

36 G1 om 36 (cf v l 10) D8 om 36cd

37 G1 om 37 (cf v l 10) — b) Ś2 3 K2 6 Dn2 Cb l स्व (for स) — c) K6 स्वजनान्, Dn1 सजन, Cn u स्वजन (as in text)

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९
कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ४०
अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ४१
संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४२
दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४३
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४४
अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४५
यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४६
एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४७

इति श्रीमहाभारते भीष्मपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

---

38 G1 om 38 (cf v l 10) — a) D6 यद्यथा ते (sic) — c) = 39c D6 कुलक्षत° (sic) D8 पाप, Cn u दोष (as in text) — d) = 5 146 20d Ś1 K0.1 मित्रद्रोहि, Cl °द्रोहे (as in text)

39 G1 om 39 (cf v l 10) — c) = 38c D6 कुलक्षत° (sic) — d) Ś1 2 K1 6 स, Cb l u प्र (as in text)

40 G1 om 40 (cf v l 10) — d) G2 °र्मोपि (sic) Ñ1 अधर्मोभिभवाच्युत (sic)

41 G1 om 41 (cf v l 10) — b) T2 प्रदु°, G2 प्रदूष्यति (sic)

42 G1 om 42 (cf v l. 10) — a) = 5 70 33c

43 G1 om 43 (cf v l. 10) — cd) D8 ज्ञातिधर्मा, Cu जाति° (as in text) Cb उत्साद्यते जातिधर्मः कुलधर्मश्च शाश्वतः

44 G1 om 44 (cf v l 10) — a) K2 उत्पन्न°, K8 उत्सिन्न°, B1 8 D6 उच्छन्न°; D1 2 उच्छिन्न°, Cu उत्सन्न° (as in text) — d) = B 13 68 32b K1-3 Ñ1 Da1 Dn1 D1-3 6 S (G1 om.) °शुश्रुम°, Cl u °शुश्रुम (as in text)

45 G1 om 45 (cf v l 10) — a) = B 7 196 50a — b) M2 कर्तव्येवसिता वय (sic) — c) = B 7 196 50c M1 °भोगेन, Cu °लोभेन (as in text) — d) K1 हतु सुजनमुद्यता, K2 कर्तुं स्वजनमु°, K6 स्वजनान्हन्तुम°, Cu as in text

46 G1 om 46 (cf v l 10) — c) Da1 (marg sec m) धार्तराष्ट्रान् (sic)

47 G1 om 47 (cf v l 10) Before 47, all MSS (K4 Da2 G1 om) ins संजय उ° (Ś1 K1 D7 T G2-4 M om उ°) — a) Cf B 7 202 154a. S (mostly) सखे — K6 transp 47b and 47d — b) = 3 71 29d 4 41 8d B 7 40 13d, 114 95b, 166 38b, 167 34b, 169 16d, 200. 69b D1 रथोपस्थम्, Cl r u रथोपस्थ (as in text). — c) = B 7 114 95c cf 4 36 25d B 7 200 68c Ś1 2 K1 6 उत्सृज्य, Cl r u विसृज्य (as in text)

Colophon — *Sub-parvan* All MSS (Ś3 K4 Da2 G1 om) श्री *or* श्रीमद् (K5 G4 om श्री *or* श्रीमद्) भगवद्गीतासु (K6 भगवद्गीतायां) उपनिषत्सु (K6 D7 om उपनिषत्सु) K0 3 5 Ñ1 B8 Da1 Dn D1 2 4-6 8 Cv cont ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे, K6 M1 3 5 श्री(M5 om श्री)कृष्णार्जुनसंवादे, T1 G4 योगशास्त्रे श्रीकृष्णार्जुनसंवादे, T2 G3 M2 परब्रह्मविद्यायां योगशास्त्रे (G2 °शास्त्रनिर्णये) श्री(G2

# २४

संजय उवाच ।

तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १

श्रीभगवानुवाच ।

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २
क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ३

अर्जुन उवाच ।

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४
गुरूनहत्वा हि महानुभावा-
ञ्श्रेयो भोक्तुं भैक्षमपीह लोके ।
हत्वार्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान्रुधिरप्रदिग्धान् ॥ ५
न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषाम-
स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६
कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वा धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ C 6 885 B 6 26 7 K 6 26 7

---

om श्री )कृष्णार्जुनसंवादे — *Adhy name* Ś1 K0-3 5 Ñ1 Da1 Dn D1.5 8 अर्जुन( D. om अर्जुन )विषाद; D4 T G2 4 अर्जुनविषादयोग, K6 B3 सैन्यदर्शन, B2 सैन्योपदर्शन, D5 अर्जुनपरिखेद — *Adhy no* (figures, words or both) D. M2 24, T G2 4 23 (as in text), M4 25 — *Bhagavadgītā adhy no* (figures, words or both) Ś1 K (K4 om) Ñ1 B Da1 Dn D1-4 6-8 G2 8 M1 2 5 1 — *Śloka no* K3 6 Dn D1 2 5 6 G2 47, Da1 (erroneously) 48, M4 46

## 24

☞ K4 Da2 om this adhy (cf note at the beginning of adhy 23)

1 St 1-10 are not noticed in Cś — Ś5 om up to पाम in 6ᶜ (cf note at the beginning of adhy 23), G1 om 1-26 (cf v l. 6 23 10), K1 om 1 D3 om the ref —ᵇ) T2 अश्रुपूर्णमुखेक्षण, Cu as in text —ᶜ) Ś (Ś5 om) K6 B Cb सीदमानम्, Cn u विषीदन्तम् (as in text)

2 Ś5 G1 om 2 (cf v l 1) K1 om the ref —ᵃ) K2 5 D2 T1 G2 4 Cb k त्वा, Cl u त्वा (as in text) —ᶜ) = B 9 31 24ᶜ

3 Ś5 G1 om. 3 (cf v l. 1) —ᵃ) Ś (Ś5 om) K6 B (B1 m 4 m as in text) D3 (marg sec m as in text) 6 T G4 Cb k मा क्लैब्यं गच्छ कौंतेय, Cl n u as in text —ᵇ) = 3 240 23ᵈ B 7 143 13ᵈ, 183 24ᵈ B 12 106 3ᵈ

5 Ś5 G1 om 5 (cf v l 1) —ᵇ) Ś1-4 5 (m as in text) K0 Cb श्रेयश्चर्तुं, K6 श्रेयस्कर, D3 श्रेयो भुक्त, Cl n u v श्रेयो भोक्तु (as in text) Ś4 5 K0 3 6 Ñ1 B Da1 Dn1 D2 3 5 6 8 भैक्ष्यम्, Cc l n u v भैक्षम् (as in text) —ᶜ) D6 °कामाश्च, G3 °काम्यास्तु Ś (Ś5 om) K0 1 6 D3 Cb न त्वर्थकाम( Ś2 5 K0 D8 °मा )स्तु गुरूनिहत्य, Cl. n u as in text —ᵈ) D3 6 भुजीत, Cl n u भुञ्जीय (as in text) D8 °प्रदग्धान् (sic)

6 G1 om 6, Ś5 om 6ᵃᵇᶜ (cf v l 1) —ᵃ) Ś3 5 (marg) Cg k नैतद्विद्म, G3 न चैतद्विदु, Cl n u v न चैतद्विद्म (as in text) —ᵇ) Ñ1 (m as in text) उत, Cn u यदि (as in text) —ᵈ) Ś1-3 5 6 K6 Cā k ते न स्थिता, K1 तेना स्थिता, Cb l u तेऽवस्थिता (as in text) D2 प्रत्यनीकेषु योधा, Cu प्रमुखे धार्त° (as in text)

7 G1 om 7 (cf v l 1) —ᵇ) Ś3 5 K2 3 5 B Da1 Dn1 D1-7 T1 G4 M8 त्वा, Cā b k l u

न हि प्रपश्यामि ममापनुद्या-
द्यच्छोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाधिपत्यम् ॥ ८

संजय उवाच ।

एवमुक्त्वा हृषीकेशं गुडाकेशः परंतप ।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९
तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १०

श्रीभगवानुवाच ।

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११
न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥ १२
देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३
मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४
यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५
नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६

---

त्वा (as in text) — $^d$) K1 D5 M2 8 त्व, Cā l u त्वा (as in text)

8 G1 om 8 (cf v l 1) — $^b$) Ś2 3 4 m 5 6 K6 Cā b य, Cl u v यत् (as in text)

9 G1 om 9 (cf v l 1) — $^b$) K5 B3 4 Da1 T G2 (orig) 3. 4 M4 5 Cl u परतप, Cā b परंतप (as in text) — $^c$) Ś3 6 B1 D1 8 6 T2 Cā न योत्स्यामीति, Cl u न योत्स्य इति (as in text) — $^d$) Da1 D6 तूष्णी, Cl u तूष्णीं (as in text)

10 G1 om 10 (cf v l 1) — $^b$) = 1 151 $7^b$, $14^d$, 211 $16^b$ 5 179 $1^b$ B 7 107 $14^d$, 115 $38^d$, 122 $47^d$, 123 $23^d$, 128 $4^b$ B 14 74 $6^b$ — $^c$) = 6 23 $21^c$, $24^c$ B1 4 D8 उभयो सेनयोर्मध्ये (by transp) — $^d$) Ś K6 B1-3 D1 8 T2 Cā b सीदमानम्, Cl u विषीदन्तम् (as in text)

11 G1 om 11 (cf v l 1) D8 om the ref — After the ref, Ś K6 Cā b g k ins

87* त्व मानुष्येणोपहतान्तरात्मा
विषादमोहाभिभवाद्विसंज्ञ ।
कृपागृहीत समवेक्ष्य बन्धू-
नभिप्रपन्नान्मुखमन्तकस्य ।

[(L 1) Ś1 Cb मानुषे° — (L 3) Ś5 Cb समवीक्ष्य ]
— $^a$) Ś2-4 K6 Cb c k अनुशोचे(Cb c °च)स्त्व, T2 G8 अन्वशोच्यस्त्वं, G2 अवशोचस्त्व, Cā l m n r ś u अन्वशोचस्त्व (as in text) — $^b$) Ś2-6 K6 Cā प्राज्ञव(K6 प्रज्ञावा)श्चाभिभाषसे; Cl m n r ś u v as in text Cb cites प्रज्ञावादांश्च (as in text). — $^d$) = 5 131 $15^b$

12 G1 om 12 (cf v l 1) — $^a$) Ś1-3 6 K6 Cā g न ह्येवाहं, Ś4 न एवाहं, D6 न त्वेनाहं, Cb c l m n r ś u v न त्वेवाहं (as in text) — $^b$) Ś2 6 K6 Cg नामी, Cl m n r ś u v नेमे (as in text) — $^c$) D6 चैव, Cc k l r n ś u चैव (as in text) — $^d$) Ś2-5 K6 वयमित, Cā b c l r ś u v वयमत (as in text)

13 G1 om 13 (cf v l 1) — $^d$) K1 Da1 D8 वीरस्, Cā c g l m n r ś u धीरस् (as in text).

15 G1 om 15 (cf v l 1) — $^b$) M2 पुरुषाः पुरुषर्षभा, Cl m n ś u v as in text — $^c$) Cf B 12 297 $36^c$ Ś6 समसुखदुःख, Cc k l m n r ś u °दुःखसुख (as in text) G8 धीरा, M5 धीर, Cc l m n r ś u धीरं (as in text) — $^d$) = B 12 139 $80^d$, 239 $22^d$, (var) 328 $50^d$ (var) B 14 48 $5^d$ B4 कपते, Cā c k l n r ś u कल्पते (as in text)

16 G1 om 16 (cf v l 1) — $^a$) Cm [अ]भावो — $^c$) D6 reads उभयोरतर and om from दृष्टो up to तद् in $17^a$ — $^d$) K1 वस्तु°, Cā c l r ś u v तत्त्व° (as in text)

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १७
अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८
य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९
न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ २०
वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१
वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥ २२
नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २३
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४
अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५
अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥ २६
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७

C 6 905
B 6 26 27
K 6 26 27

17 G1 om 17 (cf v l 1) — [a]) K3 °नाशी (sic) — [b]) = Gītā 8 22[d], 18 46[b] B 12 59 138[d], 239 20[d] —[d]) D6 किंचित्, Cā c k l m n r ś u कश्चित् (as in text) K0 2 मर्हसि (sic)

18 G1 om 18 (cf v l 1) —[a]) = B 12 224. 6[a] —[c]) Ś1 2 5 6 D1 Cb g विना°, Cm n ś u अना° (as in text) Ś4 (m as in text) विनाशमव्ययस्याम्य (= 17[c])

19 = (var) Kathopaniṣad 1 2 19 G1 om 19 (cf v l 1) —[a]) B1 वेद, Cg k l r ś u v वेत्ति (as in text) —[c]) = B 12 224 14[a] Ś0 K1 D1 T2 G3 (before corr) विजानीतौ, G3 (by corr) °नीते; Ck l n r ś u °नीतो (as in text)

20 = (var) Kathopaniṣad 1 2 18 G1 om 20 (cf v l 1) —[b]) Cc ś [अ]भविता; Cā g l m n r u भविता (as in text) Ñ1 (marg in Devanāgarī as in text) वा कदाचित्, G3 नायभूय; Cc l n r ś u वा न भूय (as in text) —[c]) Cf B 12 339 23[c] —[d]) M2 अतीते (with hiatus), Cā c k l m n r ś u शरीरे (as in text)

21 G1 om 21 (cf v l 1) —[c]) Dn1 पुरुषव्याघ्र (for पुरुष पार्थ) —[d]) K0 किं (for कम्) Ś1- (Ś1 2 marg) K6 Cg k हन्यते इति वा कथ, Cā b c l m n r ś u v as in text

22 G1 om 22 (cf v l 1) —[d]) D8 गृह्णाति, Cś u संयाति (as in text)

23 G1 om 23 (cf v l 1) —[c]) M2 क्लेश°, Ck l n r ś u क्लेद° (as in text)

24 G1 om 24 (cf v l 1) —[c]) Ś1 सततग, K1 3 Da1 D8 G2 3 M2 सर्वगत (K1 G2 °ता), D2 सर्वत्रग, Cā c l m n ś u सर्वगत (as in text)

25 G1 om 25 (cf v l 1) —[c]) K0 D6 G3 °देन, Cā c k l n r ś u °देव (as in text) D6 विचिंत्यैन, G2 विदित्वेह, Cā g l n r ś u °त्वैन (as in text) —[d]) Cf 6 2 14[b]

26 K0 2 G1 om 26 (K0 2 hapl, for G1, cf v l 1) K5 reads 26 twice —[a]) Ś1-3 4 (marg) 5 6 K6 M1 3 Cā b c k चैन, Cl m r ś v चैन (as in text) Cg u cite एनम् —[d]) = B 12 6 4[b] B 13 168 32[b] Cf 1 1 183[d] B 12 29 11[d], 12[d] K1 6 Dn D2 5 6 T G3 4 M2 नैव, Cā k l m r ś u नैन (as in text)

27 D6 transp 27 and 28 —[a]) B1 जातस्यैव, Cā c k l r ś u °स्य हि (as in text) Ś2 K6 ध्रुवं, Cā k l r ś u ध्रुवो (as in text) —[c]) = B 7 11 51[a] K0 तस्मादपरिहार्येर्थे —[d]) = 6 24 30[d], 46 27[b] B 7 80 9[d], 114 47[d]

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८
आश्चर्यवत्पश्यति कश्चिदेन-
माश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ २९
देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३०
स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥ ३१
यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२
अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३
अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४
भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५
अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६
हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७
सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८

---

28 = (var) B 11 2 6, 9 11 —[c]) Cf B 12 211 1[d] —[d]) = 2 41 1[d], 6[d], 8[d] 3 78 9[d], 238 42[d], 46[d] B 12 29 15[b], 180 27[d], 224 17[d], 226 20[d] B 14 3 2[d] D2 8 (before corr) 8 T1 °वेदना, Cā c l l n r ś u °देवना (as in text)

29 Cf Kathopaniṣad 1 2 7 —[b]) Ś1 8 तथैन° मन्य°, Ko 1 Cb तथैवमन्य°, Cā l r ś u तथैव चान्य° (as in text)

30 [c]) = B 12 110 8[c] B 13 162 61[c] —[d]) = 27[d], 6 46 27[b] B 7 80 9[d], 114 47[d] Ś1 Cā b नानु, Ś2 Ko नात्र, Cl ś u न त्व (as in text)

31 [b]) Ś1 Ko त्व, Ś5 Cā प्र, Cc l n r ś u वि° (as in text) — 31[cd] = (var) 6 118 32[cd] cf B 11 2 18[cd] —[c]) Ko Ñ1 Da1 D6 M8 6 Co धर्माद्धि, Cā l n r ś u धर्म्याद्धि (as in text)

32 Cf B 8 57 2 Ś1 om 32–37 —[a]) Ś1 चोपनत, Cā c l n ś u चोपपन्न (as in text). —[c]) Ś1 8 सुकृतात्; Cā b l n r ś u सुखिन (as in text)

33 Ś1 K1 om 33 (for Ś1, cf v l 32) —[a]) Da1 D8 Cb त्वमिम धर्मं, D8 6 S Cb त्व धर्म्यमिम (G3 M2 8 °द), Ca l r ś u त्वमिमं धर्म्यं (as in text) —[c]) K2 सुधर्मं, Ñ1 स्वधर्म्यं, Cā l r ś u स्वधर्मं (as in text)

34 Ś1 om 34 (cf v l 32) —[b]) K1 D° तेऽव्ययं, Cā c l n r ś u तेऽव्ययाम् (as in text) —[c]) T2 मार्कीर्तिर्, Ca l r ś u चाकीर्तिर् (as in text)

35 Ś1 om 35 (cf v l 32) —[b]) G2 मन्यते, Cā c l n r ś u मंस्यते (as in text) D1 त्वा; Cl r ś त्वां (as in text) —[c]) Ś2 K3 G2 3 M1 एषां; D5 केषां; Ca b c l n r ś u येषां (as in text)

36 Ś1 om 36 (cf v l 32) —[a]) D1 G2 °वाचाश्च, Cā c l n r ś u °वादांश्च (as in text) —[c]) M2 3 विदन्तस्, Cā l n r ś u निन्दन्तस् (as in text) —[d]) = 3 49 7[d] (var) 5 70 17[d], = 5 88 85[d], (var) 137 3[d]

37 Ś1 om 37 (cf v l 32) With 37[ab], cf 4 64 25[cd] B 9 30 12[ab] —[a]) K1 3 T1 G प्राप्स्यसे, Cā l r ś u प्राप्स्यसि (as in text) —[b]) D1 भुव, Cā l r ś u महीम् (as in text) —[d]) M4 कृतनिश्चय

38 With 38[ab], cf B 12 288 37[ab] —[b]) = B 12 121 30[d] —[c]) Ko Ñ1 D2 युध्य(Ñ1 °स्व)स्व, Cā k l n r ś u युज्यस्व (as in text) —[d]) Ko 2 Da1 D3 नैन, Cā l n r ś u नैवं (as in text)

एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९
नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४०
व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१
यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२
कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३
भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४
त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वंद्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५
यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६
कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७
योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४८
दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९

C 6 927
B 6 26 49
K 6 26 49

---

39 c) K1 G3 यथा, Cā c g k l r s u यया (as in text)

40 a) Ś2 3 K6 Cb c g k नेहाति°, Cā l n r ś u नेहाभि° (as in text) — b) Ś2 K6 दृश्यते, Cā c k l n r ś u विद्यते (as in text) — d) = 3 30 $9^b$, 245 $32^d$ (var) 5 67 $12^d$ B 7 195 $18^b$ B 12 134 $5^d$

41 a) = $44^c$ K1 G3 Cv °त्मका, Cc °तिका, Cā g k l m n r ś u °त्मिका (as in text) — b) Ś K0 6 D2 Cā b g k एकैव, Cl m n r ś u एकेह (as in text)

42 b) K1 विपश्चित, Cā c g k l n r ś u [अ]विपश्चित (as in text) — c) Ś1-3 5 K6 Cb k °परा, Cā l m n r ś u °रता (as in text)

43 Ś4 om 43–44 — b) Ś1-3 5 6 K6 Cā g k °फलेप्सव°, B4 M6 °फलप्रदा, Cb l n r ś u °फलप्रदाम् (as in text) — c) Ś1-3 5 K6 Ck °बहुला, K1 °बहुलो, Cā c l n r ś u °बहुलां (as in text) — d) Ś1 3 5 K6 Ck °गती°, Ś2 °गति°, K0 °गतीं, Cā b l m n r ś u °गतिं (as in text)

44 Ś4 om 44 (cf v l 43) — b) Ś1 D5 तयापहृत°, K1 D5 तयापहृत°, D3 तया च हृत°, Cc तयापकृत°, Cā k l m n r ś u तयापहृत° (as in text) — c) = $41^a$ K1 G2 (by corr) 3 °यात्मका, Cā c k l m n r ś u °यात्मिका (as in text)

45 a) Ś1 त्रैगुण्यो; Ś6 Cā त्रैगुण; Cc त्रिगुण्य, Cg k l m n r ś u v त्रैगुण्य- (as in text) — b) K1 Dn1 Cv निस्त्रैगुण्ये, Cā c g k l m n r ś u °गुण्यो (as in text) — c) Cf B 12 195 $4^a$ K1 निर्द्वंद्वे — d) = B 14 46 $45^d$ B3 4 निर्योग°, Cā c k l m n r ś u v निर्योग- (as in text) B4 आत्मन°, Cā c k l m n r ś u v आत्मवान् (as in text)

46 = (var) 5 45 23 — a) D6 उदकपाने — b) = B 12 103 $35^b$ — c) K0 2 भूतेषु, Cā c k l m n r ś u वेदेषु (as in text) — d) D5 ब्राह्मण्यस्य

47 a) Ś1-5 K6 Cb k कर्मण्यस्त्वधिकारस्ते, K2 कर्मणेवाधिकारस्ते, Cā c l m n r s u as in text

48 c) Cf Gītā 18 $26^c$ — d) T2 समर्थं, Ck l n r ś u समत्व (as in text) — After 48, Ś K6 Cā g k ins

88* यस्य सर्वे समारम्भा निराशीर्बन्धनास्त्विह ।
त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान् ।
[ = (var) 3 203 43 — (L 1) Prior half = Gītā 4 $19^a$ ]

49 a) Cv ह्यपर, Cā c l m n r ś u ह्यवरं (as in text) — c) Ñ1 D2 6 8 G3 अन्विच्छन्; Cā c g k l m n r ś u v अन्विच्छ (as in text). — d) = B 12 7 $16^b$, 265 $7^d$, cf B 12 18 $13^d$

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५०
कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१
यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२
श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३

अर्जुन उवाच ।

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४

श्रीभगवानुवाच ।

प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६
यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७
यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८
विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९

---

50 Ś4 om 50 — $^{a}$) G4 बुद्ध्या (for बुद्धि-) Ś1-3 K6 जहातीमे, Cā k l m n r ś u °तीह (as in text) — $^{d}$) K1 2 D8 8 योग, Cā c k l m n r ś u योगः (as in text)

51 $^{a}$) Ś1 °युक्तात्मा, Cā g l m n r ś u °युक्ता हि (as in text) — $^{c}$) Ś2 4 (marg as in text) 6 Cā कर्मबंध°, Cg l n r ś u जन्मबन्ध° (as in text)

52 $^{b}$) Ś1 D8 Cā b k व्यवतरिष्यति (Cb k °सि), D6 व्यतितरिष्यते, M8 व्यवकरिष्यति, Cl n r ś u व्यतितरिष्यति (as in text)

53 $^{b}$) Ś6 यथा, Cā l m n r ś u यदा (as in text) Ś1. 3-5 Ck निश्चिता, B2 Co निष्फला, T2 निश्चलं, Cā l m n r ś u निश्चला (as in text) — $^{d}$) B1 अवाप्स्यति, Cā k. l m n r ś u °प्स्यसि (as in text)

54 $^{a}$) K6 G1 स्थिर°, Co g k l m n r ś u v स्थित° (as in text) — $^{b}$) K2 T2 G2 3 M6 Co °धिस्तस्य; Cg l m n r ś u °धिस्थस्य (as in text) — $^{c}$) Ś2 3. 6 K6 D2 T2 G1 2 Cg स्थिरधी°, Cl n r ś u v स्थितधी (as in text) D6 विभाषेत, Cā c l n r ś u v प्रभा° (as in text) — $^{d}$) Ś1-3. 4 (*sup lin* as in text) 6 K6 Cā व्रजेच्च, Cl n. ś u व्रजेत (as in text) Co cites व्रजेत् G3 समासेत व्रजेत का

55 K6 श्रीकृष्ण उ°, M1. 3-5 भगवान् — $^{b}$) Co cites मनोहरान् — $^{c}$) Da1 तुष्टि° — $^{d}$) K6 D2 G1 Ck स्थिरप्र°; T1 स्थित प्र°, Cā c g k l n r ś u स्थितप्र° (as in text) T2 तथो°.

56 Cb is missing from $56^{cd}$ up to 6 25 $3^{d}$ along with the text — $^{c}$) Cf Gītā 4 $10^{a}$ B 12 162 $20^{c}$ — $^{d}$) Ś2-4 6 K6 D2 G1 Cg स्थिरधीर्, Ck l n r ś u स्थितधीर् (as in text)

57 D5 om $57^{cd}$ — $^{d}$) = $58^{d}$, $61^{d}$, $68^{d}$ K6 स्थिरप्रज्ञस्तदोच्यते (cf $55^{d}$), Cc. k l n r ś u as in text

58 D2 reads 58 after 69 — $58^{ab}$ = (var) B 12 21 $3^{ab}$, 174 $51^{ab}$ — $^{b}$) = B 12 26 $13^{d}$ B 14 46 $44^{b}$ Da1 G3 °नि च (for °नीव) Ś3 4 (marg) 5 Ck सर्वत°, Cl r ś u सर्वश° (as in text) — $58^{cd}$ = $68^{cd}$ — $^{c}$) = B 7 42 $13^{a}$, 54 $18^{c}$ B 12 306 $10^{a}$ cf B 12 239 $13^{a}$, 246 $6^{c}$ B 14 42 $46^{b}$ — $^{d}$) = $57^{d}$, $61^{d}$ Ś K6 Ck स्थित(Ś2 3 K6 °र)प्रज्ञस्तदोच्यते (cf $55^{d}$), Cl r ś u as in text

59 = B 12 204 16 D8 reads 59 after 61. — $^{b}$) D6 M1 3-5 Cv रसवर्ज्यं

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६०
तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१
ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ ६२
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ६३
रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४
प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६५
नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६६
इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७
तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८
या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ C 6 947 B 6 26 69 K 6 26 69

60 $^a$) Ś1 K6 Cā g k यत्तस्यापि हि, B4 D1 यततोपि हि, T2 यतयो ह्यपि, Cl m n. r ś u यततो ह्यपि (as in text) — $^b$) D8 नरस्य तु, Cl m n r ś u पुरुषस्य (as in text) G8 °स्याविपश्रित — $^c$) = B 12 250 3$^a$

61 $^a$) T2 संगम्य Ś K6 Cā k तानि सयम्य मनसा, Cl r ś u as in text Cg cites मनसा — $^b$) = Gītā 6 14$^d$ D2 यत्त, Cā k l. m n r ś u युक्त (as in text) Ś1 4 (sup lin as in text) 5 6 Cā k तत्पर, Cg l m n r ś u मत्पर (as in text) — T2 om 61$^{cd}$ — $^d$) = 57$^d$, 58$^d$, 68$^d$ K6 स्थिरप्रज्ञ स उच्यते, Cā. r ś u as in text — After 61, D8 reads 59

62 B2 om (hapl) 62–68 — $^b$) Ś6 Cā सग स्तेष्वभिजायते, D6 °स्तेष्वप°, Cg k l n r ś u v as in text — $^d$) Ś1 °धोपि, Ck l n r ś u °धोऽभि- (as in text)

63 B2 om. 63 (cf v l 62) — $^b$) G8 विस्मृतिभ्रम, Cā k l m n. r ś u स्मृतिविभ्रम (as in text) — $^d$) D5 तथा च तत् (corrupt), Cā k l m r ś u बुद्धिनाशात् (as in text) D2 Cm r विनश्यति, Cā l ś u प्रण° (as in text)

64 B2 om 64 (cf v l 62) — $^a$) Ś1. 2 वियुक्तस्तु, Ś3 Ck विमुक्तैस्तु, K6 विमुक्तस्तु, B3 4 D8 वियुक्तैश्च, Cl m. n r ś. u वियुक्तैस्तु (as in text) — $^b$) Ś6 G1 2 M2 विषयार्णीन्द्रियैश्चरन्, Ck l m n r ś u as in text

65 B2 om 65 (cf v l 62) — $^d$) Ñ1 (marg as in text) D3–5 7 T G M3 4 °तिष्ठति, D6 °तिष्ठत, Cā k l m n r ś u °तिष्ठते (as in text)

66 Ś4 5 Ck om 66–67 B2 om 66 (cf v l 62) Ś1 transp 66–67 and 68–69 — $^a$) = B 12 286 16$^a$ — $^d$) = 3 222 12$^d$

67 = (var) 3 202 24 K1 om 67$^a$–68$^b$, Ś4 5 B2 Ck om 67 (cf v l 66, 62) For sequence in Ś1, cf. v l 66 — $^a$) M1 विचरतां, Cl n r ś u हि चरता (as in text) — $^b$) G1 यन्मयोनु°, Cl m r ś u v as in text — $^c$) D8 हरते, M2 हरतं, Cl r ś v हरति (as in text)

68 B2 om 68 (cf v l 62), K1 om 68$^{ab}$ (cf v l 67) — $^b$) Ś3. 5 Ck सर्वत, Cl. n r ś u सर्वश (as in text) — 68$^{cd}$ = 58$^{cd}$ — $^d$) = 57$^d$, 61$^d$ K6 स्थिरप्रज्ञा च सा स्मृता, Ck l n r ś u as in text

69 M2 om (hapl) 69$^c$–70$^d$ — $^b$) K0 जाग्रति, Cā g k l m n r ś u जागर्ति (as in text) — $^c$) B1 तस्यां K0 Da1 D5 8 T2 Cg जागर्ति, G2 जाग्रंति, Cā k. l m n r ś u v जाग्रति (as in text) — $^d$) Ś1–3 6 K6 Cā g रात्रि, Ck. l. m n r ś u v निशा (as in text) — After 69, D3 reads 58

आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ॥ ७०

विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः ।
निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ७१
एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ ७२

इति श्रीमहाभारते भीष्मपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

# २५

अर्जुन उवाच ।
ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १
व्यामिश्रेणैव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २
श्रीभगवानुवाच ।
लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३

---

70 = ( var ) B 12 251 9 M2 om 70 ( cf v l 69 ) — a ) K1 अपूर्वं°, D8 अपूर्यं° G1 अचल प्रतिष्ठं, M1. 8 अचलप्रतिष्ठित, Cā k l m n ś u अचलप्रतिष्ठ ( as in text )

71 a ) K1 transp कामान् and सर्वान् — b ) Some MSS निस्पृह° — c ) = Gītā 12 13c B 12 222 23a B 14 35 19c, 38 5a, 44 22c, 46 45c, 47 9c, 15c cf B 12 158 29b, 33c, 307 37d B 13 108 5a B 14 40 7d — d ) Ś1 स शातम् T2 अभि-, Cā k l m n r ś u अधि ( as in text )

72 a ) K1 D1 6 G8 ( by corr ) M5 ब्रह्मी — b ) Ś1 D8 विमुह्यसि, D6 विमुच्यति, G8 न मुह्यति, Cā k l n r ś u विमुह्यति ( as in text ) — c ) Ś1 °काले तु, Cā k l m n r ś u °कालेऽपि ( as in text ). — d ) D6 °निर्वाणम् Ś1 ऋच्छसि, Ñ1 M2 इच्छति, G8 ऋच्छतु, Ck l m n r ś u v ऋच्छति ( as in text )

Colophon om in Ś8-6 — *Sub-parvan* Ś1 Ko 8 5 Ñ1 B Da1 Dn D1 2 4-6 8 T G8 4 M1 2 4 ( a few of these MSS with prefixed श्री or श्रीमद् ) भगवद्गीतासूपनिषत्सु, K2 श्रीभगवद्गीता, Ko D8 7 भगवद्गीतासु ( Ko °या ), G1 गीतायां Ko 8 5 Ñ1 B2 8 Da1 D2 5 8 T G4 cont ब्रह्मविद्यायां योगशास्त्रे श्री कृष्णार्जुनसंवादे, K6 Dn2 G2 M1 श्री( G2 om श्री )- कृष्णार्जुनसंवादे, Dn1 ब्रह्मविद्यायां, D6 ब्रह्मविद्यायां योग° शास्त्रे, G1 योगशास्त्रनिर्णय°, G8 योगशास्त्रे कृष्णार्जुन संवादे — *Adhy name* Ś1 Ko 2 8 5 Ñ1 B2-4 Da1 Dn D1 4 5 8 T G2 4 Cn r ś सांख्ययोग° ; K1 °व्ययोग°, D2 इंद्रियसंयमयोग ; D6 स्मृतिक° — *Adhy no* ( figures, words or both ) Ś1 M4 26, D5 M2 25, T G 24 ( as in text ). — *Bhagavadgītā adhy no* ( figures, words or both ) Ś1 Ko-8 5 6 Ñ1 B Da1 Dn D1-8. 6 8 G2 8 M1. 8 5 2 — *Śloka no* K8 6 Da1 73, K5 Dn D2 5 6 G2 72 ( as in text )

## 25

☞ K4 Da2 om this adhy ( cf note at the beginning of adhy 23 )

1 Before the ref , T1 G1 4 ins ॐ तत्सत् — b ) D6 मनोबुद्धिर्, Ck l m n r ś u v मता बुद्धिर् ( as in text )

2 a ) Ś8 Ñ1 B D6 Cg n r ś u °श्रेणेव ( for °श्रेणैव ) — b ) Da1 D8 G1 M1 4 बुद्धिर्

3 M1 8-5 भगवान् — a ) K1 D6 विविधा, Cā.

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४
न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५
कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥ ६
यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७
नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिध्येदकर्मणः ॥ ८
यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९
सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १०
देवान्भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११
इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२
यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३
अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५
एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६

C 6 966
B 6 27 16
K 6 27 16

---

g k. l m. n r ś u द्विविधा (as in text) —b) Ś3 Cā transp पुरा and मया —c) Cf. B 12 301 62a Ś1 सस्याना —d) Ś1 कर्मिणा, Cā g k l m n r ś u योगिनाम् (as in text)

4 c) D5 नैव, Cā g l m n r ś u न च (as in text) —d) D3 6 संसिद्धिमधि°, Cā k l m r ś u as in text

5 c) K1.2 स्ववश, Cā. k l n r ś u as in text —d) Ś1 K1.2 सर्वै, Ñ1 Da1 D2 8 T2 G3 सर्वे ; Cā k l n r ś u सर्वः (as in text)

6 b) D3 आस्ते च, Ck तथास्ते, Cg l n r ś u य आस्ते (as in text) —d) Ś3 Cg मूढाचार, Cb k l m n r ś u as in text

7 b) Ko सयम्य, Ck. l n r ś नियम्य (as in text) D6 नर, Cn. ś u [ऽ]र्जुन (as in text)

9 a) G1 ह्यन्यत्र (hypermetric), Ck l n r ś u [ऽ]न्यत्र (as in text) —b) D1 (marg) धर्म°, Ck. l. m n r ś u कर्म° (as in text)

10 d) K2 एष वोत्तिष्ट कर्मकृत्, Ck. l n. r ś as in text

11 Ś1 om 11–13 —c) Cf B 14 23 24b K1 भावयतु, Cl. n r ś u भावयन्त (as in text) —d) Cf. 3 221 28d B 12 123 25b K1 श्रेयात्, Cg k l n r ś u श्रेय (as in text) M8 अवीप्स्यसि (sic), Ck l r ś u अवाप्स्यथ (as in text)

12 Ś1 om 12 (cf v l 11) —a) Ś8 5 6 Ck कामान्, Cl r s u भोगान् (as in text) —c) Ñ1 Da1 D8 G2 3 M4 Cv °येभ्यो

13 Cf Manu 3 118 Ś1 om 13 (cf v l 11) —a) Ś0 °शना, Ck l n r ś u °शिन (as in text) —b) Cf 3 81 149c B 12 35 17d, 37d B 13 126 15d Ko तेपि, Ck. l n. r ś. u सर्व (as in text) —c) Ś0 K1–3 Ñ1 D2 6 G3 भुजते, Ck l n r ś u भुञ्जते (as in text) T G1 2 4 ते त्वघं भुंजते पापा[ ]

14 c) G3 धर्माद्, Cā g k l m n r ś u यज्ञाद् (as in text) —d) Ś1 K1 2 Ñ1 Da1 यज्ञ ; Cā k l n r ś u यज्ञ (as in text)

15 a) Ko ब्रह्म कर्मोद्भव विद्धि, Ck l. m n r ś u as in text

16 Ś1 om 16 —a) G3 कर्म, Ck l m n r ś u चक्र (as in text) —b) K1 2 °यते ह, M1 4 °यतीव, Ck l m n r ś u °यतीह (as in text) —c) Ś0 K6 अल्पायुर्, Ck l m n r ś u अघायुर् (as in text) —d) G1 मोह, Ck l. n r ś u मोघ (as in text)

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ १७
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८
तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥ १९
कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥ २०
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१
न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २३
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४
सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५
न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ २६
प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥ २७
तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥ २८

---

17 a) Ś1 s-5 यश्चात्म°; Cb l m n r ś u v य स्त्वात्म° (as in text) — c) D3 °नैव च, Cl m. n r ś u v °न्येव च (as in text)

18 b) Ś0 किंचन, Cl m n r ś u कश्चन (as in text)

19 Ś3 reads 19 after 24 — b) Ñ1 °चर M2 °चरेत्, Cā k l m n r ś u °चर (as in text) — d) Ś1 (sup lin as in text) s D1 Cā पर प्राप्नोति, Ck l. n r ś u परमाप्नोति (as in text) Ś1 T2 पूरुष, Ck l r ś u पूरुष (as in text)

20 a) D2 °णेव, Ck l n r ś u v °णैव (as in text)

21 a) Ś1 आचरते, Ck l r ś u v आचरति (as in text)

22 a) G3 ते, Cl r ś u मे (as in text). — b) = B 12 45 $16^{b}$ B 13 14 $31^{b}$, 147 $8^{d}$ — c) Ś1 नानुवाप्तमवा°, G3 नानावाप्तमवा°, M5 (inf lin as in text) नानवाप्तमवाप्त वा, Ck l r ś u v as in text — d) Ś1 s-6 K6 Cā k प्रवर्तेय, K5 कर्तुरेव, Cb वर्ताम्येव, Cl n r ś u वर्त एव (as in text)

23 a) Ś1 यदि ह्यह न वर्तेय, Ś0 Cb यद्यह न प्रवर्तेय (Cb °य), D3 यदह न च वर्तेय, Ck l n r ś u यदि ह्यहं न वर्तेयं (as in text) — $23^{cd}$ = Gītā 4 $11^{cd}$ — c) Ś3 s K6 Cb l °वर्तेरन्, Cl n r ś u °वर्तन्ते (as in text)

24 With $24^{ab}$, cf 3 33 $10^{ab}$ — a) Ś3 अमी; Ck l r ś u इमे (as in text) — b) D1 चेदिह; Cl r ś u चेदहम् (as in text) — c) K3 तु, Cā k l r ś u v च (as in text) — d) Ś3 अप°; Cā k l r ś u उप° (as in text) — After 24, Ś3 reads 19

25 b) D5 यथाकुर्वत, Ca k l n r ś u यथा कुर्वन्ति (as in text)

26 c) K6 योजयेत्; B3 जोज°, Cā k l n r ś u जोष° (as in text) — d) K2 मुक्त; Cl n r ś u युक्त (as in text)

27 b) Ś1 s-. K0 6 Cb k भागश, Cl r ś सर्वश (as in text) — d) = B 12 226 $13^{d}$, cf 227 $33^{d}$ M5 s कर्मा°, Cā g k l n r ś u कर्ता° (as in text)

28 K5 om 28 — b) D2 °विभागश (Gītā 4. $13^{b}$), Cā g k l n r ś u v °विभागयो° (as in text) — c) Cf B 12 305 $23^{a}$ Ś5-6 K6 Cā k गुणार्थे, Cb l m n r ś u v गुणेषु (as in text) — d) K0 मज्जते, K1 सजते, M4 सज्यते, Cā l n r ś u सज्जते (as in text)

प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ॥ २९
मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३०
ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ३१
ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ३२
सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३
इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४
श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५

अर्जुन उवाच ।

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६

श्रीभगवानुवाच ।

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ C 6 967 B 6 27 37 K 6 27 37

---

29 [b]) Ko भजते, G2 मज्यते, Cg सज्जति, Cā k l n r s u सज्जन्ते (as in text)

30 [b]) Ś1 सन्यस्याध्यात्म°, D8 विन्यस्याध्यात्म°, Cā g k l m. n r ś u as in text — [c]) = B 12 9 14[c]

31 [a]) D2 (marg sec m) यो मे, D6 ये ये, Cā g k. l n r ś u ये मे (as in text) K6 इमं, Cā. l r ś u इद (as in text) — [b]) Ś3-6 K6 D8 Cb k °वर्तंति, Cā. l n r s u °तिष्ठन्ति (as in text) — [c]) Cf Gītā 18 71[a] — Ś1 om (hapl) 31[d]–32[a] — [d]) Ś3 K6 मुच्यंते सर्वकर्मभि, Ś4-6 G3 Cā k मुच्यते सर्वकिल्बिषै (= Gītā 3 13[b]), T1 G4 मुच्यते ते हि कर्मभि, Cb ते विमुच्यति कर्मभि, Cl m n r ś u as in text

32 Ś1 om. 32[a] (cf v l 31) — [b]) Ś3-6 K6 D8 वर्तंति, Ck l r ś u °तिष्ठन्ति (as in text) — [d]) D6 मचेतन, T1 G4 विचेतस, Cā. l n r ś u मचेतस (as in text) K6 Cb k विनष्टान्विद्ध्यचेतस

33 [c]) = 2 38 17[c]

34 [a]) D2 [इ]द्रियार्थेह, Ck l n r ś u [इ]न्द्रियस्यार्थे (as in text) — [d]) G2 परिबधिनौ, Ck l ś u परिपन्थिनौ (as in text)

35 35[ab] = Gītā 18 47[ab] cf Manu 10 97[ab] — [a]) Cf 3 30 23[c] — [c]) Cf B 12 95 17[a] — [d]) Ś1 3-5 K6 Cb k परधर्मोदयादपि, Cā l. n r ś u as in text

36 [c]) K2 इव, Da1 नापि, Cā b l r ś u मपि (as in text) Ś3-5 K6 Ck मनिच्छमानोपि बलाद् — [d]) Ś3-5 K6 माक्रम्येव, T2 बलादपि, Cā b l r ś u बलादिव (as in text) — After 36, K6 ins lines 1–2 of 89*

37 G3 M1 3-5 भगवान् — [a]) K1 T1 G4 Cā काम एव, Cg k l m n r ś u काम एष (as in text) — Ś K6 D8 (marg sec m) Cā b k ins after 37 (K6 ins lines 1–2 after 36)

89* अर्जुन उवाच ।

भवत्येष कथ कृष्ण कथ चैव विवर्धते ।
किमात्मकः किमाचारस्तन्ममाचक्ष्व पृच्छत ।

श्रीभगवानुवाच ।

एष सूक्ष्म पर शत्रुर्देहिनामिन्द्रियै सह ।
सुखतन्त्र इवासीनो मोहयन्पार्थ तिष्ठति ।
कामक्रोधमयो घोर स्तम्भहर्षसमुद्भव । [5]
अहकारोऽभिमानात्मा दुस्तर पापकर्मभि ।
हर्षमस्य निवर्त्यैष शोकमस्य ददाति च ।
भयं चास्य करोत्येष मोहयस्तु मुहुर्मुहु ।
स एष कलुष क्षुद्रश्छिद्रप्रेक्षी धनजय ।
रज‍प्रवृत्तो मोहात्मा मनुष्याणामुपद्रव । [10]

[ (L 2) Ś6 समाचक्ष्व (for ममा°) — Lines 5–8 missing in Cb — (L 6) Ś1 दु‍सह, Cā k दुस्तर (as above) — (L 7) Ś1 निवर्त्यैव, D8 निवृत्यैव, Cā k निवर्त्यैष (as above) Ś2 हर्ष प्रवर्तयत्येष D8 मोहम्, Cā k शोकम् (as above) — (L 8) Ś1 D8 Cā k करोत्येव — (L 10) Ś2 6 D8 मानुषाणाम्, Ś4 Cā मानुष्याणाम् ]

धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ।
यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८
आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९
इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४०
तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहिह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१
इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४२
एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३

इति श्रीमहाभारते भीष्मपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

## २६

श्रीभगवानुवाच ।
इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १
एवं परंपराप्राप्तमिमं राजर्षयो विदुः ।

---

38 Ś4 om 38 — a) K3 D6 धूमेनाव्रीयते, T2 विधूमेनायते, G2 धूमेनावृयते; G3 °नाव्रियते, M1 5 (inf lin as in text) °नापिहितो, Cg k l m r ś u as in text K1 om from वह्नि up to °मेते in 39a — d) Ś3 5 6 K6 Cā b g k तथाने(K6 Cb °था ते)नाय मावृत°, Cl. m n r ś u as in text

40 a) = B 13 149 36a B 14 51 3c — c) M3 °त्येषु, Cā l r ś u °त्येष (as in text) — d) K0 6 Ñ1 B3 Dn1 (before corr) D6 8 G2 3 देहिनां, M1 3 5 देहिन°, Cā k l n r ś u देहिनम् (as in text)

41 b) = 3 34 9d T2 नियत्य, Ck n r ś u नियम्य (as in text) — c) Ś1–3. 6 Cā b k प्रजहीह्येन, C n r u प्रजहि ह्येनं, Cś प्रजहिह्येन (as in text)

42 Cf B 12 248 2 Kathopaniṣad 1 3 10 — b) = B 12 297 19d — c) = B 12 246 3c — d) K6 D6 बुद्धेर्य° (by transp) Ś4 (m as in text) बुद्धे° परतरस्तु स, Cā k l n r ś u as in text

43 a) Ś0 D2 Cā मत्वा, D6 बुद्ध°, C k l n r ś u बुद्ध्वा (as in text) — b) Ś1 G2 सस्तभ्य, K0 संस्तुत्य, G1 सयम्य, Cā k l n r ś u v संस्तभ्य (as in text) — c) Cf. 3 34 59c

Colophon om. in Ś3–6 — *Sub-parvan* Ś1 K0 3. 5 6 Ñ1 B Da1 Dn1 D1–3 T G2 3 M2 4 (a few of these MSS with prefixed श्री or श्रीमद्°) भगवद्गीतासु (K6 °या) उपनिषत्सु (K6 D1 3 7 om उप°), G1 गीताया K3 Ñ1 B1 Da1 Dn1 D2 3 G2 cont ब्रह्मविद्याया योगशास्त्रे (G2 परब्रह्मविद्याया योगशास्त्रनिर्णये) श्री(G2 om. श्री)कृष्णार्जुनसंवादे, K5 ब्रह्मविद्यायां, K0 श्रीकृष्णार्जुनसवादे, D5 6 ब्रह्मविद्याया योगशास्त्रे — *Adhy name* Ś1 कर्मप्रतिष्ठायोग°, K0–3 6 Ñ1 B1–3 Da1 Dn D1–4 3 T G1. 4 Cr कर्मयोग°, K5 कर्मनिरूपणयोग°, B4 कर्मसन्यासयोग°; D6 ज्ञानयोग, G2 कर्मब्रह्मयोग°, Cś कर्मप्रशसायोग° — *Adhy no* (figures, words or both) D5 (wrongly) 62, T G 25, M2 26, M4 27 — *Bhagavadgītā adhy no* (figures, words or both) Ś1 K0–3 5 6 Ñ1 B Da1 Dn1 D1–4 6 8 G2 3 M1. 3. 5 3 — *Śloka no* K1 3 5 Dn D1. 2 5 G2 43, K6 48, Da1 42

### 26

☞ K4 Da2 om this adhy (of note at the beginning of adhy 23)

1 a) Ś1. 3–5 K6 Ck एव, Cl m n r, ś u इम (as in text) Da1 T1 (before corr) M2 विव° स्वतो, Ck l m n r ś u विवस्वते (as in text)

2 a) Ś2 4–6 K6 D3 Ck परपराख्या(D3 °या)तम्,

स कालेनेह महता योगो नष्टः परंतप ॥ २
स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३

अर्जुन उवाच ।

अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४

श्रीभगवानुवाच ।

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५
अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६
यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ७
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८
जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९
वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १०
ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११
काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२
चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३
न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।

C 6 1007
B 6 26 14
K 6 26 14

---

K0–2 परस्परा( K0 °र )प्रासम्, Cl n r ś u परपराप्रासम् ( as in text ) — $^{b}$) G3 M8 इद, Ck l r ś u इम ( as in text ) — $^{c}$) Ś1 ( sup lin as in text ) Ck कालेनैव, D2 तु कालेन, Cā l ś u कालेनेह ( as in text )

3 $^{a}$) Cb स एव च, Cl r ś u स एवाय ( as in text ) — $^{b}$) Ś1 6 Cb सनातन, Cā h l r ś u पुरातन ( as in text ) — $^{c}$) Ś1 चासि, Cā g l ś u चेति ( as in text ) — $^{d}$) Cf B 13 17 19$^{d}$. Ś1 4 ( sup lin as in text ) °स्य चैतद्, Ś3 Ch °स्यमेतद्, Dn1 °स्य ह्येतम्, Cā b l r ś u °स्य ह्येतद् ( as in text )

4 $^{a}$) D4 m T1 G2 8 Cr अवर, Cā g k l m n ś u v अपर ( as in text ) D2 ( marg sec m. as in text ) आद्य भगवतो जन्म — $^{c}$) = B 12 242 3$^{c}$ Ś1 8–5 Cb एव, Ch l n r ś u एतद् ( as in text ) — $^{d}$) D3 असि, Ck l n r ś u इति ( as in text )

5 $^{b}$) G2 ( by corr ) वा, Cā h l r ś u च ( as in text ) B4 च तव ( by transp ) — $^{c}$) Ś6 D2 वेद्मि, Ck l ś u वेद ( as in text ) — $^{d}$) B2 Cā वेत्सि, Cl ś u वेत्थ ( as in text )

6 $^{b}$) Cf B 7 202 115$^{b}$ — $^{c}$) Cf Gītā 9 8$^{a}$.

7 = ( var ) 3 187 26 — $^{d}$) Ś3 Cg k तदा त्मानं, Cā b l r ś u as in text

8 $^{a}$) K1 साध्याना, Ck l m r ś u साधूनां ( as in text ) — $^{c}$) = 6 61 63$^{a}$ cf 6 57 37$^{c}$ B 7 181 29$^{a}$ B 14 54 13$^{d}$

9 $^{d}$) D0 T1 G3 4 नेति, Ck l r ś u v नैति ( as in text ) K2 पाण्डव, Cl ś u सोऽर्जुन ( as in text )

10 $^{a}$) Cf 6 24 56$^{c}$ B 12 162 20$^{c}$ — $^{b}$) Ś2 3 4 ( sup lin ) 5 6 K6 Cā b k मद्व्यपाश्रया, K1 M1 4 मामपाश्रिता, Cg l ś u मामुपाश्रिता ( as in text )

11 11$^{cd}$ = Gītā 3 23$^{cd}$

12 $^{a}$) K2 कर्मण, D3 परमा, Cā k l n r ś u कर्मणा ( as in text ) — $^{b}$) M2 इति, Cg l n r ś u इह ( as in text )

13 $^{a}$) K1 चतुर्वर्ण्यं, Ck l m n r ś u चातुर्वर्ण्यं ( as in text ) D6 चातुर्वर्णा मया सृष्टा — $^{b}$) Ś1 3–6 K3 6 Cā b k °विभागत, Cl m n r ś u °विभागश ( as in text ) — $^{d}$) Da1 ( before corr ) D8 T2 विद्धि क°, Cā k l n r ś u v विद्ध्यक° ( as in text )

14 $^{a}$) K3 D2 लिपति, Ck m n r ś u लिम्पन्ति

इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४
एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५
किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६
कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७
कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८
यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९
त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ॥ २०
निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१
यदृच्छालाभसंतुष्टो द्वंद्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥ २२
गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३
ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४
दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५
श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।

---

(as in text) —$^{b}$) Ś1 T1 G4 कर्मफलस्पृहा, Ś2 8 4 (*sup lin*) 5 6 K0 Cā k काम॰ फलेष्वपि, Cb l m n r ś u कर्मफले स्पृहा (as in text) —$^{c}$) G1 यो वि॰, Cā k l n r ś u योऽभि॰ (as in text) —$^{d}$) K1 पद्यते, Cā k l n r ś u बध्यते (as in text)

15 $^{b}$) Ñ1 सर्वैर्, Ck l r ś u पूर्वैर् (as in text) —$^{c}$) K2 कर्मेव, Ck l r ś u कर्मैव (as in text) —$^{d}$) Cf. 6 17 9$^{b}$ Ś6 पूर्वैं पूर्वतरैं, D6 पूर्वं पूर्वतरं ; Ck l m n r ś u पूर्वैः पूर्वतर (as in text)

16 $^{c}$) K1 Ñ1 Da1 D6 प्रवक्षामि (sic) —$^{d}$) = Gītā 9 1$^{d}$ K2 Da1 Dn1 D1 3 6 8 मोक्षसे K2 श्रमात्, Cā k l n r ś u [ऽ]शुभात् (as in text)

17 $^{a}$) Ś1 2 6 K6 कर्मणोपि हि, Cg l r ś u v ॰णो ह्यपि (as in text) —$^{c}$) Ś0 D2 अकर्मणोपि, D1 (by corr) ॰णस्तु, Ck l m r ś u ॰णश्च (as in text)

18 D6 reads from 18 up to समग्र in 23$^{d}$ in margin —$^{ab}$) Ś1–3 5 K6 Cg k पश्यत्यकर्मणि, Cā b l m n r ś u v पश्येद॰ (as in text) —$^{d}$) Ś K0 Cā b स प्रोक्तः, K8 सयुक्त॰, Cl m n r s u स युक्त॰ (as in text) Ś1 सर्वकर्मकृत्, B4 कृत्स्नकर्मसु ; Cg k l m r ś u कृत्स्नकर्मकृत् (as in text)

19 $^{a}$) = 3 203 43$^{a}$ Prior half of line 1, 88* above —$^{b}$) K0 कामक्रोधविवर्जिता॰; Cā g l n r ś u as in text

20 $^{b}$) D6 निरामय॰, Cā k l m n r ś u निराश्रय॰ (as in text) —$^{c}$) Dn1 G2 कर्मण्यपि प्रवृत्तोपि, D2 कर्मभि॰ सम्प्रवृत्तोपि, G3 कर्मण्यभिप्रवर्तोपि, Ck l n r ś u as in text Cā cites कर्मणि and प्रवृत्तोपि —$^{d}$) Cf Gītā 5 8$^{a}$ D5 मे; Cl n r ś u स॰ (as in text)

21 $^{a}$) Ñ1 (marg as in text) यदाशीर्; Cā g l m n r ś u v निराशीर् (as in text) —$^{c}$) G3 शरीर —$^{d}$) = Gītā 18 47$^{d}$

22 $^{b}$) Cf. B 12 174 35$^{b}$ —$^{d}$) D2 कृत्वा च, Cg l n r ś u कृत्वापि (as in text) D1 स बध्यते; Cg l n r s u निबध्यते (as in text)

23 $^{a}$) Ñ1 (marg *sec m*) युक्तस्य, Ck l m n r s u मुक्तस्य (as in text) —$^{c}$) Ś K1 6 Cā k यज्ञा(Ś1 ज्ञाना)यारभत, Cl n r ś u यज्ञायाचरत॰ (as in text)

24 $^{c}$) B2 ब्रह्म तेनैव, Cā g k l n r s u v ब्रह्मैव तेन (as in text)

25 $^{a}$) G3 ज्ञेय, Cv यज्ञ, Cā g k l m n r ś u यज्ञं (as in text) —$^{b}$) Ś2 4 5 K6 Cb k समु॰, Cā g l n r s u पर्यु॰ (as in text)

शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६
सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७
द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८
अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९
अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३०
यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१
एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।
कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२
श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३
तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४
यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५
अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३६
यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७
न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८
श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।

C 6 1032
B 6 28 39
K 6 28 39

26 M2 om. (hapl.) $26^{c}$—$30^{b}$, Ś1 K2 om (hapl) $26^{cd}$ D5 (*sic m*) writes $26^{cd}$ in marg

27 M2 om 27 (cf v l 26) M4 lacuna for $27^{a}$ —$^{d}$) T2 °दीपिके, Cā k.l.n.r ś u as in text

28 M2 om 28 (cf. v l. 26) —$^{ab}$) Da1 ज्ञान°, Cā.k l m n.r ś u योग° (as in text) Cg द्रव्ययज्ञस्तपोयज्ञयोगयज्ञ — After $28^{ab}$, D6 reads $35^{cd}$ (*repeating* it in its proper place) —$^{d}$) D8 मुनय°, Ck.l n.r ś u यतय° (as in text) A few MSS शसित°

29 M2 om 29 (cf. v l. 26) —$^{a}$) Cv अपानं, Cvp as in text K1 निर्जहति (hypermetric!), G2 जुह्वती; Cā g k.l m.n r ś u जुह्वति (as in text) — K2 om. (hapl.) $29^{b}$–$30^{a}$

30 M2 om. $30^{ab}$, K2 om. $30^{a}$ (cf v l 26, 29) —$^{d}$) Ś1 (m as in text) K0 D1.6 °किल्बिषा°, Cg k.l.n r s u °कल्मषा° (as in text)

31 $^{c}$) Cf. B 12 268 $40^{a}$ —$^{d}$) G3 कुतोन्यत्, Ck l n r ś u as in text

32 $^{b}$) D2 मखे, Cā.g k l m n r ś u मुखे (as in text) —$^{d}$) Ś1 एतज्, D6 एन, Cg k l m n r ś u एव (as in text) K2 Ñ1 Da1 Dn D1.3 5 6 विमोक्षसे

33 $^{a}$) T1 G1 द्रव्यमयाद्यज्ञो, M2 ब्रह्ममयाद्यज्ञाज्, Cā g k l n r ś u द्रव्यमयाद्यज्ञाज् (as in text) —$^{c}$) Dn1 D8 सर्वकर्म°, Cā g k.n v सर्वं कर्म° (as in text)

35 Ś3 om 35 D6 reads $35^{cd}$ (for the first time) after $28^{ab}$ —$^{c}$) Cv ज्ञान (for येन) Ś1 2 4 (m as in text) 5 K6 D2 3 M2 Cb अशेषाणि, Cl m.r ś u अशेषेण (as in text) —$^{d}$) A few MSS द्रक्षसि

36 $^{c}$) D6 सर्वे-, Cā r ś u सर्वं (as in text)

37 D5 om. $37^{cd}$ D8 reads $37^{cd}$ twice, the repetition being subsequently deleted —$^{d}$) D8 (before corr) [ऽ]र्जुन (for तथा)

38 $^{a}$) D8 सज्ञान-, Cg k.l r s u ज्ञानेन (as in text) —$^{c}$) S1 °ससिद्ध, D8 (before corr) T1 G2 (before corr) 4 °ससिद्धि°, Ck l n r ś u °ससिद्ध° (as in text) —$^{d}$) Ś6 विंदसे, Cā l.r s u विन्दति (as in text)

39 $^{b}$) D2 मत्पर° सजितेंद्रिय°, Ck l.r ś u as

ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९
अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४०
योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥ ४१
तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२

इति श्रीमहाभारते भीष्मपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

# २७

अर्जुन उवाच ।
संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १

श्रीभगवानुवाच ।
संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २

---

in text — c) K6 G3 पर, Ck l n r ś u परां (as in text)

40 c) = B 12 133 14a, 199 61a

41 a) T2 वेद, Cg k l n r ś u योग (as in text) — b) K3 D8 M3, 5 Cn °सशय°; Ck l r ś u as in text — d) = Gītā 9 9b

42 b) Ś1 कृत्स्न; Cā, k l n r, ś u हृत्स्थं (as in text) — c) Ś2, 3 K6 Ck छित्वैवं; Cg l r ś u छित्त्वैनं (as in text)

Colophon om in Ś3–6 In D2, after श्रीकृष्णार्जुन, it is lost on a missing fol — *Sub-parvan* Ś1 K0–2, 6 Ñ1 B Da1 Dn1 D2–4, 6–8 T G2–4 M2, 4 (a few of these MSS with the prefix श्री or श्रीमद्) भगवद्गीतासु उपनिषत्सु (K1, 2 D3, 7 om उप°), K2 G1 भगवद्(G1 om भगवद्)गीतायां K0, 3 Ñ1 B1 Da1 Dn D3, 4, 8 cont ब्रह्मविद्यायां योगशास्त्रे श्री(B1 om श्री)कृष्णार्जुनसंवादे, K2 ब्रह्मविद्यायां, K6 D2 T2 श्रीकृष्णार्जुनसंवादे, B2 योगशास्त्रे, D1 संवादे, D6 ब्रह्मविद्यायां योगशास्त्रे, G2 परब्रह्मविद्यायां योगशास्त्र निर्णये श्रीकृष्णार्जुनसंवादे — *Adhy name* Ś1 मन स्योग, K0 Da1 D3 कर्मसंन्यासयोग, K3 D1 ब्रह्मार्पणयोग K ब्रह्मज्ञानप्रशंसायोग, K6 ज्ञानकर्मसंन्यास विविधयज्ञविभाग, Ñ1 विवस्वतयोग, B1, 2 कर्मयोग, B3 सध्यासयोग, Dn (!) यज्ञयोग, D4 T2 ज्ञानयोगः, D5 यज्ञप्रशंसायोग, D6 ज्ञानसंशययोग, T1 G2, 4 विवस्वज्ज्ञानयोग, Cn यज्ञविभागयोग, Cś ज्ञानकर्म सन्यासयोग. — *Adhy. no* (figures, words or both) D6 M3 27, T G 26 (T2, wrongly, 36), M4 28 — *Bhagavadgītā adhy no* (figures, words or both) Ś1 K0–3, 5, 6 Ñ1 B Da1 Dn D1, 3, 4, 6, 8 G2, 3 M1, 3, 5 4 — *Śloka no* K1, 3, 5 Da1 Dn D2, 5, 6 42

## 27

☞ K4 Da2 om this adhy (cf note at the beginning of adhy 23)

1 Owing to a missing fol st 1–26 are lost in D2 — a) A few MSS सन्यास — b) Ñ1 B4 सशासि — c) Ś3–5 Cā b यच्छ्रेयानेतयोरेकस्, Cl n r ś u as in text — d) Ś3 Cā b v तं, Ck l n r ś u तन् (as in text) Ś1–5 K6 Cb विनिश्चितं, Cā l n r ś u as in text

2 D2 missing (cf v l 1) — b) Some MSS निश्रेय° — d) Da1 (m as in text) विशा पते (for विशिष्यते)

ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।
निर्द्वंद्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥ ३
सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४
यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥ ५
संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ॥ ६
योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७
नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ॥ ८
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९
ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १०
कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥ ११
युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२
सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३

C 6 1048
B 6 29 13
K 6 29 13

---

3 D2 missing —[a]) Da1 नित्य, M2 एव, Ck.l.n.r ś u नित्य (as in text) —[c]) G3 निर्द्वंद्वौ (sic) In G1, owing to a damaged fol, the portion of the text from हि महा up to 5[b] is lost —[d]) Ś1-3 K6 M2 Cb विमुच्यते, Cl r ś u प्रमुच्यते (as in text)

4 D2 G1 missing (cf. v l 1, 3) —[c]) D3 [आ]श्रित, Cā k l n r ś u [आ]स्थित (as in text) —[d]) K6 उभयो फलमश्नुते, Cā k.l r ś u as in text

5 Cf. B 12 305 19, 316 4 D2 missing Ś3 om 5 —[a]) M2 ज्ञान, Ck l.m n r ś u स्थानं (as in text) —[b]) Ś1-5 K1 3 6 D3 तद्योगैरनुगम्य(Ś1 °नुगीय, D3 °धिगम्य)ते, Ñ1 (before corr) तद्योगेनाधिगम्यते; Ck.l m r ś u as in text —[d]) = Gītā 13 27[d]

6 D2 missing —[a]) Cf Gītā 18 1[d] —[c]) K2 Ñ1 (marg) D3 ब्रह्मन्, Cā k l n r ś u ब्रह्म (as in text). —[d]) Ñ1 अचिरेण, Cā k.l n r ś u नचिरेण (as in text)

7 D2 missing Owing to a damaged fol 7[abc] is lost in G1 —[b]) Da1 D3 संयतात्मा, Cā k.l n r ś u विजि° (as in text) —[c]) Cf B 12 182 20[c], 210 35[c], 214 3[a], 239 23[a], 248 19[c], 262 32[d], 269 22[a], 33[c], 339 33[a] —[d]) Cb कुर्वन्वापि, Cg कुर्वाणोपि, Cā l n r ś u कुर्वन्नपि (as in text)

8 D2 missing —[a]) Cf Gītā 4 20[d] —[d]) Ś1 3 6 Da1 Cā श्वसन्स्वपन् (by transp), Ś4 श्वसञ्जपन्, Cl. r u स्वपञ्श्वसन् (as in text) Cb भुजन्गाच्छञ्श्वसन्स्वपन्

9 D2 missing —[a]) K6 विलपन्, Cā k l r u विसृजन् (as in text) —[c]) Cf Gītā 2 58[c], 68[c]

10 D2 missing —[a]) Ś1 4 (sup lin as in text) 5 K2 आदाय, Cā k l m n r ś u आधाय (as in text) — M4 om (hapl) 10[b]-11[c] —[c]) Cf B 13 18 67[b] —[d]) = B 12 351 15[b]

11 D2 missing M4 om 11[abc] (cf v l 10) —[d]) Ś3 4 (sup lin) 5 6 K6 Cā k °सिद्धये, Cb l m n r ś u °शुद्धये (as in text)

12 D2 missing —[c]) D1 कामचारेण D7 कर्मकारेण, Cā l n r ś u कामकारेण (as in text) —[d]) Da1 निबाध्यते, Cā l n r ś u निबध्यते (as in text)

13 D2 missing —[a]) K6 सर्वद्वाराणि मनसा, Cā k l m n r ś u as in text —[c]) = Śvetāśvataropaniṣad 3 18[a] Cv नवद्वारपुरे Ś1 3 5 K1 T2 Cl r ś देहे, Cā गेहे, Cu [ऽ]देही, Cb n देही (as in text) —[d]) Cf B 14 46 39[d] K8 (before corr) D3 5 कारयेत्, Cā k.l. r ś u कारयन् (as in text)

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४
नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६
तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७
विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८
इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ १९
न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।
स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २०
बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥ २१
ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२
शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ २३

14 D2 missing — [a]) Ś1 नाकर्तृत्व न कर्तृत्व, Cā. g k l n r ś u as in text — [c]) Ñ1 °सयोग, Cā. g l r ś u v °सयोग (as in text)

15 D2 missing — [b]) Da1 चैवं, Cl. n r ś चैव (as in text) Ko 1 B2 प्रभु, D5 विभो, Cl n r ś u v विभु (as in text)

16 D2 missing — [a]) K2 अज्ञानेना-, Da1 ज्ञानेन तु, Cā g k l n r ś. u v ज्ञानेन तु (as in text) M2 5 तदाज्ञान, Cā. k l. n r ś u तदज्ञान (as in text) — [b]) G2 एषा, Cā l n r ś u येषां (as in text) Da1 G8 नाशितुम्; Cā k l. n. r ś u as in text

17 D2 missing — [d]) Cf B 15 33 30[b] Ś1-8 4 (*sup lin*) 5 K6 Ck ज्ञाननिर्धौत°, Cā b l m. n r ś. u ज्ञाननिर्धूत° (as in text) — After 17, Ś1 8 K6 ins

90* स्मरन्तोऽपि मुहुस्त्वेतत्स्पृशन्तोऽपि स्वकर्मणि ।
सक्ता अपि न सज्जन्ति पङ्के रविकरा इव ।

[(L 1) Ś1 मुहुस्त्वेव ]

18 = (var) B 12 239 19

19 D2 missing Ś2 *repeats* 19 after 6 28 9 Ś3. 5 read 19 after 6 28 9 Ś4 reads 19 in marg ❀ Cā केचिदिम श्लोक षष्ठेऽध्याये पठन्ति । शकरेण त्वस्मिन्नध्यायेऽत्रैव विवृत । सगच्छते चात्रैव । ❀ — [a]) Da1 निर्जित, Cb g k. l n r ś u तैर्जित (as in text) Ś1 D8 6 8 G1 8 M2 4 स्वर्गो, Cā b g k l n r ś u सर्गो (as in text) — [b]) K1 सामे, T2 साम्यै, Cā b g k l n r ś u v साम्ये (as in text)

20 D2 missing With 20[ab], cf 3 198 41[ab] B 12 178 5[cd] — [a]) K1 om from प्रिय up to स्य in 21[a] — [b]) K6 नो द्वेष्टि, Cā. l. n r ś u नोद्विजेत् (as in text) D6 विप्रिय, Cā l n r ś. v चाप्रियम् (as in text) Ś6 नाप्रिय प्राप्य चोद्विजेत् — [d]) Ś1 स्थिति, Ñ1 स्थिता, Ck. l n r ś u as in text

21 D2 missing — [a]) Da1 ग्राह्य-, M2 बाहु-, Cā g k l. m n r ś. u बाह्य- (as in text) — G8 om (hapl) 21[bc] — [b]) Ś1 2 4 5 K1. 6 D1 8 G2 M1 3. 4 Cr य, Cā l m. n ś u यत् (as in text) — [c]) M2 ब्रह्मलोक°, Cā k. l m n r ś u ब्रह्मयोग° (as in text) — [d]) Cf B 12 246 10[d], 251 16[d] B 14 50 18[d] Ś2-6 K6 Cā अव्ययम्, K8 B Dn1 (by corr) D4 5 8 Cn अक्षय्यम्, Cl m r ś u अक्षयम् (as in text)

22 D2 missing — [a]) M1 3. 5 च, Cg l m r ś u हि (as in, text) Ś2 K6 ससर्गजा, Ck. l n r ś u. v सस्पर्शजा (as in text) D1 (m as in text) भावा, Cg k l r ś u भोगा (as in text)

23 D2 missing — [b]) Ś1. 8-6 Cb °विमोचनात्, Cl m r ś u °विमोक्षणात् (as in text) — [c]) Cf 2 58 13[a] Cb कामोत्थवेगानुरोध (sic) — [d]) Ś K6 D3 Cā k स योगी, G2 8 M1 3-5 सयुक्त, Cb l n r ś u स युक्त (as in text) D8 परमो, G8 सुसुखी, Cā b l r ś u स सुखी (as in text) Ś1-5 K6 D8 मत, Cb l. r ś u नर (as in text)

योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४
लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २५
कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ २६
स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २७
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २८
भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २९

C 6 1064
B 6 29 29
K 6 29 29

इति श्रीमहाभारते भीष्मपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

---

24 $D_2$ missing — $^a$) Ś $K_0$ Cā g अत, $K_0$ युक्तः, $K_8$ $D_8$ योन, Cb g l m n r ś u v योऽन्त (as in text) — $^c$) Ś $K_0$ Cb k स पार्थ परम योग, Cl n r ś u as in text — $K_2$ om (hapl) $24^d$–$25^a$

25 $D_2$ missing $K_2$ om $25^a$ (cf v l 24) — $^b$) $K_0$ °किल्बिषा, Cā k l m r ś u °कल्मषा (as in text) — $^c$) $D_8$ छिन्नद्विधा; Ck l m n r ś u v छिन्नद्वैधा (as in text) $D_{8}$ $_6$ जितात्मान, Cl m n r ś u यतात्मान (as in text) $Ś_{1}$ $_6$ Cā छिन्न($Ś_6$ भिन्न)द्वैवा यता($Ś_6$ Cā महा)त्मान — $^d$) = Gītā 12 $4^d$ B 12 229 $15^b$, 240 $21^d$, 241 $14^d$, 270 $7^d$ cf 1 110 $10^d$ 3 160 $26^d$, 244 $9^b$, 277 $6^d$ 5 147 $19^b$ B 12 50 $22^b$, 153 $115^b$ B 13 29 $7^d$, 107 $91^d$ B 14 92 $5^d$

26 $D_2$ missing — $^a$) $Ś_{3-5}$ $K_6$ $D_{3\ 4\ 6}$ Ck °विमुक्ताना, Cl r ś u °वियुक्ताना (as in text) — $^c$) $Ś_3$ Cg सर्वतो; Cā k l m n r ś u अभितो (as in text) — $^d$) $K_2$ विदितात्मवान्, $T_2$ $G_1$ $M_4$ Cr विजितात्मनां, Cā k l ś u विदितात्मनाम् (as in text)

27 $^a$) $K_3$ $G_8$ बाह्यान्स्, Ck l m n r ś u बाह्यांश्च (as in text)

28 $^a$) $Dn_1$ $D_{1\ 2\ 8}$ जितेन्द्रिय°, Ck l n r ś u यतेन्द्रिय° (as in text) — $^c$) $Ś_2$ $K_6$ °द्वेषो; Ck l n r ś u °क्रोधो (as in text)

29 $^b$) = 5 67 $1^b$ B 13 149 $6^b$ cf 6 62 $13^d$ $Ś_6$ Cā सर्वभूतमहेश्वर, $Ñ_1$ सर्वलोकमहेश्वर, Cl r ś u as in text — $^c$) = B 12 227 $109^c$ — $^d$) Cb मा; Ck l n r ś u मां (as in text) $K_1$ इच्छति, Cā l n r ś u ऋच्छति (as in text)

Colophon om in $Ś_{3-6}$ $K_3$ reads it in marg — *Sub-parvan* $Ś_1$ $K_{0\ 5}$ $Ñ_1$ B $Da_1$ Dn $D_{3-7}$ T $G_{2-4}$ $M_{2\ 4}$ (a few of these MSS with the prefix श्री or श्रीमद्) भगवद्गीतासु उपनिषत्सु ($D_{3\ 4}$ om उप°); $K_{2\ 6}$ श्रीभगवद्गीता ($K_6$ °तायां), $K_3$ m $G_1$ गीतायां, $D_{2\ 8}$ श्रीभग $K_0$ $Ñ_1$ $B_3$ $Da_1$ Dn $D_5$ T $G_{3\ 4}$ cont ब्रह्म($T_1$ $G_{2\ 4}$ परब्रह्म)विद्याया योगशास्त्रे ($G_2$ °शास्त्रनिर्णये) श्रीकृष्णार्जुनसंवादे, $K_5$ ब्रह्मविद्यायां; $K_0$ $D_4$ श्रीकृष्णार्जुनसवादे, $B_2$ $D_6$ ब्रह्मविद्यायां योगशास्त्रे $D_1$ योग° — *Adhy name* $Ś_1$ $D_7$ योगगर्भ°, $K_{0-2\ 5\ 6}$ $Ñ_1$ Dn $D_6$ $T_2$ $G_1$ Cn संन्यासयोग°; $B_2$ योगसमुच्चय, $Da_1$ ज्ञानयोग, $D_1$ $T_1$ $G_{3\ 4}$ Cr ś कर्मसन्यासयोग, $D_{2\ 8}$ प्रकृतियोग, $D_4$ साख्ययोग, $D_5$ भक्तियोग, Cśp प्रकृतिगर्भ° — *Adhy no* (figures, words or both) $D_5$ $M_2$ 28, T G 27, $M_4$ 29 — *Bhagavadgītā adhy no* (figures, words or both) $K_{0-2\ 3}$ m $_{5\ 6}$ $Ñ_1$ B $Da_1$ Dn $D_{1-4\ 6-8}$ $G_{2\ 3}$ $M_{1\ 3\ 5}$ 5 — *Śloka no* $K_{1\ 3\ 5}$ $Da_1$ Dn $D_{1\ 2\ 5\ 6}$ $G_2$ 29

# २८

श्रीभगवानुवाच ।

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ १
यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।
न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २
आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३
यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४
उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५
बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६
जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानावमानयोः ॥ ७
ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८
सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९
योगी युञ्जीत सततमात्मानं रहसि स्थितः ।

## 28

☞ K4 Da2 om this adhy (cf note at the beginning of adhy 23)

1 $^{b}$) Ś1 (*sup lin* as in text) स, D2 च, Cā k l n r ś u यः (as in text) — $^{c}$) D8 Cb स योगी, Cā g k l m r ś u च योगी (as in text) — $^{d}$) Cg निष्क्रियः, Cā k l m n r ś u चाक्रियः (as in text)

2 St 2–26 are missing in Cb — $^{a}$) Ś1 सन्न्यास इति, Cā g k l m r ś u संन्यासमिति (as in text) — $^{c}$) M8 ह्यसंनद्ध°, Cā g k l m r ś u v as in text — $^{d}$) Ś1 योगी भवति दुःखहा (= 17$^{d}$), Cā l m r ś u as in text

3 After 3$^{a}$, G8 (erroneously) *repeats* 6 27 21$^{bc}$ — K1 om (hapl) 3$^{c}$–4$^{d}$, D8 om (hapl) 3$^{cd}$ — $^{c}$) Ś6 आरूढस्य तु, Cā k l m n r s u योगारूढस्य (as in text)

4 K1 om 4 (cf v l 3) — $^{b}$) B D6 °सज्जते, D8 °रज्यते, S °पज्यते, Cl m n r ś u °षज्जते (as in text) Ś1 सर्वकर्मसु षज्जते — $^{d}$) Ś6 K2 Ñ1 तदुच्यते, G8 ततोच्यते, Cl n r ś u तदोच्यते (as in text)

5 $^{b}$) = B 12 130 17$^{d}$ D2 8 8 G1 आत्मानम्, Cā l r ś u नात्मानम् (as in text) K1 अवसाधयेत्; Ck l r ś u अवसादयेत् (as in text) — 5$^{cd}$ = 5 34 62$^{cd}$ B 11 2 35$^{ab}$ B 13 6 27$^{ab}$ — $^{c}$) Cf 1 67 7$^{a}$ D6 बुद्धिर्, Ck l r ś u v बन्धुर् (as in text)

6 $^{b}$) K5 परमात्मैवात्मना जितः (hypermetric), K6 Da1 येनैवात्मात्मना जितः, Ck l m n r s u v as in text — D6 om 6$^{cd}$ — $^{c}$) Ś3 4 Ck अजितात्मनस्तु (hypermetric), Cl m r ś u v अनात्मनस्तु (as in text) — $^{d}$) D2 शत्रुजित्, Cl m r ś u v शत्रुवत् (as in text)

7 $^{a}$) Da1 M6 जितात्मानः, Ck l m n r ś u जितात्मनः (as in text) — $^{b}$) Ś1–3 K6 Cg k mp परात्मसु समा म(Ś2 ग)तिः, Ś1–6 Cā परमात्म(Ś5 °त्मा)समा मतिः, Cl m r ś u as in text — $^{c}$) = Gītā 12 18$^{c}$ — $^{d}$) = Gītā 12 18$^{b}$ K1–3 5 Ñ1 B D (Da2 om) Cl ś u मानाप°, Ck r मानाव° (as in text)

8 $^{d}$) = Gītā 14 24$^{b}$ 3 247 42$^{b}$ B 12 236 38$^{b}$, 240 33$^{b}$, cf 262 12$^{d}$, 326 49$^{d}$

9 $^{ab}$) Ś6 सुहृन्मित्रावुदासीनमध्यस्थौ द्वेष्य° (sic) — $^{c}$) Ś1 [अ]थ, Ck l m r ś u [अ]पि) as in text) — $^{d}$) Ś1 समदृष्टिर्, Cā g k l m n r ś u v सम बुद्धिर् (as in text) Cśp up विमुच्यते, Cā g l m n r u विशिष्यते (as in text) — After 9, S2 *repeats*, while S8 5 read, Gītā 5 19

10 $^{a}$) D8 (marg *sec m*) ध्यायी, Ck l m n r ś u योगी (as in text) — $^{c}$) Ś1 निराशीर्, Da1

एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १०
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ११
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३
प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४
युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५
नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १६
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७
यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८
यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १९
यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ २०
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।

C 6 1065
B 6 30 21
K 6 30 21

एकाकीर्, Cg k l n r ś u v एकाकी (as in text) D6 Cv जित°, Cā k l n r ś u यत° (as in text) —[d]) Cf B 12 329 14[b] Ś1 चैकाकी निष्परिग्रह, D1 निराशीर्ह्यपरि°, Cā k l n r ś u निराशीरपरि° (as in text)

11 [b]) Dn1 (before corr) D6 स्थिरमानस° (by metathesis), Cā k l n ś u स्थिरमासन° (as in text) —[c]) K2 °च्छ्रिते, Ck l n r ś u °च्छ्रित (as in text) —[d]) Cf. B 15 27 25[b] G M Ck r चेला°, Cl n ś u चैला° (as in text)

12 [a]) Cf B 14 30 28[c] —[b]) Ñ1 यतचित्तें द्रिय क्रिय°, Da1 Cg °द्रियक्रिया°, D2 6 जितचित्तेंद्रिय क्रिय°, Cā k l n r ś u as in text —[c]) K2 Da1 T2 M2 5 युज्याद् (sic)

13 [a]) Ś2 6 K3 5 D2 समकाय°, B2 सम काय°, Cā k l n r ś u सम काय° (as in text) —[b]) Ś1 2 4–6 K6 Ck °मचल° स्थित° (Ś4 sup lin °र), K0 M1 5 (sup lin as in text) °मचलं स्थित°, K8 D1 3 T2 M4 Cr °मचल स्थिर, Ñ1 °मचलस्थिर°, D2 5 °मचलं मन°, G1 °मचल स्थित, G3 °मचलस्थित° (by corr र), Cl n ś u °मचलं स्थिर° (as in text) —[c]) Ś K6 D8 Ck सपश्यन्, Cl n r ś u संप्रेक्ष्य (as in text) Ś1 च, Ck l n r ś u स्व (as in text) —[d]) K3 °लोकयेत्, Ck l n r ś u °लोकयन् (as in text)

14 [b]) Ñ1 D6 G1–3 M3 5 ब्रह्मचारी व्रते, Cā k l n r ś u °चारिव्रते (as in text) —[d]) = Gītā 2 61[b] Cup [S]युक्त (for युक्त)

15 [a]) = 28[a] Ñ1 Da1 D7 एव युञ्जन् (by transp), T1 G4 युजन्नेव, Cā k l n r ś u युञ्जन्नेव (as in text) —[b]) Ś2–5 K6 Ck मन्नक्तोन( S2 K6 ना)न्यमानस°, Cl n r ś u as in text

16 [a]) Ś K6 Ck योगोस्ति नैवात्यशतो, Cl r ś u as in text —[d]) Ś K6 Ck नाति (Ś1 न च) जाग रतोर्जुन, Cl r ś u as in text Cg cites जागरत° ❀ Ck विकरणानियमोऽत्र च्छान्दस° । संस्कृतमन्यास्तु पाठा न्तराणि योजयन्ति । ❀

17 [c]) K8 युक्त°, Ck l r ś u युक्त° (as in text) G8 °बोरस्य, Ck r ś u °बोधस्य (as in text)

18 Ś1 om (hapl) from मात्म up to चित्त in 19[c] —[b]) Cf. B 14 19 30[b] T1 G4 °तिष्ठति, Ck l m n r ś u °तिष्ठते (as in text)

19 Ś1 om up to चित्त in 19[c] (cf v l 18) —[a]) = B 12 46 6[a], cf 246 11[c] T2 यदा, Cg k l n r ś u यथा (as in text) —[c]) D8 6 जित, Ck l n r ś u यत (as in text) —[d]) T2 युजते, Ck l m n r ś u युञ्जतो (as in text) Ś K6 Cā k r मात्मनि, Cl m n ś u मात्मन° (as in text).

20 [b]) Ś2 3 4 (sup lin) 5 (marg) 6 K6 Cā k °सेवनात्, Cl n r ś u °सेवया (as in text) —[c]) T1 G4 तत्र, Cā k l m n r ś u यत्र (as in text). —[d]) Ś1 तिष्ठति, B2 पश्यति, Cā k l n r ś u तुष्यति (as in text)

21 [a]) Ś1 2 4–6 K1 2 6 D3 (before corr) Cā

वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ २२
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २३
संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४
शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥ २५
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६
प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७
युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३०
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।

---

k v यत्र, B1 3 4 यत्तु, Cl n r ś u यत्तद् (as in text) — d) G1 स्थिरश्च, Cā l n r ś u स्थितश्च (as in text) Ś2 4-6 K6 Cā k च्यवति, Cl n r ś u चलति (as in text)

22 With 22ab, cf B 13 16 41ab — a) M8 (inf lin) दृष्ट्वा, Cl r ś u लब्ध्वा (as in text) Ś1 Ck चाधिकं लाभ, Ś6 नापर लाभं, Cg चापरो लाभो, Cl r s u चापर लाभ (as in text) — b) Ś1 Ck नापर, Cl ś u नाधिक (as in text) — d) G3 विमुच्यते, Cā g k l r ś u विचाल्यते (as in text)

23 With 23ab, cf 3 203 44cd — a) K0 Da1 D2 6 8 विंद्याद्, Ck l n r ś u v विद्याद् (as in text) K2 °सयोग ; K3 5 Ñ1 D4 8 M4 °संयोग, Cā g k l m n r ś u v °सयोग (as in text) — d) Cup योगो निर्विण्ण°

24 b) T2 कामान्, G3 धर्मान्, Ck l m r ś u सर्वान् (as in text) — c) Cf B 12 206 25c

25 b) K1 T2 दिति°, D6 रति°, Cā l n r ś u धृति° (as in text)

26 K2 om (hapl) 26 — a) Ś1 निश्च*ति, Ś6 D2 6 Cu निसरति, K1. 6 B2 4 D4 m G2 8 Cl निश्चलति, Cg निवर्तते, Ck n r s u निश्चरति (as in text) — b) Ś6 मनश्च चलम्, Cā k l r ś u मनश्चञ्चलम् (as in text) — d) Ś3 Cg शम, Ck l m n r ś u वश (as in text)

27 b) Ś3 योगिन सुखमुत्तर, Cb यस्माद्योगिनमुत्तम, Ck l m n r ś u as in text — c) Ś1 अभ्येति, Ck l m n r ś u उपैति (as in text) K3 Ñ1 D2 (before corr) 8 शातिरजसं (Ñ1 °य), D2 शात मनस, Ck l m n r ś u शान्तरजस (as in text)

28 a) = 15a K0 8 Dn2 D8 युजन्नेव, K5 S Cm r एव युजन् (by transp), Ck l n ś u v युञ्जन्नेव (as in text) — b) Ś K6 Cb k योगी नियतमानस, B1 (m as in text) मद्गतो नान्यमानस, (cf v l in Ś K5 K6 Ck in 15b), Cl n r ś u योगी विगतकल्मष (as in text) — c) Ś2-6 K6 Ck °सयोगम्, Cl n r ś u v °सस्पर्शम् (as in text) — d) Ś1 अत्यतसुखमश्नुते, Ś2-6 K6 Cb k अत्यतमधिगच्छति, Cl n r ś u as in text

29 K1 2 om 29 — 29ab = (var) B 12 326 29ab Manu 12 91ab — a) = B 14 35 16c, 46 49c, 47 6c cf Īśāvāsyopaniṣad 6c — After 29ab, G2 repeats 27c–29b — c) Ś2 पश्यते; D11 ईक्षेत, Cb पश्यतो, Cā l n r ś u ईक्षते (as in text) — d) Cf B 12 76 2b, 240 32b B 14 51 39d D4 (before corr) G2 °दर्शिन, Cā k l n r s u °दर्शन (as in text).

30 T2 om (hapl) 30b–32a — b) D6 मयि पश्यति चाप्यह — cd) D6 न प्रणस्यामि स च मे मा प्रणश्यति तेन्ययम् (corrupt)

31 T2 om 31 (cf v l 30) — b) G3 एकस्थम्, Cā l m n r u v एकत्वम् (as in text) — c) = Gītā 13 23c B 13 18 63c K2 Cā सर्वेषा,

सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३१
आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२

अर्जुन उवाच ।

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।
एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ॥ ३३
चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४

श्रीभगवानुवाच ।

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५
असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६

अर्जुन उवाच ।

अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७
कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ३८
एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ३९

श्रीभगवानुवाच ।

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥ ४०
प्राप्य पुण्यकृताँल्लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१
अथ वा योगिनामेव कुले भवति धीमताम् । C 6 1106 B 6 30 42 K 6 30 42

---

Ck l m n r ś u सर्वथा (as in text) Cup [आ]वर्त॰ (for वर्त॰) — d) D8 न नि, Cā k l m n r ś u मयि (as in text) Cb मय्येवासौ च वर्तते

32 T2 om 32a (cf v l 30) — b) G8 सो, Cl n r ś u यो (as in text) — c) = B 12 25 26a, 28 16a, cf 293 7a

33 K5 transp 33 and 34 — a) G8 भोगस्, Ck l n r ś u योगस् (as in text) — b) Ś1 G2 सौम्येन, Cl n r ś u साम्येन (as in text) — d) G8 मन', Cā k l m n r ś u स्थितिं (as in text) Ś1 3-6 Cā k परां, Cl m n r ś u स्थिराम् (as in text)

34 b) K3 Ñ1 D8 G1 3 M5 प्रमाथी, Cā g k l m n r ś u प्रमाथि (as in text)

35 D8 om 35c-36d — a) = 3 49 26a — b) = 3 246 25b — d) K1 2 Ñ1 D8 वैराग्येन (for वैराग्येण)

36 D8 om 36 (cf v l 35) — a) Ś1 3 K1 3 Da1 Cg असयतात्मनो, D4 (also as in text) G8 असशयात्मना, Cā b k l m n r ś u असयतात्मना (as in text)

37 a) Ś2-4 6 K6 Cā k अयत्त, Cb l m n ś u अयति॰ (as in text) T2 अय निःसशयो योगो — After 37ab, Ś K6 Cā b k ins

91* लिप्समान सता मार्ग प्रमूढो ब्रह्मण' पथि ।
अनेकचित्तो विभ्रान्तो मोहस्यैव वशं गत' ।

[(L 1) With post half, cf 38d — (L 2) Ś4 K6 Ck ॰चित्तोविभ्रातो, Ś6 ॰चित्तविभ्रान्तो ]

38 a) Ś3-6 Cā k ॰विभ्रशात्, K2 ॰विभ्रष्ट, Cb l n r ś u ॰विभ्रष्टश् (as in text) — b) Ś2 K6 D8 Cl छिन्नाभ्र, Cā k n r ś u छिन्नाभ्रम् (as in text) — d) Ś K6 Ck विनाश वाधिगच्छति, Cb l n r ś u as in text

39 a) Cf 3 29 3c Ś1 D1 Cb k r एत मे, Cl एन मे, Cn ś u एतन्मे (as in text) Cup [ऽ]सशय — With 39cd, cf 2 14 1cd B 14 35 12ab

40 d) Ś1-3 K6 जातु, Cb l ś u तात (as in text)

41 a) Cf B 11 20 27c B 14 90 101a Ś1-3 B D2 3 7 G1 2 Ck r ś u पुण्यकृतां लो॰, K5 पुण्यतमाँल्लो॰, Cl पुण्यकृताँल्लो॰ (as in text) — b) K6 D2 शाश्वती (sic) — d) K2 योगनष्टोभि, D1 5 भ्रष्टो हि, G2 ॰भ्रष्टोपि, Ck l r ś u ॰भ्रष्टोऽभि (as in text)

42 b) K6 Ñ1 T G2-4 महति, Cl r ś u भवति (as in text) Ś1 निर्मले, Cl r ś u धीमताम् (as

एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२
तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ ४३
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४
प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४५
तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४६
योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ॥ ४७

इति श्रीमहाभारते भीष्मपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

---

in text) Ś3-6 K6 D3 6 Cb g k जायते धी(Ś1 (by corr) Cg श्री)मतां कुले — c) Cf B 13 68 21c

43 a) M2 सबुद्धि°, Ck l n r ś u त बुद्धि° (as in text) — b) Ś1 6 Ñ1 D6 पूर्वदेहिक, Ś1 (marg) 5 K0 1 5 Da1 D1 5 पौर्वदैहिक, K3 Dn1 (before corr) D1 (m as in text) 2 8 1 (m as in text) पूर्वदेहिकं, Cb k l n r ś u पौर्वदेहिक (as in text) — c) Ś K6 Cā b k ततो भूयोपि यतते; Cl n r ś u as in text — d) Ś2 K6 सिद्धये, Cā g k l n r ś u ससिद्धौ (as in text)

44 b) K3 Ñ1 G2 3 ह्रीयते, K6 क्रियते, Cā k l n r ś u ह्रियते (as in text) Ś6 Cā [ऽ]प्यवशो, Cg k l n r ś u ह्यवशो (as in text) Ś K1 2 6 D8 M8 Cā सन्, Cl n r ś u स (as in text) — c) Ś1 लोकस्य, Cā g k l m n r ś u योगस्य (as in text) — d) D8 °ब्रह्मापि वर्तते, T2 शब्दे ब्रह्मादि वर्तते, G8 शब्दब्रह्मा निव°, M4 °ब्रह्माभिव°, Cā g k l m n r ś u v as in text

45 b) K5 M4 सशुद्धकल्मष°, D8 विगतकिल्बिष°, D8 G8 ससिद्धकिल्बिश°, Cā k l m n r ś u सशुद्धकिल्बिष (as in text) — c) Ś1 K1 °सशुद्धस्, Ś6 °ससिद्धिस्; Cā k l m n r ś u °ससिद्धस् (as in text) — d) = Gitā 13 28d, 16 22d Cf Gitā 9 32d B 12 348 74d Maitryupaniṣad 6 30 (stanza 3d) Ś5 Da1 यान्ति, Cā l m n r ś u as in text

46 b) Ś2 K6 ज्ञानिभ्यश्च, D8 ज्ञानिनोपि, Cn ज्ञानिनश्च, Cā g k l m r ś ज्ञानिभ्योऽपि (as in text) Ś1 4 6 K0 D1-8 ज्ञानिभ्योप्य(D1 8 °भ्य)धिको मत° — c) K1 कर्मभिद्य, K2 कर्मिभिग्न, G3 कर्मभ्यग्न, C5 g k l m r ś u कर्मिभ्यश्च (as in text) D2 [भ्]प्य धिको; Cā k l n r ś u चाधिको (as in text).

47 a) K6 Dn1 D2 योगिनाम् (sic) K1 मम; Cā l r ś u अपि (as in text) — b) K2 °रमन; Ca k l n r ś u °रमना (as in text) — c) T2 G3 लभते, Cā g k l n r ś u भजते (as in text) — After 47, Ś1 ins

94* भगवन्नामसप्राप्तिमात्रात्सर्वमवाप्यते ।
फलिता शालय सम्यग्वृष्टिमात्रेष्ववलोकिते ।

[This is just the मगदश्लोक to adhy 6 in Cg]

Colophon om in Ś1-6 — *Sub-parvan* Ś1 K0 2 3 5 Ñ1 B Da1 Dn D2 4-8 T G2-4 M2 4 (a few of these MSS with the prefix श्री or श्रीमद्) भगवद्गीतासु उपनिषत्सु (K2 3 D2 3 om उप°), K8 G1 श्रीभगवद् (G1 om it) गीतायां; D1 partly damaged K0 Ñ1 B3 Dn2 D6 G2 cont ब्रह्म(G2 परमब्रह्म)विद्यायां योगशास्त्रे (G2 °शास्त्रनिर्णये) श्रीकृष्णार्जुनसंवादे, K1 D1 ब्रह्मविद्यायां योगशास्त्रे, K5 Dn1 ब्रह्मविद्यायां, K6 T2 श्रीकृष्णार्जुनसंवादे — *Adhy name* Ś1 D6 आत्मसंयोग°, K0 5 D2 8 Cśp आत्मसंयमयोग°, K8 D. T G2 4 Cś अभ्यासयोग°, K6 ध्यानयोगब्रह्मप्राप्तिमार्गदर्शकरूप°(?), Ñ1 योगगर्भ°, B2 8 D4 सन्यासयोग°, B1 योगाभ्यास°, Da1 आत्मयोग°, Dn Cn अभ्यासयोग°; D1 संयमयोग°, D7 ध्यानयोग°; G1 स्वरूपयोग° — *Adhy no* (figures, words or both) D5 M2 29, T G 28, M4 30 — *Bhagavadgītā adhy no* (figures, words or both) Ś1 K0-3, 5 6 Ñ1 B Da1 Dn D1-4 6-8 G2 3 M1 3 5 Cv 6 —*Śloka no* K3 5 Da1 Dn D1 5 G2 47, D2 48

# २९

श्रीभगवानुवाच ।
मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १
ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २
मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३
भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५
एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६
मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७
रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः ।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८
पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९
बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १०
बलं बलवतां चाहं कामरागविवर्जितम् ।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११
ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ १२
त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् । C 6 1124 B 6 31 13 K 6 31 13

## 29

☞ K4 Da2 om this adhy (cf note at the beginning of adhy 23)

1 [b]) Ś2-4 6 K6 Cā k मदाश्रित, Cl m n r ś u मदाश्रय॰ (as in text) — [d]) Ś6 K6 Cā ज्ञास्यति, T2 ज्ञानस्य, Ck l n r ś u ज्ञास्यसि (as in text)

2 [a]) G2 देह, Cg l n r ś u तेऽह (as in text) — [b]) K1 शेषत, Ck l n r ś u अशेषत॰ (as in text) — T2 om (hapl) 2[c]-3[d] — [cd]) Ś1-4 5 (marg) 6 K6 Ck यज्ज्ञात्वा न पुन॰ किंचिज् (Ś2 पुनश्चान्यज्), Cb l r ś u as in text G8 इह, Cg k l r ś u अव॰ (as in text) Cb चिंतनीय यदु त्कृष्ट सत्त्व तदुपदिश्यते

4 [d]) Cf 6 6 4[a] G8 अनिलो (sic)

5 [c]) B1 बीज॰, Cā k l m n r ś u जीव॰ (as in text)

6 Da1 om 6 — 6[a] = B 12 224 17[c] — [ab]) Ś1 transp भूतानि and सर्वाणि G3 M3 5 [अ]व, Cā g k l n r ś u [उ]प॰ (as in text) — [c]) Ś6 Cā सर्वस्य, Ck l n r ś u v कृत्स्नस्य (as in text) — [d]) Cf Gītā 9 18[c] Ś4 K6 transp प्रभव॰ and प्रलय॰

7 [c]) T2 G2 8 M8 प्रोक्त, Cā k l n r ś u प्रोत (as in text) — [d]) = B 12 47 21[d]

8 [b]) Ś1 8-6 Cā g k प्रकाश॰, Cb l ś u प्रभास्मि (as in text) — [c]) T2 ॰भूतेषु, Cā k l ś u ॰वेदेषु (as in text)

9 [a]) Ś K6 Cā k पुण्य॰ पृथिव्या गधोस्मि, Cl m ś u as in text

10 [d]) = Gītā 10 36[b]

11 [a]) K1 2 Ñ1 बलवता, Ck l ś u ॰वता (as in text) Ś3 अस्मि, Cb k l r ś चाह (as in text)

12 [b]) Ś तामसा राजसाश्च (by transp), Ck l n r ś u राजसास्तामसाश्च (as in text) — [c]) Ś1 2 4 5 K6 एवेह, Cb l n r ś v एवेति (as in text)

13 [b]) Cb कृत्स्नम्, Cg k l m r ś u सर्वम् (as

मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३
दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४
न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५
चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८
बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९
कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २०
यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१
स तया श्रद्धया युक्तस्तस्या राधनमीहते ।
लभते च ततः कामान्मयैव विहितान्हि तान् ॥ २२
अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३
अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४
नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।

---

in text) — c) D6 मोहनं (sic)

14 a) K3 D3 देवी, T2 दिवि, Cā g k l m n r ś u v दैवी (as in text) — c) K1 प्रपद्यति, Cā k l m n r ś u °द्यन्ते (as in text) — d) Ś1 3 5 6 (marg) Cg k मायामति, Cā l n r ś u माया मेतां (as in text).

15 a) D3 मे; Cv मा, Ca g k l m n r ś u मा (as in text) — c) K1 D4 (before corr) T2 मायया प्रहृत°, D6 °या मद्गत°, Cā k l m n r ś u °यापहृत° (as in text) — d) Ś6 B4 (m as in text) आस्थिता°, Cā l m n r ś u आश्रिता (as in text) — After 15, D3 reads (for the first time) Gītā 16 20

16 In Cb the text and comm from st 16 to the end of the Gītā is missing — b) Ś3–5 सदा, Cl ś u [ऽ]र्जुन (as in text)

17 b) Ś1 एकभक्तो, Cā l m n r ś u v °भक्तिर् (as in text) K2 विशिष्यति; Cā k l n r ś u v °ष्यते (as in text) — d) D6 स मे, Cā k l n r ś u मम (as in text)

18 b) Ś K6 B4 D1 3 G1 M1 4 5 Cā मत°, Cl n r ś u मतम् (as in text) — d) Ś1 2 4–6 K6 ममैव, Cā g k l n r ś u v मामेव (as in text) Cr cites अनुत्तम

19 Ś4 om 19 — d) Da1 मम माहात्म्यदुर्लभ° (sic)

20 a) Ś6 Cā (by transp) तैस्तै कामैर् — d) K2 D6 नियत, K3 G2 3 M1 3 4 नियता, Cā k l n r ś u नियता (as in text) Ś. D5 T1 (marg) स्वयं, K1 2 त्वया, Cā k l n r ś u स्वया (as in text)

21 a) T1 M4 भक्त्या, Ck l n r ś u भक्त (as in text) — b) Ś1 इच्छति (sic) — d) K2 °च्यद°; Cā l n r ś u विद° (as in text) Ś1 तस्या तस्या ददाम्यह

22 a) Cf I 123 14a — d) M3 मयेव; Cā k l n r ś u v मयैव (as in text) Ś3 K6 Ck n śp up हितान्, Cl r ś u हि तान् (as in text)

23 After 23abc, Ś2 K6 Cā ins

93* सिद्धान्यान्ति सिद्धव्रता ।
भूतान्भूतयजो यान्ति,

while Ś6 Cā ins (= Gītā 9 25bc)

94* पितॄन्यान्ति पितृव्रता ।
भूतानि यान्ति भूतेज्या

24 Ś3–5 om 24 — c) = Gītā 9 11c — d) D3 ममात्ययम्, Cl n r ś u ममाव्ययम् (as in text). D6 अनन्वय, Cā l n r ś u अनुत्तमम् (as in text)

25 a) D2 सर्वश्च, Cg सर्वेषा, Cā k l n r ś u सर्वस्य (as in text) — cd) Ś1 transp मूढो and लोको M2 लोके, Cā k l r ś u लोको (as in text).

मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५
वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ २६
इच्छाद्वेषसमुत्थेन द्वंद्वमोहेन भारत ।
सर्वभूतानि संमोहं सर्गे यान्ति परंतप ॥ २७
येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वंद्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८
जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९
साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३०

इति श्रीमहाभारते भीष्मपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

# ३०

अर्जुन उवाच ।
किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १
अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ।

C 6 1143 B 6 32 2 K 6 32.2

D2 अत्यय, Cā l. n r ś u अव्ययम् (as in text)

26 c) Ś K6 भविष्यन्ति, Cl r ś u भविष्याणि (as in text) — d) D2 मा, Ck l m r ś u मां (as in text) Ś6 न तु मा वेद कश्चन

27 a) G3 °समूढेन, Cā k. l m n r ś u °समुत्थेन (as in text) — c) Cg cites आमोह — d) G8 स्वर्गे, Cā. k l. m. n r ś u सर्गे (as in text) Ś6 याति सर्गे (by transp)

28 a) Ś1-5 K1 Ck त्वत गत, K2 5 Ñ1 D3 त्वतर्गत, D2 3 Cn अतगत, T2 द्वद्वगत, Cā l. r ś. u त्वन्तगत (as in text) — b) Da1 नराणा, Cā k l. n r ś u जनाना (as in text) D2 °कर्मिणा, Cā k l. n r ś u °कर्मणाम् (as in text)

29 b) Ś1 भजति, Ś1 (sup lin as in text) D2 यजति, Cl. n r ś u यतन्ति (as in text) D1 6 ते, Cg k l n r ś u ये (as in text)

30 a) K1. 2 °भूतादिदैव, D1 (sup lin as in text) °भूताधिभूत, Cl n. r ś u v °भूताधिदैव (as in text) — b) Ś6 G2 3 च ते, Ś1 (sup lin) यया, Ś5 तया, Da1 च तद्, Cl n r ś u च ये (as in text) — D8 om 30cd — After 30, Ś1 ins

95* स्फुटं भगवतो भक्तिर्विहिता कल्पमञ्जरी ।
साधनेच्छासमुचिता येनाशा परिपूरयेत् ।

[This is (with var) the सग्रहश्लोक to adhy 7 in Cg]

Colophon om in Ś1-6 — *Sub-parvan* Ś1 K0 3 5 Ñ1 B Da1 Dn D1 2 4-6 8 T G2-4 M2 4 (a few of these MSS with the prefix श्री *or* श्रीमद्) भगवद्गीतासु (Ñ1 °या also) उपनिषत्सु, K2 श्रीभगवद्गीता, K6 D8 7 श्रीभगवद्गीतासु (K6 °या), G1 गीताया K0 3 5 Ñ1 B3 Dn D2 4-6 8 cont ब्रह्मविद्याया योगशास्त्रे श्रीकृष्णार्जुनसवादे, K6 T2 श्रीकृष्णार्जुनसवादे, G2 परब्रह्मविद्यायां श्रीयोगशास्त्रनिर्णये श्रीकृष्णार्जुनसवादे, M2 ब्रह्मविद्याया — *Adhy name* Ś1 D6 जगत्प्रसूतियोग°, K0 प्रकृतिभेद°; K1 2 D1. 4 8 ज्ञानयोग°, K3 5 Ñ1 D7 T1 G4 विज्ञानयोग°, K6 विज्ञानयोगो ब्रह्मप्राप्तिमार्गदर्शकयोग°(?), B2 गुण विज्ञानयोग° समग्रदर्शन°, B3 समग्रदर्शन°, B4 परापरयोग°; Da1 D5 परमहसयोग°, Dn ज्ञान(Dn1 om ज्ञान)विज्ञानवर्णनयोग°, D2 ज्ञानयोगकथन, T2 परमहसविज्ञानब्रह्मयोग, G1 परावरप्रकृतियोग°, G2 C6 ज्ञानविज्ञानयोग° — *Adhy no* (figures, words or both) D5 M2 30, T1 M4 31, T2 G 29 (as in text) — *Bhagavadgītā adhy no* (figures, words or both) Ś1 K0-3. 5 6 Ñ1 B Da1 Dn D1-4 6-8 G2 3 M1. 3 5 Cv 7 — *Śloka no* K1 3 5 Da1 Dn D1 2 5 G2 30, K6 31

## 30

☞ K4 Da2 om this adhy (cf note at the beginning of adhy 23)

1 a) Ś6 अध्यात्म, G2 अध्यात्मन्, G8 अध्यात्मा, Ck l r u अध्यात्म (as in text) — c) D7 आधिभूत, Cl. r u अधि° (as in text) T2 मे, Cl r u किं (as in text).

प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २

श्रीभगवानुवाच ।

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३
अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४
अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५
यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६
तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥ ७
अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८

कविं पुराणमनुशासितार-
मणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूप-
मादित्यवर्णं तमसः परस्तात् ॥ ९
प्रयाणकाले मनसाचलेन
भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्य-
क्स तं परं पुरुषमुपैति दिव्यम् ॥ १०

---

2 [a]) Da1 आधि°, Cg l n r u अधि° (as in text) B1 अधियज्ञश्च कस्तत्र —[c]) Ś1 2 6 K6 T2 °कालेपि, Cl r u °काले च (as in text)

3 [a]) Cf B 13 14 5[c], 17 80[a] Ś1 4-6 Ñ1 B Da1 D1 8 Cā n परम ब्रह्म (by transp), Ck l m r ś u ब्रह्म परमं (as in text) —[b]) Da1 D2 G4 M1 [s]ध्यात्म, Cā g k l m n r ś u v ऽध्यात्मम् (as in text) —[d]) K6 कर्मसंज्ञित, Da1 (marg as in text) कर्मसंज्ञक°; Cā k m n r ś u v °संज्ञित (as in text)

4 [a]) Ś1 अधिभूतोक्षरो, G8 °भूतकरो; M5 °भूताक्षरो, Cā g k l m n r ś u v °भूत क्षरो (as in text) —[b]) Ś5 चादि, K1 चाद्य, Cā g k l m n r ś u v चाधि (as in text) —[c]) Ñ1 (marg sec m as in text) °यज्ञोंतम् (sic), T2 °यज्ञोयम्, Cā g k l m n r ś u °यज्ञोऽहम् (as in text) Cv cites अधियज्ञ°

5 [a]) Ś1 3-5 Cg k °कालेपि, Cl n r ś u °काले च (as in text) Ś6 Cā प्रयाणकालेपि च मा (= Gītā 7 30[c]) —[c]) K1 या, G8 M8 5 यत्, M4 य, Cā g k l n r ś u य° (as in text) —[d]) Da1 D6 याति, Cā g k l n r ś u.v याति (as in text)

6 [a]) B Da1 Cnp चापि, D1 चांते, Cā g k r ś u वापि (as in text) —[b]) D1 एतत्, Cā g k l r ś u अन्ते (as in text) —[c]) Ś1 6 Ñ1 Da1 Dn2 D4 6 T1 G1 2 4 °मेवेति, Cā g l r ś u °मेवैति (as in text) —[d]) Ñ1 Da1 M4 मद्भाव°, D6 8 G1 सद्भाव°, Cā g k.l m n r ś u तद्भाव° (as in text)

7 [a]) = 27[c] —[b]) K1 युद्य, D8 6 बुध्य, Cā k l n r ś u युध्य (as in text) —[c]) = Gītā 12 14[c] Ś1 (marg) 5 मदर्पित°, Cā l n r ś u मय्यर्पित° (as in text) —[d]) Ś K1 2 6 Ñ1 B2 Da1 Dn2 D1-8 5 7 G1 Cā k n [अ]संशय, Cl r ś u [अ]संशय (as in text) D6 मामेवैश्यन्नसंशय (sic)

8 [b]) Ś1. 3-5 K0 1 Da1 D1 2 M1-3 5 Cā k °सानन्य, Cl n r ś u °सा नान्य (as in text) —[c]) K5 परमे, Ck l. n r ś u परम (as in text) —[d]) K5 याति Ś5 [अ]न्व°, K0 [अ]नुचिंतन; M4 [अ]नुचिंतना, Cā g l. n. ś u [अ]नुचिन्तयन् (as in text) Ck cites चिन्तयन्

9 [a]) D1 G1 ह्यनु°, Cā k n r ś u अनु° (as in text) —[b]) M1 8 अणोरमणीयांसम्, Cā k l n r ś u °रणीयांसम् (as in text) —[c]) T1 G4 °शक्तिम्, Cā n r ś u °रूपम् (as in text) —[d]) = Śvetāśvataropaniṣad 3 8[b]. Ś1 B1 °रूप, Cā g k l n r ś u °वर्णं (as in text) Ś1 6 K0 Cā k पुरस्तात्, Cl m. n. r ś u परस्तात् (as in text)

10 [b]) K6 D8 युतो; Cā n r ś u युक्तो (as in text) —[d]) G3 संत पार, Cā k l n ś u स त पर (as in text)

यदक्षरं वेदविदो वदन्ति
　　विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
　　तत्ते पदं संग्रहेण प्रवक्ष्ये ॥ ११
सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥१२
ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ १३
अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४
मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५
आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६
सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ १७
अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८
भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९
परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २०

C 6 1161
B 6 32 20
K 6 32 20

---

11 b) M8 विदति, Ck l n r ś u विशन्ति (as in text) Ś1 यद्यातयो (sic) — c) Ckp विदति (for चरन्ति) — With 11cd, cf Kathopaniṣad 1 2 15cd — d) K1 ततो, Cg k l n r ś u v तत्ते (as in text) Ś K6 Cg k सग्रहेणाभिधास्ये, Da1 °हेणेव वक्षे, D1 (m as in text) °हेण ब्रवीमि, M1 8 °हणे प्रवक्ष्ये, Cl n r ś u °हेण प्रवक्ष्ये (as in text) — After 11, D1 ins (= Kathopaniṣad 1 2 15, cf 11cd above)

　96* सर्वे वेदा यत्पदमामनन्ति
　　　तपांसि सर्वाणि च यद्वदन्ति ।
　　यदिच्छन्तो ब्रह्मचर्यं चरन्ति
　　　तत्ते पदं सग्रहेण ब्रवीमि ।

12 c) Ś1 K2 Ck मूर्ध्न्यादायात्मन॰, Ś1 °धाय मन॰, Da1 D6 °ध्यायात्मन॰, Cg m r ś u मूर्ध्न्याधायात्मन (as in text) Cn cites मूर्ध्नि आधाय T1 (by corr) प्राणान्, Cā g k m n r ś u प्राणम् (as in text) — d) Da1 D8 G2 °धारण, T1 °धारणात्, Ck m n r ś u °धारणाम् (as in text)

13 a) = B 7 192 52a B 14 26 8c — c) Ś1 स मद्भाव, Cg k n r ś u त्यजन्देह (as in text) — d) Ś1 याति नास्त्यत्र सशय॰, Ck l n r ś u as in text Cg cites स याति

14 d) B2 नित्ययोगस्य, Cā k l m n r ś u °युक्तस्य (as in text) Ś1 2 (marg as in text) 6 K6 M4 देहिन॰, Cā k l m n r ś u योगिन॰ (as in text)

15 d) = B 12 143 3d K1 2 गत॰ (sic)

16 a) D4 (by corr) 7 T2 G1–3 M1 2 8 (inf lin) 4 Cā °भवनाल्, Cāp g k l m n r ś u v °भुवनाल् (as in text) Ñ1 लोकान्, T लोकात्, Cā k l m n r ś u लोका॰ (as in text) — b) M4 °वृत्तिनो, Cā k. l m n r ś u v °वर्तिनो (as in text) — c) K2 °मुपेयति, Cā k l r ś u °मुपेत्य तु (as in text)

17 Cf Manu. 1 73 — b) Ś1–5 K1 6 Cg k अहर्ये, Cā r ś u अहर्यद् (as in text) — c) Da1 रात्रिर्, Cg k n r ś u रात्रिं (as in text) K8 D6 T2 °सहस्राते, Ck n r ś u °सहस्रान्ता (as in text) — d) Ś6 तेहोरात्रि॰, D6 T2 अहोरात्र॰, Ck n r ś u तेऽहोरात्र॰ (as in text)

18 Ś2 breaks off here — a) K1 G8 अव्यक्ता-व्यक्तय॰ सर्वा॰, Cā k l r ś u v as in text — b) Cf 19d D4 (m as in text) प्रलयति, Ck l r ś u प्रभवन्ति (as in text) — d) K2 D1 2 5 8 G2 8 °सज्ञिके (D1 °ते), Ck l r ś u °सज्ञके (as in text).

19 a) K2 एवाह, Ck l n r ś u एवाय (as in text) — b) T2 एवं भूत्वा, Ck m n r ś u भूत्वा भूत्वा (as in text) — c) M8 °गमेवश, Ck l n r ś u °गमेऽवश॰ (as in text) — d) Cf 18b K5 D8 T2 M2 प्रभवंति, Ck r ś u प्रभवति (as in text)

20 D6 om 20ab — a) Ś1 परात्, Cā k l n r ś u v परस् (as in text) — b) Ś1 3–5 K6 T2 [ऽ]व्यक्ताव्यक्त॰, Ś6 Cā पुरुषाख्य॰, Ck व्यक्ताव्यक्त॰, Cr ś u v ऽव्यक्तोऽव्यक्तात् (as in text) Cl cites अव्यक्त॰

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१
पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥ २२
यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३
अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५
शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययावर्तते पुनः ॥ २६
नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७
वेदेषु यज्ञेषु तपःसु चैव
दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम् ॥ २८

इति श्रीमहाभारते भीष्मपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

Cn cites अव्यक्तात् M4 सनातनात्, Cā k l n r ś u °तन (as in text) —$^{c}$) Ś6 Cā य सर्वेष्वपि, K0 D1 G2 यस्तु सर्वेषु, B4 य सम सर्वे, D6 सर्व एवेषु, Cn r ś u य स सर्वेषु (as in text) Cl cites सर्वेषु

21 $^{b}$) = (var) Kathopaniṣad 2 3 $10^{d}$ —$21^{cd}$ = (var) Gītā 15 $6^{cd}$ —$^{c}$) Ś1 यत्, Ś4 य, Cā k l m n r ś u य (as in text) K3 निवर्तेत, Cā k l m n r ś u निवर्तन्ते (as in text) —$^{d}$) = Gītā 15 $6^{d}$

22 $^{a}$) K1 2 स परा, B2 परम, G3 स पर, Cā k l n r ś u v स पर (as in text) —$^{b}$) Ś6 हि, Cā n r ś u तु (as in text) — After $22^{ab}$, Ś3–6 K6 Ck ins

97* य प्राप्य न पुनर्जन्म लभन्ते योगिनोऽर्जुन ।
[ Ś6 मां (for य) ]

—$^{c}$) K6 यस्यातस्थानि —$^{d}$) = Gītā 2 $17^{b}$ B 12 59 $138^{d}$ Ś3–6 K6 Ck यत्र सर्वं प्रतिष्ठित, Cl n r ś u as in text

23 $^{b}$) Ñ1 प्रवृत्तिं, Cā g k l m n r ś u आवृत्तिं (as in text) —$^{c}$) Ś1 प्रयाता, D6 प्रयता, Cā k. l. r ś u प्रयाता (as in text) K1 Da1 याति, Cā k l. r ś u यान्ति (as in text) —$^{d}$) T2 पुरुषर्षभ, Cā ś u भरतर्षभ (as in text)

24 $^{a}$) K3 G2 3 अग्नि, Ck l m n r ś u अग्निर् (as in text) Ś6 K1 Cā शुक्ला, Ck l m n r ś u शुक्ल (as in text) —$^{b}$) G2 षण्मासाद्, Ck m n r ś u षण्मासा (as in text)

25 $^{a}$) Ś6 K1 Cā कृष्णा, Ck l r ś u कृष्ण (as in text) Ś4 6 धूम कृष्णस्तथा रात्रि (by transp) —$^{d}$) K0 न मुह्यति, Cā k ś u निवर्तते (as in text)

26 $^{a}$) Ś1 4–6 K6 शुक्लकृष्ण, Cl n r ś u °कृष्णे (as in text) —$^{b}$) K0 M3 (*sup lin* as in text) शाश्वती, Ck r ś u शाश्वते (as in text) Ś1 K0 समे, Da1 मत, Cr ś मते (as in text) —$^{c}$) Ś3–6 K6 Cg अनयोर्यात्यनावृत्तिम्, K3. 5 एकया न्यात्म(K5 °या यात्य)नावृत्तिम्, Ck r ś u as in text Cn cites एकया —$^{d}$) Ś3–6 K6 D3 Cg k एक(Ś3 Cg आद्य)यावर्ततेन्यया (D3 °ते पुन), Cr ś u as in text Cn cites अन्यया

27 $^{a}$) Ś1 नैते गती, Ś5 नैते सृते, K2 नृते सृती, M3 (*inf lin*) नैते नृती (sic), Ck m n r ś u नैते सृती (as in text) Cg cites एते सृती, Cv नैते सती D6 जाने (sic) —$^{c}$) = $7^{c}$

28 $^{b}$) Ś1 K5 D2 6 T2 M3 दाने च, Cn r ś u दानेषु (as in text) K0 पुण्यफल, Cl n r ś u पुण्यफल (as in text) —$^{c}$) Ś1 3 D7 Cg अभ्येति, K0 अभ्येत्य, G4 अन्वेति, Ck l n r ś u अत्येति (as in text). —$^{d}$) Ś4 (*sup lin* as in text) दिव्य, M5 शात, Ck l n r ś u चाद्यम् (as in text)

# ३१

श्रीभगवानुवाच ।

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १
राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २
अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३
मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५
यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् । C. 6 1175 B. 6 33 6 K. 6 33 6

— After 28, Ś1 ins

98* सर्वतत्त्वगतत्वेन विज्ञाते परमेश्वरे ।
अन्तर्बहिर्न सावस्था न यस्यां भासते विभुः ।

[ This is just the समग्रश्लोक to adhy 8 in Cg ]

Colophon om in Ś1-6 — *Sub-parvan* Ś1 K0 2 5 Ñ1 B D ( Da2 om ) T1 G2-4 M2 4 ( some MSS with the prefix श्री- or श्रीमद् ) भगवद्गीतासु उपनिषत्सु ( D7 om उप° ), K2 श्रीमद्भगवद्गीता; K6 श्रीमद्भगवद्गीतायां, G1 गीतायां K0 2 5 Ñ1 Da1 Dn D1. 2 6 8 cont ब्रह्मविद्यायां योगशास्त्रे ( K2 om योग° ) श्रीकृष्णार्जुनसंवादे, K6 श्रीकृष्णार्जुनसंवादे, D5 ब्रह्मविद्यायां, G2 परब्रह्मविद्यायां परमहस्यां श्रीयोगशास्त्रनिर्णये श्रीकृष्णार्जुनसंवादे, M2 परब्रह्मविद्यायां — *Adhy name* Ś1 प्रयाणकालयोग°, K0 अक्षरनिर्देश°, K5 D6 महापुरुषयोग°, K6 अक्षरब्रह्मयोगज्ञानेन परमगतिप्राप्तिनिरूपण(?), Ñ1 ब्रह्मयोग°, B2 अध्यात्मपुरुषदर्श°, B8 महापुरुषदर्शन°, B4 धारणायोग°, Dn पुरुषोत्तमयोग°, D1 C6 ब्रह्माक्षरनिर्देश°, D2 8 पुरुषयोग°, D5 आत्मयोग°, T G1 2 अक्षरब्रह्मयोग° — *Adhy no* ( figures, words or both ) D5 M2 31, T G 30 ( as in text ), M4 32 — *Bhagavadgītā adhy no* ( figures, words or both ) Ś1 K0-3 5 6 B Da1 Dn D1-4. 6-8 G2 8 M1. 3 5 Cv 8 — *Śloka no* K1. 3 5 Da1 Dn D1. 2 5 6 G2 28, K6 29 — *Aggregate śloka no* D1 1103

## 31

☞ K4 Da2 om. this adhy. ( cf. note at the beginning of adhy 23 )

1 $^{b}$) = 6 21 8$^{b}$ Ñ1 °सूयते, Cg k l n r ś °सूयवे ( as in text ) — $^{c}$) K1 3 5 Da1 D3 Cg ज्ञान, Ck. l n r ś u ज्ञानं ( as in text ) — $^{d}$) = Gītā 4 16$^{d}$ K1 2 Dn2 D1 ( m as in text ) 2 मोक्षसे ( s10 )

2 $^{b}$) Cf B 12 142 36$^{d}$ B 13 34 22$^{b}$ B2 अद्भुतं, B4 ( m as in text ) अव्यय, Ck. n r ś u उत्तमम् ( as in text ) — $^{c}$) K1 D1 प्रत्यक्ष्याव°, G8 प्रत्यक्षर°; Ck. l m n r ś u v प्रत्यक्षाव° ( as in text ) Ñ1 धर्मं, Ck l m. n r ś u धर्म्यं ( as in text ) — $^{d}$) Ś1 5 K2 5 M1 ससुखं, Cg k l n r ś u सुसुखं ( as in text )

3 $^{b}$) Cl ज्ञानस्य, Ck lp r ś u धर्मस्य ( as in text ) — $^{d}$) Ñ1 G8 मृत्यु° ( s10 )

4 $^{a}$) Ś8-6 कृत्स्नं, Cl n r ś u सर्वं ( as in text ) — $^{b}$) K0 D1 अव्यय°, Ck. l m n r ś u अव्यक्त° ( as in text ) — G3 om ( hapl ) 4$^{d}$-6$^{c}$, D8 om ( hapl ) 4$^{d}$-5$^{a}$ — $^{d}$) Da1 ते व्यवस्थित°, Cg n. r ś u तेष्ववस्थित° ( as in text ) Ck न च तेषु व्यवस्थित°

5 G3 om 5, D6 om. 5$^{a}$ ( cf v l 4 ) — $^{b}$) = Gītā 11 8$^{d}$ — $^{d}$) Cf B 12 209 31$^{d}$, 34$^{b}$ D1 8 M8 5 ( *inf lin* as in text ) भूतात्मा, T2 धर्मात्मा, Ck l. m n r ś u ममात्मा ( as in text ) — After 5, D8 ins

99* सर्वगः सर्वचक्षाद्यः सर्वकृत्सर्वदर्शनः ।
सर्वज्ञः सर्वदर्शी च सर्वात्मा सर्वतोमुखः ।

6 G8 om 6$^{abc}$ ( cf v l 4 ) — $^{ab}$) Ś1 transp नित्य and वायु — $^{c}$) = B 13 79 4$^{a}$ — $^{d}$) G8 [अ]व°, Ck r ś u [ठ]प° ( as in text ) Ñ1 मत्स्थानित्युपधारयन् ( s10 ) — After 6, Ś8-6 K6 Ñ1 ( marg ) D8 Cā g k ins

तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६
सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८
न च मां तानि कर्माणि निबध्नन्ति धनंजय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९
मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥ १०
अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ११
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १२
महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३
सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४
ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १५
अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६
पिताहमस्य जगतो माता धाता पितामहः ।

---

100* एव हि सर्वभूतेषु चराम्यनभिलक्षितः ।
भूतप्रकृतिमास्थाय सहैव च विनैव च ।

[ (L 1) Ś3 सर्वभावेषु, Ck सर्वभूतेषु (as above) Ś6 एष सर्वेषु भूतेषु Ñ1 चलाम्यनभि°, D8 चराम्यनुप° — (L 2) K6 Ñ1 D8 Ck सह चै( D8 नै )व ]

7 $^{a}$) = 3 33 22$^{c}$ — $^{b}$) Da1 D8 याति (sic) Ś1 4–6 K0 6 मामकीं, D8 (by corr) मामका, Cl n r ś u v मामिकाम् (as in text) — $^{c}$) G3 अल्पक्षये, Cl n r ś u कल्प° (as in text)

8 $^{a}$) Cf Gītā 4 6$^{c}$ Ś1 अधिष्ठाय, M4 अपष्टभ्य, Cg k l m n r ś u अवष्टभ्य (as in text) — $^{c}$) Ś4 5 K6 D8 3 Ck इद, Cl n r ś u इमं (as in text)

9 $^{a}$) K2 Cm तु, Cg l n r ś u च (as in text) — $^{b}$) = Gītā 4 41$^{d}$ — $^{c}$) Cf Gītā 14 23$^{a}$ — $^{d}$) K1 तेन, Ck l ś u तेषु (as in text)

11 $^{b}$) K2 मानुषी, Ck l m n r ś u v मानुषीं (as in text) Ś1. 3 4 (sup lin as in text) 5 6 K6 D8 M2 Ck आस्थितं, K2 Da1 D8 M4 आश्रिता, Cl m n r ś u आश्रितम् (as in text) — $^{c}$) = Gītā 7 24$^{c}$ K1 परभावम्, Ck l n r ś u v पर भावम् (as in text) — $^{d}$) Ś3–6 K6 Cā k ममा( Ck तथा )-व्ययमनुत्तम (= Gītā 7 24$^{c}$), K0 2 सर्वभूतमहेश्वर, Cl m n r ś u मम भूतमहेश्वरम् (as in text)

12 $^{a}$) M4 मोघदाशा मोघकाणा (corrupt) — $^{b}$) Ñ1 D8 मोघज्ञान, M4 मोहज्ञाना, Ck l m n r ś u मोघज्ञाना (as in text) — $^{c}$) Ś3–6 K6 Cā g transp राक्षसीं and आसुरीं D6 राक्षसी मामुपाश्रित्य (sic) — $^{d}$) Ś3 4 मोहनीं, Ck l n r ś मोहिनीं (as in text) Ś1 स्थिताः, Ck l n r ś u श्रिताः (as in text)

13 $^{a}$) K0 महात्मनस्तु (sic) Ś1 मे, Ck l n r ś u मा (as in text) — $^{b}$) Ś1 6 B3 4 D3 (m as in text) आस्थिता, D6 आश्रित, Ck l n r ś u आश्रिता (as in text) — $^{c}$) Ś6 D8 Ck भजते, Cl n r ś u भजन्ति (as in text) — $^{d}$) D2 भूत्वा, Ck l n r ś u ज्ञात्वा (as in text)

14 $^{a}$) Ś1. 3–6 K6 Ck कीर्तयंतश्च, Cā r ś u कीर्तयन्तो मा (as in text) — $^{b}$) Ś1 यतत्तो मा, K5 6 D8 यजतश्च, Ck यतमाना, Cā l n r ś u यतन्तश्च (as in text) Ś3–5 B1 यतव्रता, Cā l n r ś u दृढ° (as in text) — $^{d}$) = Gītā 12 2$^{b}$

15 $^{a}$) K0 वाप्यन्ये, Ck l r ś u चाप्यन्ये (as in text) — $^{b}$) Ñ1 यजते, Cg k r ś u यजन्तो (as in text) — $^{c}$) = B 12 270 37$^{a}$

17 $^{a}$) K1 Ñ1 B1 Dn1 D3 4 7 (the latter four before corr) 8 G1 M3 4 पितामहस्य (by metathesis); Ck l r ś u पिताहमस्य (as in text) — $^{b}$) M3 धाता माता (by transp) — $^{c}$) K0 वेद पवित्रमोंकार, M8 वेद्य पवित्रमोंकारम्, Ck l r ś u as in text Cn cites

वेद्यं पवित्रमोंकार ऋक्साम यजुरेव च ॥ १७
गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १८
तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९
त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोक-
मश्नन्ति दिव्यान्दिवि देवभोगान् ॥ २०
ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥ २१
अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२
येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २३
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २४
यान्ति देवव्रता देवान्पितॄन्यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् २५
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २६
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २७
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।

C 6 1198
B 6 33 28
K 6 33 28

---

वेद्य पवित्र — d) Ko–2 Ñ1 transp साम and यजु॰ K6 [अ]थर्वऋक्साम वै यजु॰, Ck l r ś u as in text

18 Da1 om 18 — c) Cf. Gītā 7 $6^d$ Ś1 5 K3 D3 4 8 G2 8 M1. 3 4 प्रलय, T1 G4 प्रलय, Ck l n. ś u प्रलय (as in text) K5 Cr प्रभवप्रलय स्थान — d) G2 निदान, Ck l m. n r ś u निधान (as in text)

19 b) Ñ1 [उ]त्सृजानि, Ck l n r ś u [उ]त्सृजामि (as in text)

20 a) M4 त्रयी विद्या, Cā k. l m n r s u v त्रैविद्या (as in text) Ś1 सोमपा, Ck n r ś u सोमपा॰ (as in text) Ko Ñ1 D3 G8 धूतपापा, Ck r ś u पूत॰ (as in text) — b) Ś3 D8 प्रार्थयति, Cā k. l. n r ś. u ॰यन्ते (as in text) — c) G2 ॰लोकान्, Ck. l r ś u ॰लोकम् (as in text) — d) T2 देह॰, Ck r ś u देव॰ (as in text)

21 b) Ś1 पुण्ये क्षीणे (by transp) K8 Da1 Dn1 (before corr) मर्त्यलोके, Ck r ś u ॰लोकं (as in text) — c) M1 एव हि त्रयी धर्म्यम्, Csp up एव हि त्रैधर्म्यम्, Cā k l n. r ś u एव त्रयीधर्मम् (as in text) M2 ॰प्रविष्टा, Cā k r ś u ॰प्रपन्ना (as in text) — d) T1 G2–4 गतागतिं, Cā g k l. n r ś u ॰गतं (as in text) G8 कामकामं, Ck l n. r ś u v ॰कामा (as in text)

22 a) K6 Ck अनन्याश्च विरक्ता मा, Cā g l. m n r ś u as in text — d) Ś1. 4 (m as in text) 6 ददामि, Ck. l n r ś u वहामि (as in text)

23 a) Da1 G8 येप्यन्यदेवता (G3 ॰न्यवैता, sic) भक्त्या, T1 G4 Cm ये त्वन्यदेवता भक्ता, Ck. l r ś u as in text — b) = Gītā 17 $1^b$ Cf B 12 91 $37^b$ — d) K1. 5 यजति विधि॰, K6 Ñ1 D6 Ck. l यजतेविधि॰, Cā g n r ś u as in text

24 a) K1 2 T1 ॰भूताना, Cā g k. l n ś u ॰यज्ञाना (as in text) — d) Ś3 चलंति, K2 न्यचति, Da1 D6 चवति, Cg चलते, Cā. k l n ś u च्यवन्ति (as in text)

26 c) D2 भक्त्यापहृत, Ck n r ś u भक्त्युप (as in text)

28 a) Ko D8 G8 -फलैरेव, Ck l n r ś u -फलै-रेव (as in text) — b) K1 Da1 Dn1 D1 8 M2 मोक्षसे (sic) — c) A few MSS सन्यास — d) Ś1 6 K1 2 6 D2 6 S (except M1) Cā उपेप्यसि, Ck. l. n r ś u उपै॰ (as in text)

संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २८
समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ २९
अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ३०
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१
मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ३२
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ३३
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४

इति श्रीमहाभारते भीष्मपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

29 $^{a}$) Cf. B 13 85 3$^{a}$ K1 2 समूह; Da1 (before corr) संमोह, Cā k l m n r ś u समोऽह (as in text) — $^{b}$) K0 द्वेपोस्ति, Ck r ś u द्वेष्योऽस्ति (as in text) T2 मत्प्रिय॰, Ck r ś u न प्रिय॰ (as in text) — $^{c}$) D6 च, Cā. l r ś u तु (as in text)

30 $^{a}$) = B 13 115 80$^{c}$ — $^{d}$) T2 G2 3 व्यवहितो, Cā k l n r ś u व्यवसितो (as in text)

31 $^{b}$) Ś1. 6 K1 B Da1 D1 6 Cā kp नियच्छति, Ck n r ś u निगच्छति (as in text) — $^{c}$) Ś3 5 Cg प्रतिजानेह, Cl n r ś u प्रतिजानीहि (as in text) — $^{d}$) Ś1 3-6 K0 6 Cā k मद्भक्त॰, Cl n r ś u मे भक्त॰ (as in text) K1 प्रयच्छति (sic)

32 $^{a}$) K5 व्युपाश्रित्य, Ck. n r ś u व्यपाश्रित्य (as in text) — 32$^{bcd}$ = B 14 19 61$^{bcd}$ — $^{d}$) Cf Gītā 6 45$^{d}$, 13 28$^{d}$, 16 22$^{d}$ B 12 217 30$^{b}$, 31$^{b}$ D6 ते याति परमा गतिं, Cā k l n r ś u as in text

33 $^{a}$) Cf B 14 19 62$^{a}$ — $^{d}$) D8 अनुचिंत्य, M4 इद प्राप्य, Cā k l n r ś u इम प्राप्य (as in text) M3 भजति, Cā l n r ś u भजस्व (as in text)

34 $^{ab}$) = Gītā 18 65$^{ab}$ — $^{c}$) Cf Gītā 18 65$^{c}$ Ś1 सत्य ते, D4 युक्त्वैव, D6 मुक्त्वैव, Ck. l. n r ś युक्त्वैवम् (as in text) — $^{d}$) D5 6 T2 G2 3 M3 मत्परायण, Ck l n r ś ॰यण॰ (as in text) Ś1 प्रतिजाने प्रियोसि मे ( = Gītā 18 65$^{d}$ )

Colophon om in Ś4-6 — *Sub-parvan* Ś1 K0. 2 5 Ñ1 B D (Da3 om) T1 G2-4 M3 4 (some MSS with the prefix श्री or श्रीमद्) भगवद्गीतासु उपनिषत्सु (K2 D3 7 om उप॰), K6 श्रीमद्भगवद्गीताया, G1 गीताया K0 5 Ñ1 Da1 Dn D5 cont ब्रह्मविद्याया योगशास्त्रे श्रीकृष्णार्जुनसवादे, K6 D6 श्रीकृष्णार्जुनसवादे, T1 G4 परब्रह्मविद्याया सहितायां योगशास्त्रे श्रीकृष्णार्जुनसवादे, G2 ब्रह्मविद्याया परमहस्या श्रीयोगशास्त्रनिर्णये श्रीकृष्णार्जुनसवादे — *Adhy name* Ś1 D2 3 भक्तियोग॰; K0 6 Dn T1 G2 4 Cś राजविद्याराजगुह्ययोग॰, K3 राजगुह्यराजयोग॰, K5 ब्रह्मविद्यायोग॰, Ñ1 D4 T2 G1 राजगुह्ययोग॰, B2 प्रकृतियोग॰, B3 प्रकृतिपुरुषयोग॰; B4 D5 राजविद्याराजगुह्य॰ (D5 ॰योग॰), D1 राजयोग॰, D6 आत्मनिर्णययोग॰, M2 श्रीकृष्णार्जुनसवाद — *Adhy no* (figures, words or both) D5 M3 32, M4 33, T G 31 (as in text) — *Bhagavadgītā adhy no* (figures, words or both) Ś1 K0-3 5 6 Ñ1 B Da1 Dn D1-1 6-8 G2 3 M1 3 5 Cv 9 — *Śloka no* K1 3. 5 Da1 Dn D1 2 5 6 G2 34, K6 35

# ३२

श्रीभगवानुवाच ।

भूय एव महाबाहो शृणु मे परमं वचः ।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १
न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २
यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३
बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥ ४
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५
महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६
एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७
अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८
मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १०
तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११

अर्जुन उवाच ।

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२ C 6 1216 B 6 34 12 K 6 34 12

## 32

☞ K4 Da2 om this adhy (cf note at the beginning of adhy 23)

1 K1 om the ref, but reads ॐ instead —[b]) = Gītā 18 64[b] —[c]) M8 तत्ते, Cā k l r ś u यत्ते (as in text) K1 प्रय°, K2 प्रेय°, D1 2 4 (by corr !) 8 T1 G4 M1 प्रियमाणाय, Ck l m n r ś u प्रीयमाणाय (as in text)

2 [b]) Ś1 (before corr) G2 M1 Ckp vp प्रभाव, Cā k.l m n r ś u v प्रभव (as in text) Ś0 Cā च, B2 नो, Cl n r ś न (as in text) —[d]) D6 हि, Cl r ś u च (as in text)

3 [d]) = 3 81 80[d], 118[d], 176[d], 82 4[d], 45[d], 54[d], 92[d], 135[d], 140[d], 83 21[d], 101[d], 198 53[d] B 12 97 13[d] B 13 26 44[d]

4 [a]) K1 2 Da1 G3 बुद्धि, Cā g k l m n r ś u बुद्धिर् (as in text) —[b]) Ś1 transp दम° and शम° —[c]) Cf B 12 227 73[d]

5 [a]) Cf 3 298 8[a] —[c]) Ś1 भाव (sic) —[d]) G3 एव, Cā k l n r ś u एव (as in text)

6 [a]) Cf 1 114 40[d] —[c]) Da1 (before corr) G2 मनसा, T2 मानवा, M2 मानुषा, Cā k l m n r ś u v मानसा (as in text) —[d]) G2 3 Ck एषा, Cl m n r ś u v येषा (as in text) G2 Cv ल्नोका, Ck l m n r ś u लोक (as in text)

7 [a]) K5 M2 एषा, Cā k l n r ś u v एता (as in text) —[c]) Ś0 K1 Cā [s]विकल्पेन, G1 8 Cr [s]विकम्प्येन, G2 [s]पिकपेन, Cu [s]प्रकपेन, Ck n ś ऽविकम्पेन (as in text)

8 [a]) Ś3 4 (sup lin as in text) 5 6 K6 Cā k अय, Cl. m n r ś u अहं (as in text) —[b]) Ś3 4 (marg) 5 6 K5 Cā k इत, Cn r s u मत्त° (as in text) —[d]) D2 °समस्थिता, Cā l n r ś u °समन्विता° (as in text)

9 [a]) Ñ1 D8 मद्गत (sic) —[b]) Ñ1 D8 बोधयत (sic) —[d]) Ś1 स्तोष्यति, D8 पुष्यंति, Cā k l n r ś u तुष्यन्ति (as in text) Ś1 3 4 (sup lin) 5 Cā k रमयति, Cl n r ś u च रमन्ति (as in text)

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥ १३
सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥ १४
स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥ १५
वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १६
कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १७
विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८

श्रीभगवानुवाच ।

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९
अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २०
आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१
वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२
रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३
पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।

---

12 $^{a}$) M1 3 6 transp ब्रह्म and धाम — $^{c}$) = 3 192 $21^{c}$ — $^{d}$) Cf 3 187 $54^{c}$

13 $^{c}$) Cf 2 4 $8^{a}$ 3 13 $43^{d}$, 83 $103^{a}$ B 9 49 $24^{a}$ — $^{d}$) Ś3-8 K6 D8 Ck मा, Cś मे (as in text)

14 $^{b}$) Ś1 M4 यन्मा, Ś3-5 यन्मे, G3 य मां, M2 यं तां, Cl r ś u यन्मा (as in text) — $^{c}$) T2 मे, Ck.l r ś u ते (as in text) K1 भक्ति, G3 Cv व्यक्त, Ck l n r s u व्यक्तिं (as in text) — $^{d}$) Ś3-8 K6 Ck महर्षय, Cl r ś u न दानवा (as in text)

15 Ś6 om 15 — $^{a}$) Cf 6 61 $65^{b}$ — $^{b}$) D2 वेत्सि, Ck l r ś u वेत्थ (as in text)

16 $^{b}$) = $19^{b}$ Ś1 दिव्या आत्मविभूतय, Ś3-6 K6 Ck विभूतीरात्मन शुभा, Cā l r ś u as in text — $^{d}$) G2 इमास्त्व, G3 (by corr) नित्य स, Ck.l r ś u इमास्त्व (as in text) M4 प्राप्य, Ck l r ś u व्याप्य (as in text) K6 Ñ1 D8 तिष्ठति, Cl r ś u °सि (as in text)

17 $^{ab}$) Ś1 विद्यामहा (sic), Ś3 Ck विद्या महा, K3 D1 2 4 8 T1 G4 विंद्यामह, Cl.n r s u विद्यामह (as in text) K1 योगि त्वा, K8 Da1 D6 Cl r योगी त्वा, K5 Dn1 D2 योगिस्त्वा, Cā k lp n ś योगिंस्त्वा (as in text) Ś1 3-8 K6 Ck त्वामह, Cr ś u त्वा सदा (as in text) — $^{c}$) D6 तेषु लोकेषु भावेषु, Ck l r s u as in text

18 $^{d}$) D6 M4 मे मत, Ck.n r.s u मेऽमृतम् (as in text)

19 $^{a}$) = 3 186 $13^{a}$, 203 $3^{a}$ B 7 12 $1^{a}$ B 12 160 $5^{a}$, 163 $6^{c}$, 340 $18^{c}$ B 13 7 $2^{a}$, 50 $2^{a}$ — $^{b}$) = $16^{b}$ Ś1 3-6 K6 Ck विभूतीरात्मन शुभा (cf v l $16^{b}$), Cl n s u as in text

20 $^{b}$) B Da1 D1 Ck सर्वभूताशये (D1 °य) स्थित, Cā l n r ś u v as in text — $^{c}$) K1 आद्यश्च, Ck.l n r ś u v आदिश्च (as in text) G2 M2 मध्यश्च, Ck n r s u v मध्यं च (as in text)

21 $^{b}$) Cf 2 33 $28^{d}$ Ś1 अहम्, Ck.l n r ś u रविर् (as in text) — $^{d}$) Cf B 7 6 $7^{a}$

22 $^{a}$) Cf B 13 14 $323^{a}$ Ś1 3-5 K6 Ck °वेदो ह, Cl r s u °वेदोऽस्मि (as in text) — $^{d}$) Ñ1 चेतना, Cā k.n r ś u चेतना (as in text)

23 $^{b}$) K3 Dn1 (before corr) G2 °राक्षसा, Ck r s u °रक्षसाम् (as in text) — $^{c}$) Cf 4 2 $19^{d}$ B 7 6 $5^{b}$ B 13 14 $322^{b}$ — $^{d}$) Cf 5 63 $5^{b}$

24 $^{a}$) G3 पुरोधाना, Ck n r ś u पुरोधसां (as

सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ २४
महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५
अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६
उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ २७
आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ २८
अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥ २९
प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३०
पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१
सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२
अक्षराणामकारोऽस्मि द्वंद्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥ ३३
मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४
बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५
द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।

C 6 1240
B 6 34 36
K 6 34 36

in text ) D6 G2 3 मुख्याना, M2 मा मुख्य ( by transp ), Ck.r ś u मुख्य मा ( as in text ) —[c]) Ś8 Ck सेनान्यामप्यह, Cn r ś u सेनानीनामह ( as in text ) —[d]) Cf B 14 43 7[b] K2 सागर, Ck l r ś u सागर ( as in text )

25 [b]) Ś8 K6 अपि, Cā l r ś u अस्मि ( as in text ) —[c]) Ś1 3–5 K6 Ck °यज्ञोहं, Cr s u °यज्ञोऽस्मि ( as in text ) —[d]) Ś6 K1 5 D6 Cā हिमाचल, M4 हिमालय, Ck r s u हिमालय ( as in text )

27 [a]) Some MSS उच्चैश्र° —[c]) Cf 4 2 14[b] Ś1 K6 ऐरावण, Cl r s u ऐरावत ( as in text ) —[d]) D6 नराधिप, T3 नरोत्तम, Cr ś u नराधिपम् ( as in text )

28 [a]) Cf 4 2 13[a] Ś1 वज्रो, Cr ś u वज्र ( as in text ) —[c]) Ś1 Cā प्रजनस्यास्मि; M4 प्रजनेष्वपि, Ck l n r ś u प्रजनश्चास्मि ( as in text )

29 [a]) G2 °श्चापि, Cs u °श्चास्मि ( as in text ) —[b]) Cf B 9 47 10[d] B 13 85 123[d] —[d]) Ś1 4 D8 सयमिनाम्, Ckp सयच्छताम्, Cā k.n r s u सयमताम् ( as in text )

30 [a]) Some MSS प्रह्लाद° —[b]) G1 कालयताम्, Cā k.n r ś u कलयताम् ( as in text ) —[d]) Cf B 13 14 322[c]

31 [a]) Ś1 4 K1 D6 8 Cā पवन ( K1 °ना ) प्लवताम्, M4 °न पतताम्, Cn r ś u पवन पवताम् ( as in text ) —[d]) A few MSS श्रोतसाम्

32 [a]) G1 स्वर्गाणाम्, Cā l n r ś u सर्गाणाम् ( as in text ) —[b]) M2 मध्यश्, Cl n r ś u मध्य ( as in text )

33 [b]) K1 D2 8 द्वद्व ( sic ) ( for द्वद्व ) —[d]) Dn1 °मुख, Cn r ś u °मुख ( as in text )

34 [a]) Ñ1 चास्मि, Cā n r ś u चाहम् ( as in text ) —[c]) Dn1 कीर्ति श्री, D8 कीर्तिश्री, Cl r ś u कीर्ति श्रीर् ( as in text ) —[d]) B1 transp स्मृति and धृति Da1 G2 3 धृतिक्षमा ( G3 °मा ), Dn1 D6 धृति क्षमा, Cr s u धृति क्षमा ( as in text)

35 [a]) Ñ1 बृहत्सामस्, Cl n r ś u °साम ( as in text ) M3 कथा, Cr s u तथा ( as in text ) —[b]) Cf B 14 44 7[a] — K1.2 om ( hapl ) 35[c]–36[b] —[c]) Ñ1 °शीर्षोस्मि, Cā l ś u °शीर्षोऽहम् ( as in text ) — Ñ1 ( *sec m* within parenthesis, om line 2 ) ins after 35 K5 D8 ( *marg sec m*, om line 2, with the remark "त्यक्त च" ) ins after 38

101* ओषधीना यवश्चास्मि धातूनामस्मि काञ्चनम् ।
सौरभेयो गवामस्मि स्नेहानां सर्पिरप्यहम् ।
सर्वासा तृणजातीना दर्भोऽह पाण्डुनन्दन ।
[ ( L 3 ) Ñ1 सर्वेषा ( for सर्वासा ) ]

जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ३६
वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनंजयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ३७
दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८
यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ३९
नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४०
यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ॥ ४१
अथ वा बहुनैतेन किं ज्ञातेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ४२

इति श्रीमहाभारते भीष्मपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

36 K1 2 om $36^{ab}$ ( cf v 1 35 ) — $^{a}$ ) G2 चल°, Cā k l r ś u छल° ( as in text ) — Ś0 ( but not Cā 1 ) om ( hapl ) $36^{bc}$ — $^{b}$ ) = Gītā 7 $10^{d}$ — Ś1 reads $36^{cd}$ in marg

37 K2 om ( hapl ) $37^{b}$–$38^{a}$ — $^{c}$ ) Ś1 D6 अस्म्यह, Cl r ś u अप्यह ( as in text ) — $^{d}$ ) Ś1 5 K1 D2 3 उशना°, Cl n i ś u उशना ( as in text )

38 K2 om $38^{a}$ ( cf v 1 37 ) — $^{b}$ ) Dn1 D6 8 नीतिरश्मि ( sic ) G2 जिगीर्षता, M6 जिहीर्षता, Cā k n r ś u जिगीषताम् ( as in text ) — $^{d}$ ) K1 ज्ञानमताम्, Cā r ś u °वताम् ( as in text ) — After 38, K6 D3 ( *marg sec m*, om line 2 ) ins 101*

39 $^{a}$ ) M2 मच्चापि ( sic ) — $^{b}$ ) Ś1 5 Ck तद्बीजमहम्, Cā r s u बीज तदहम् ( as in text ) — $^{c}$ ) T2 M1 5 तदस्मि, Cā k l n r ś u तदस्ति ( as in text ) K1 corrupt, D6 य स्याद्, M3 5 यस्मान्, Cā m r ś u यत्स्यान् ( as in text ) — $^{d}$ ) Ś0 Cā मम भूत, D6 भावभूत, Cl m n r ś u v मया भूत ( as in text )

40 $^{a}$ ) K6 शुभ, Ck r ś u मम ( as in text ) — $^{d}$ ) Da1 विभूतिर्, D6 विभूति, Ck n r ś v विभूतेर् ( as in text )

41 $^{c}$ ) Ś1 4–6 K0 6 Ck °गच्छेस्त्व, Cn r s u °गच्छ त्व ( as in text )

42 $^{a}$ ) Ś1 5 K0 6 G2 Ck बहुनोक्तेन, D8 बहुनैकेन, Cā g l m r ś u बहुनैतेन ( as in text ) — $^{b}$ ) Ś1 3–6 K0 1 6 Da1 Dn D1 2 6 T1 G3–4 M1 Cā k r ज्ञानेन, Cl m ś u ज्ञातेन ( as in text ) — $^{d}$ ) Ś8 Cg जगत्स्थित°, ( by transp ), K0 स्थित जगत्, Cā k l r ś u स्थितो जगत् ( as in text ) Cn cites स्थित°

Colophon om in Ś1–6 — *Sub-parvan* Ś1 K0 3 5 Ñ1 B Da1 Dn D1–6 8 T G2–4 M2 4 ( some MSS with the prefix श्री or श्रीमद् ) भगवद्गीतासु उपनिषत्सु; K3 श्रीभगवद्गीता, K6 श्रीभगवद्गीतायां, D7 भगवद्गीतासु, G1 गीतायां K0 5 Ñ1 B3 Da1 Dn D1–6 T2 cont ब्रह्म( T2 परब्रह्म )विद्याया योगशास्त्रे श्रीकृष्णार्जुनसंवादे, K6 श्रीकृष्णार्जुनसंवादे, G2 परब्रह्मविद्याया परमरहस्या श्रीयोगशास्त्रनिर्णये श्रीकृष्णार्जुनसंवादे — *Adhy name* Ś1 महापुरुषविभूतियोग, K0–3 5 Ñ1 B3 4 Da1 Dn D1–7 T2 G1 Cś v विभूतियोग°, K6 शुभदिव्यविभूतियोग, B2 योग°, D8 विभूतिपुरुषयोग°, T1 G4 विभूतिविस्तरयोग., G3 भवद्विभूतियोग, M2 विभूतिविस्तर° — *Adhy no* ( figures, words or both ) D. 30, T G 32 ( as in text ), M2 33, M4 34 — *Bhagavadgītā adhy no* ( figures, words or both ) Ś1 K0–3 5 6 B Da1 Dn D1–4 6–8 G2 3 M1 3 5 Cv 10 — *Śloka no* Ś1 ( by corr ) K1 3 Da1 Dn D1 2 5 6 42, K5 G2 43

# ३३

**अर्जुन उवाच ।**

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १
भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २
एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३
मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४

**श्रीभगवानुवाच ।**

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५
पश्यादित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६
इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७
न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८

C 6 1254
B 6 35 8
K 6 35 6

## 33

☞ K4 Da2 om. this adhy (cf note at the beginning of adhy 23)

1 $^{b}$) K1 °सज्ञिक, Ck l n r ś सज्ञितम् (as in text) — $^{c}$) M4 यत्स्वयोक्त, Ck l n r ś u यत्त्व योक्त (as in text)

2 $^{a}$) Cf B 12 222 29$^{d}$, 250 19$^{b}$, 320 108$^{d}$ Ś1 G M4 5 भवात्ययौ, G2 M4 5 °व्ययौ, Ck प्रभवाप्ययौ (hypermetric), Cl n r ś u भवाप्ययौ (as in text) — $^{b}$) K1 M8 श्रुतो (sic) Ś1 3–6 Da1 D2 3 6 M2 4 Cā k विस्तरतो, Cl n r ś u विस्तरशो (as in text) — $^{c}$) = 3 186 128$^{a}$ — $^{d}$) K1 3 Ñ1 Dn2 D6 महात्म्यम् (sic) — After 2, K1 *repeats* 1$^{cd}$

3 G3 om (hapl) 3–4 — $^{a}$) = 5 165 7$^{c}$ B 13 55 30$^{a}$ T2 M1 5 यथातत्त्वम्, Ck r ś u यथात्थ त्वम् (as in text) — $^{b}$) Ś1 3–5 Ko Dn1 D3 8 G2 M4 Ck परमेश्वर, T2 पुरुषोत्तम, Cn r ś u परमेश्वर (as in text) — 3$^{cd}$ = (var) B 14 55 3$^{cd}$ — $^{d}$) K1 2 D6 ऐश्वर्यं, Cā k l n i ś u ऐश्वर (as in text) B2 परमेश्वर, G2 पुरुषोत्तम, Ck l n r ś u त्तम (as in text)

4 G3 om 4 (cf v l 3) — $^{b}$) T2 इह, Ck l n r s इति (as in text) — $^{c}$) Ś1 3–6 K6 Cā k योगीश्वर, Cl n r ś u योगेश्वर (as in text)

5 $^{b}$) = 1 1 179$^{b}$, 33 23$^{b}$ 2 9 4$^{d}$, 45 20$^{b}$ 3 93 18$^{d}$, 170 34$^{d}$ 4 52 4$^{d}$ 5 54 45$^{b}$, 149 76$^{d}$ 6 10 36$^{b}$, 16 28$^{d}$ B 7 16 5$^{d}$, 26 33$^{b}$ B 8 19 5$^{d}$, 24 36$^{d}$ B 9 10 67$^{b}$, 19 28$^{b}$ B 10 6 9$^{d}$, 7 27$^{d}$ B 11 24 25$^{b}$ B 12 284 36$^{d}$, 313 15$^{d}$ B 13 14 405$^{d}$, 26 64$^{d}$ B 14 34 8$^{d}$, 56 17$^{d}$ etc ("epic tag") — $^{d}$) Da1 (before corr) G8 °वर्णकृतीनि, D6 °वर्णकृतानि, Ck n r ś u वर्णाकृतीनि (as in text)

6 $^{a}$) G2 रुद्रा (sic) — $^{c}$) Ñ1 (before corr) °पुण्यानि, D6 T2 M4 (also as in text) Cl °रूपाणि, Cā k n r ś u पूर्वाणि (as in text) — $^{d}$) Ś1 3 4 (*sup lin* as in text) 5 K6 पांडव, Cś u भारत (as in text)

7 $^{a}$) Ś1 G3 सर्वं, Ck l n r ś u कृत्स्नं (as in text) — $^{b}$) K1 2 [आ]दि (sic) — $^{d}$) K2 चान्य, Cā k l n r ś u चान्यद् (as in text)

8 $^{a}$) Ś1 M2 न च, Ko Da1 Dn1 न तु, K1 न त्व, Cl r ś u न तु (as in text) Ś1 4 Ck शक्य सि, Ś4 (marg) K6 शक्यासि, B3 शक्यते, Da1 D4 (by corr) T1 G1 3 4 M1–4 Cr शक्यसे, T2 G3 द्रक्ष्यसे, Cl n ś u शक्यसे (as in text) — $^{b}$) D6 एतेनैव, G3 मनोनैव (sic), Cā k l n ś u अने नैव (as in text) K1 सुचक्षुषा, Cl r s u स्वचक्षु- षा (as in text) — $^{c}$) Ś1 ददानि, Ck l r ś u ददामि (as in text) K3 रूप, Ck l r s u चक्षु-

संजय उवाच ।

एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९
अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १०
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११
दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२
तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३
ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४

अर्जुन उवाच ।

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसंघान् ।
ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५
अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वा सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूप ॥ १६
किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ता-
द्दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७
त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥ १८

---

(as in text) — $^d$) = Gītā 9 $5^b$ B1 D5 Ck रूपम्, Cā l n i ś u योगम् (as in text)

9 $^a$) G3 एवमुक्त्वा महाराज, M5 6 एवमुक्त्वाम्रतो राजन्, Cl n r ś u as in text — $^b$) Ś1 8–6 Ko 1 6 °योगीश्वरो, Cl m n r ś u °योगेश्वरो (as in text)

10 $^d$) Ś1 K2 दिव्यानीको° (sic)

11 With $11^{ab}$, cf B 13 107 $104^{ab}$, $129^{cd}$ — $^a$) Cf 1 114 $43^a$, 211 $9^c$ 5 120 $2^a$ B 12 148 $11^c$ B 15 32 $16^c$, 33 $23^c$ Ś1 8–6 Ko-2 6 दिव्यमालांबर°, Cr ś u °माल्या° (as in text) Cl cites अम्बर — $^c$) Ś1 विष्णुम्, Ck r ś u देवम् (as in text) — $^d$) = B 7 149 $30^d$

12 $^a$) M5 दिव्य, Ck m n ś u दिवि (as in text) — $^c$) K3 D1–8 M2 भा (sic) G3 सूर्याद्, Ck ś u सा स्याद् (as in text)

13 $^d$) T2 तथा, Ck i s तदा (as in text)

14 $^c$) = B 14 8 $32^a$ Ś1 विष्णु, Cr ś u देव (as in text)

15 $^b$) Ś1 2 भूतविशेषसगान्; G3 भूतमशेषसघान्, Ck l n r ś u °विशेषसघान् (as in text) — $^d$) Ś1 8–5 (Ś1 5 sup lin) 6 Ko G3 Ck r दीप्तान्, T1 G4 सघान्, Cn ś u दिव्यान् (as in text)

16 $^b$) S6 Ko 2, 3 D (Da2 om) M5 Cr u त्वा, Cś त्वा (as in text) — $^c$) K1 तवाद्य, Cm n r ś u तवादिं (as in text) — $^d$) G3 सर्वेश्वर, Cā r ś u विश्वेश्वर (as in text) Ś1 5 Ko-3 5 6 Ñ1 B Da1 Dn D1 3 4 6 7 T2 G2 M2 5 विश्वरूप, Cā r ś u विश्वरूप (as in text)

17 $^a$) Cf $46^a$ B 13 14 $387^a$ — $^c$) Ś1 5 K6 T G2 M1 3–5 त्वा, Cr ś u त्वा (as in text) Ś1 K1 Ñ1 D2 T2 G2 3 Cr दुर्निरीक्ष, Cn ś u °रीक्ष्य (as in text) — $^d$) = (var) 1 83 $8^b$

18 $^b$) = $38^b$ — $^c$) Cf B 12 335 $5^d$ S3–6 Cā g k सात्वत°, K1 शश्वत°, Cn r ś u शाश्वत° (as in text) ꕥ Cā सदिति ब्रह्मनाम। तद्विद्यते यस्मिन्निति सत्वान् परमेश्वर। स देवता येषां ते सात्वता ब्रह्मविदस्तेषां धर्मस्य ज्ञानकर्मसमुच्चयानुष्ठानस्य गोप्ता। ꕥ — $^d$) K2 पुरुप (sic)

अनादिमध्यान्तमनन्तवीर्य-
मनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥ १९
द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाद्भुतं रूपमिदं तवोग्रं
लोकत्रयं प्रव्यथितं महात्मन् ॥ २०
अमी हि त्वा सुरसंघा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ २१
रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसंघा
वीक्षन्ते त्वा विस्मिताश्चैव सर्वे ॥ २२
रूपं महत्ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥ २३
नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा
धृतिं न विन्दामि शमं च विष्णो ॥ २४
दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसंनिभानि ।
दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास ॥ २५
अमी च त्वां धृतराष्ट्रस्य पुत्राः
सर्वे सहैवावनिपालसंघैः ।
भीष्मो द्रोणः सूतपुत्रस्तथासौ
सहास्मदीयैरपि योधमुख्यैः ॥ २६

C 6 1272
B 6 35 26
K 6 35 26

19 [a]) Cf 5 69 6[b] — [c]) Ś1 4 6 K0 6 S (except M2) त्वा, Ck l n r s u त्वा (as in text) — [d]) Ñ1 (marg) विश्वमनतरूप, Cn r ś u विश्व मिद तपन्तम् (as in text)

20 [b]) Ś1 व्याप्तास्, Ck m n r ś u व्याप्त (as in text) — [c]) Ś1 2–5 K0 Ck रूपमिद (K0 °मुग्र) तवेदग्, Ś? K1–3 6 Da1 Dn D1–5 7 8 S Cn r u रूपमुग्र तवेद (G1 °देव), Dc रूपमुदग्ररूप तवेद (hypermetric), Cś रूपमिद तवोग्र (as in text)

21 [a]) Ś1 0 K1 3 6 Ñ1 B1–3 Da1 Dn1 D1–3 6 Ck r u त्वा, Cn ś त्वा (as in text) Cup त्वा + असुरसघा — [b]) Ś1 (sup lin as in text) घृणति, Ck n r ś u गृणन्ति (as in text) — [c]) Ś? स्वस्तीत्यचोक्त्वा (sic) Ś1 3 4 6 K1 2 6 Ck स्वस्तीति चोक्त्वैव महर्षिसघा°, Cr ś u as in text — [d]) S (except M2) त्वा, Ck ś त्वा (as in text)

22 With 22[a'], cf B 13 158 34[ab] — [a]) Cf 5 29 14[b] B 16 4 25[b] — [b]) K0 विश्वे देवा, Cś u विश्वेऽश्विनौ (as in text) Cn cites विश्वे — [c]) = B 7 163 34[a] D6 M? गधर्वयक्षा सुर°, Cn ś u as in text — [d]) N (Ś2 missing, K4 Da2 om) G1 M3 6 Ck n r त्वा, C? u त्वा (as in text) Cś cites विस्मिता एव (om च?)

23 G1 om 23[c]–24[b]

24 G1 om 24[ab] (cf v l 23) — [a]) Ś1 °वक्त्र, Cr s u °वर्णं (as in text) — [c]) Ś1 8 6 K? 8 6 6 Da1 Dn D1 6–8 S Ck n त्वा, Cr ś u त्वा (as in text)

25 K2 om (hapl) 25[c]–27[b] — [d]) = 45[d] Ś1 K1 देवीश, Cr ś u देवेश (as in text)

26 K2 om 26 (cf v l 25) — [a]) Ś1 8–? K6 सर्वे, Ś6 Da1 D4 T G1 2 M Cu च त्वा, G3 हि त्वा, Cś च त्वा (as in text) — [b]) Ś1 4 ? K5 6 G1 M1 सर्वे, Cr ś u सर्वे (as in text)

वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७
यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभिविज्वलन्ति ॥ २८
यथा प्रदीप्तं ज्वलनं पतंगा
विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोका-
स्तवापि वक्त्राणि समृद्धवेगाः ॥ २९
लेलिह्यसे ग्रसमानः समन्ता-
ल्लोकान्समग्रान्वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ३०
आख्याहि मे को भवानुग्ररूपो
नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं
न हि प्रजानामि तव प्रवृत्तिम् ॥ ३१
श्रीभगवानुवाच ।
कालोऽस्मि लोकक्षयकृत्प्रवृद्धो
लोकान्समाहर्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वा न भविष्यन्ति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२
तस्मात्त्वमुत्तिष्ठ यशो लभस्व

---

27 K2 om $27^{ab}$ ( cf v l 25 ) — After $27^{ab}$, Ś1 ins

102* सहस्रसूर्यात*सनिभानि
तथा जगद्ग्रासकृतक्षणानि ।

— [c]) T3 विलग्नो, G8 विमग्ना, Cr ś u विलग्ना ( as in text ) D6 दशनातराले, Cr ś u °नान्तरेषु ( as in text ) — After 27, S1 8-5 K6 D8 Ck ins

103* नानारूपै पुरुषैर्वध्यमाना
विशन्ति ते वक्त्रमचिन्त्यरूपम् ।
यौधिष्ठिरा धार्तराष्ट्राश्च योधा
शस्त्रै कृत्ता विविधै सर्व एव ।
त्वत्तेजसा निहता नूनमेते [5]
तथा हीमे त्वच्छरीर प्रविष्टा ।

[ ( L 1 ) Ś8 5 वाध्य°, Ś4 K6 योध्य° ( for वध्य° ) — ( L 5 ) Ś1 5 निहिता, K6 Ck विहता, D8 [अ]भिहता ( for निहता ) K6 नूनमेव ( for °मेते ) — ( L 6 ) Ś8 D8 त्वच्छरीरे, K6 त्वच्छरीर- ]

28 [b]) Ś1 विशति; Ś8 व्रजति, Cś u द्रवन्ति ( as in text ) — [c]) Ś1 नरदेवलोका, Cl ś u नरलोक वीरा ( as in text ) — [d]) Ś1 8-6 K5 6 B °ण्यभितो ज्वलति, Ś4 5 ( both marg ) °ण्यभितो व्रजति, D4 ( m as in text ) °णि समृद्धवेगा°, Cn r ś u °ण्यभि विज्वलन्ति ( as in text )

29 [a]) T2 G2 3 प्रदीप्त, Cn r ś u प्रदीप्त ( as in text ) — [b]) Ś1 6 समिद्धवेगा, Cś u समृद्ध° ( as in text ) — [d]) Ś1 5 ( *sup lin* as in text ) समिद्ध°, K2 समृद्धि°, Cl s u समृद्ध° ( as in text )

30 [b]) Ñ1 T2 G1 समन्तान्, Ck n r ś u समग्रान् ( as in text ) — [d]) Ś1 4 ( *sup lin* as in text ) 5 6 K6 M8 5 प्रपतति ( by metathesis ), Ck n r s u प्रतपन्ति ( as in text ) Ś1 5 K6 2 8 6 Ñ1 M1-3 5 विष्णो, Cl n ś u विष्णो ( as in text )

31 [a]) D8 भग( ग marg )वान्, Ck l n r ś u भवान् ( as in text ) — [b]) D3 देवेशवर, Ck l r ś ते देववर ( as in text ) — [c]) K1 विज्ञातम्, Ck l n r s u विज्ञातुम् ( as in text ) — [d]) Dn1 च, Cg ś u हि ( as in text )

32 [a]) Ś1 8-6 Cā k प्रवृद्धान्, Cm n r ś u प्रवृद्धो ( as in text ) — [b]) D6 इत, Ck l m n r ś u इह ( as in text ) — [c]) Ś1 ऋते त्वदेते, Ś5 K6 B1-8 Ck r ऋतेपि त्वा, Cā l n ś u ऋतेऽपि त्वा ( as in text ) Ś6 भवति, Ck l m n r ś u भविष्यन्ति ( as in text )

33 [a]) Ś4 ( *sup lin* ) भजस्व, Cr ś u लभस्व ( as

जित्वा शत्रून्भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥ ३३
द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथान्यानपि योधवीरान् ।
मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान् ॥ ३४
संजय उवाच ।
एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ॥ ३५
अर्जुन उवाच ।
स्थाने हृषीकेश तव प्रकीर्त्या
जगत्प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसंघाः ॥ ३६
कस्माच्च ते न नमेरन्महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनन्त देवेश जगन्निवास
त्वमक्षरं सदसत्तत्परं यत् ॥ ३७
त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानम् ।
वेत्तासि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूप ॥ ३८
वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ॥ ३९
नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व ।
अनन्तवीर्यामितविक्रमस्त्वं

C 6 1286
B 6 35 40
K 6 35 40

---

in text) — c) K5 मयैव ते, Da1 G2 मयैवेते, M4 मयैवैता, Cr ś u मयैवैते (as in text) Ś1 D8 निहिता°, Cr ś u निहता° (as in text) D3 मर्वमेव, Ck r ś u पूर्वं° (as in text)

34 b) Ś3–6 Ck लोकवीरान्, K0 वीरमुख्यान्, K1 2 G8 Cu योधमुख्यान् (for योधवीरान्) — c) Da1 हतास्त्व, Cl r ś u हतास्त्व (as in text) G2 8 (before corr) व्यतिष्ठा, Cn r ś u व्यथिष्ठा (as in text)

35 c) Cup cites एव + अह

36 c) Ś4 (sup lin as in text) 6 भूतानि, Ck l n r ś भीतानि (as in text)

37 a) Ś3 Ck कस्माच्चैते, Cl m n r ś u कस्माच्च ते (as in text) Ś3 4 (by corr sec m) 5 K6 Ck नमेयुर्, Cn r ś u नमेरन् (as in text) — b) D8 T2 M2 ह्यादि°, Ck n. r ś u ऽप्यादि° (as in text) — d) Ś4. 5 M2 सदसत्त° पर, Ś6 सदसतो° पर, Ck l m n r ś u सदसत्तत्पर (as in text)

38 b) = 18b — c) Ś4 परम, Cl n r ś u च पर (as in text) — d) Ś1 इद समस्तं, Ś3–6 B4 Da1 D4–6 8 T2 G1 2 M2 5 अनंतरूप, B1 °माद्य, Cn r s u °रूप (as in text)

39 After 39ab, S1 3–6 K6 D8 Cā ins

104* अनादिमानप्रतिमप्रभाव
सर्वेश्वर° सर्वमहाविभूते ।

[(L 2) D8 °विभूति, Cā विभूते (as above)]

40 a) S6 च, Cn ś u ते (as in text) — b) K8 M4 सर्वे, Ñ1 सर्व°, Cl n ś u सर्व (as in text). — After 40ab, Ś1 3–6 K6 D3 Ck ins

105* न हि त्वदन्य° कश्चिदपीह देव
लोकत्रये दृश्यतेऽचिन्त्यकर्मा ।

[(L 1) Ś4 (orig) 6 K6 D8 कश्चिदस्तीह]

— c) S1 3 4 °वीर्योमित, Ś6 वीर्यामृत°, Cn r ś u °वीर्यामित° (as in text) — d) K6 व्याप्नोपि सर्वं च,

सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४०

सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदं
मया प्रमादात्प्रणयेन वापि ॥ ४१

यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।
एकोऽथ वाप्यच्युत तत्समक्षं
तत्क्षामये त्वामहमप्रमेयम् ॥ ४२

पितासि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभाव ॥ ४३

तस्मात्प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः

---

Cl n r ś u सर्वं समाप्नोषि ( as in text ) D6 8 सर्वं, Ck n r s u सर्वं ( as in text )

41 [a] ) Ś1 3 यदुक्तो, D8 यथोक्त, Cl n r ś u यदुक्त ( as in text ) — [b] ) Ś1 4 ( *sup lin* ) Cā स खेति च, Ś8-6 सखे च, Ck l n r s u सखेति ( as in text ) — [c] ) K2 Ck अजानतो, Cl n r ś u अजानता ( as in text ) Ś1 5-6 Ko 6 B4 D3 Cśp up तवेम, Cn r s u तवेदं ( as in text ) — [d] ) K1 प्रणवेन ( sic ) D6 T2 Cn चापि, Cr s u वापि ( as in text )

42 [a] ) D1 6 S ( except M2 6 ) यच्चापहा°, Cr n s u यच्चावहा° ( as in text ) M4 [ऽ]पि, Cl n r ś u ऽसि ( as in text ) K1 यश्चावहासार्थेनमस्कृतोसि — [c] ) Ś4 ( *sup lin* ) 6 Cā सत्समक्ष, Ck मत्समक्ष, Cn r ś u तत्समक्ष ( as in text ) — [d] ) D6 कामये ( sic ) S1 ईशमीड्य ( cf 44[b] ), D2 M8 4 अप्रमेय, Cn अप्रमेय°, Cr ś u अप्रमेयम् ( as in text )

43 [a] ) K1 पितास्य, G3 पिता हि, Cl n r ś u पितासि ( as in text ) — [b] ) M3 त्वमद्य, Cr ś u त्वमस्य ( as in text ) Ś3 4 Ko 6 Ck विश्वस्य, Cr ś u पूज्यश्च ( as in text ) — [c] ) Ś6 [अ]धिक° ( submetric ), B4 D2 [अ]प्यधिक°, M4 [अ]भ्यधिक, Ck r ś u [अ]भ्यधिक° ( as in text ) Ś1 6 कुतो नु, Ck r ś u कुतोऽन्यो ( as in text ) — [d] ) Ś1 3 4 ( *sup lin* ) 5 6 Ko 2 3 5 6 B3 Da1 Dn D1-3 5 T G3 4 °प्रभाव, Ś4 ( orig ) °स्वभाव, Cr ś u °प्रभाव ( as in text )

44 [a] ) G3 काम, Cn r s u काय ( as in text ) — [b] ) Ś1 T1 G4 अप्रमेय; Ś3 ईशमीड्य, Da1 ईड्य मीशं ( by transp ), Cn r ś u ईशमीड्यम् ( as in text ) Cl cites ईश — [d] ) Ś1 3-6 K6 प्रियस्यार्हसि, D1 ( m as in text ) प्रियाया इव, Cl r ś u प्रियाया र्हसि ( as in text ) Ś6 सोढुमर्हन्, Cl r s u देव सोढुम् ( as in text ) Cl cites सोढु — After 44, Ś1 3-6 K6 D3 Cā k ins

106* दिव्यानि कर्माणि तवाद्भुतानि
पूर्वाणि पूर्वेऽप्यृषय स्मरन्ति ।
नान्योऽस्ति कर्ता जगतस्त्वमेको
धाता विधाता च विभुर्भवश्च ।
तवाद्भुत किं नु भवेदमह्य [5]
किं वाशक्य परत कीर्तयिष्ये ।
कर्तासि सर्वस्य यत स्वयं वै
विभो तत सर्वमिद त्वमेव ।
अत्यद्भुत कर्म न दुष्कर ते
कर्मोपमान न हि विद्यते ते । [10]
न ते गुणानां परिमाणमस्ति
न तेजसो नापि बलस्य नर्द्धे ।

[ ( L 2 ) Ś6 पूर्वे ऋषय°, K6 पूर्वा ऋषय, Ck पूर्वेऽप्यृषय ( as above ) D3 वदति, Ck स्मरन्ति ( as above ) — ( L 4 ) Cā k cite धाता and विधाता — ( L 5 ) Ś4 न ( for नु ) — ( L 6 ) Ś6 पुरत°, Ck परत° ( as above ) — ( L 8 ) D3 ततो जगत्कृत्स्नमिद त्वमेव — ( L 12 ) Ś4 तेजमा ( for तेजसो ) Ś1 नत्न्वे ( sic ), Ś6 ऋद्धे ( for नर्द्धे ) ]

On the other hand, Ñ1 ins after 44

107* इमानि कर्माणि तवाद्भुतानि
कृतानि पूर्वे मुनयो वदन्ति ।
न ते गुणानां परिमाणमस्ति
न तेजसश्चापि बलस्य विष्णो ।
[ Cf lines 1, 2, 11, 12 of 106* ]

प्रियः प्रियायार्हसि देव सोढुम् ॥ ४४
अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥ ४५
किरीटिनं गदिनं चक्रहस्त-
मिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्ते ॥ ४६

श्रीभगवानुवाच ।

मया प्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७
न वेदयज्ञाध्ययनैर्न दानै-
र्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८
मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥ ४९

संजय उवाच ।

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५०

अर्जुन उवाच ।

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१

श्रीभगवानुवाच ।

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५२
नाहं वेदैर्न तपसा न दानेन न चेज्यया । C 6 1299 B 6 35 53 K 6 35 53

---

45 [c]) B1 दिव्यरूप, Cup देवरूप, Cl n r ś u देव रूप (as in text) — [d]) = 25[d]

46 With 46[a], cf 17[a] — [b]) Ś1.6 T2 G2 3 M3-5 स्वा, Cl r ś u त्वा (as in text) — [c]) K6 भुजद्वयेन, Cl n r ś u चतुर्भुजेन (as in text) — [d]) K0 विश्वमूर्तें (sic)

48 [a]) Ś1.8 4 (*sup lin*) 5 6 Ck °ज्ञाधिगमैर्, Cn ś u °ज्ञाध्ययनैर् (as in text) — [c]) Ś1 8 4 (also as in text) 5 K0 6 B3 Ck 1 एवरूप, Cn r ś u °रूप (as in text) Ś1 शक्यते मा, Ś8 4 (marg) 5 K0 6 Ñ1 B8 D6 8 T2 G1 M2 4 शक्यमह, B1 द्रष्टुमहं, B2 शक्योह, B4 शक्यस्त्वह, D2 शक्यतेह, C3 l n r ś u शक्य अह (as in text) Ś1 6 त्रिलोके, M4 न लोके, Cl n r ś नृलोके (as in text) — [d]) K1 D6 G3 Ck दृष्ट, B1 शक्य, Cl n r ś u द्रष्टु (as in text)

49 [a]) K1 न च, Cn r ś u मा च (as in text) Ś1 8 4 (marg, orig deleted) 5 6 विमूढता मूढ्, Cn r s u विमूढभावो (as in text) — [b]) Ś8 4 (marg, orig deleted) 5 6 Ck घोरमुग्र, Cn r ś u °मीदृङ् (as in text) — [c]) G8 व्यपेतभीत°, Cn s u व्यपेतभी° (as in text)

50 [d]) M4 काम्य°, Cl n r ś u सौम्य° (as in text)

51 [a]) Da1 दृष्ट्वैव, Cr ś u दृष्ट्वेद (as in text) — [b]) D6 G8 मौम्य, Cl r ś u सौम्य (as in text) — [d]) Ś5 Da1 (by corr) D3 G8 गता (sic)

52 [a]) Ś4 (before corr) G8 सुदर्शनम्, Ś4 (after corr !) दुर्दशनम्, Ck l r s u सुदुर्दर्शम् (as in text) — [d]) G8 नित्य वदनकाक्षिण°, M8 नित्यदर्शन°, Ck l n r ś u as in text

53 Ś6 om. 53 — [b]) D8 दानैर् (submetric !),

शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५३
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ५४
मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ५५

इति श्रीमहाभारते भीष्मपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

# ३४

अर्जुन उवाच ।
एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १
श्रीभगवानुवाच ।
मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २
ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३
संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५

---

Cr ś u दानेन (as in text) — c) K1 2 दृष्टं (sic) — d) K1 ये यथा; B4 मा तथा, Ck r ś u मा यथा (as in text) Cl cites मा

54 a) Ñ1 शक्यम्, Ck l n r s शक्य[] (as in text) — b) Ś1 8–5 K6 ह्यहम्, D1 8 त्वहम्, Ck l n r ś अहम् (as in text)

Colophon om in Ś4–6 K8 — *Sub-parvan* Ś1 K0 5 Ñ1 B1–8 Da1 Dn D1 2 4 8 T G2–4 M2 4 (some MSS with the prefix श्री or श्रीमद्) भगवद्गीतासु उपनिषत्सु, K2 5 D8 श्रीभगवद्गीतासु (K5 °या), G1 गीताया K0 5 Ñ1 Da1 Dn D4–6 T2 cont ब्रह्म (T2 परब्रह्म) विद्यायां योगशास्त्रे श्रीकृष्णार्जुनसवादे (D5 om श्रीकृष्णा°); K6 श्रीकृष्णार्जुनसवादे, G2 परब्रह्म विद्याया परमहस्यां श्रीयोगशास्त्रनिर्णये श्रीकृष्णार्जुनसवादे — *Adhy name* Ś1 K0 2 5 6 B2–4 Dn D1 2 6–8 Cś विश्वरूपदर्शनं (some MSS °न), Ñ1 D4 T G1 4 विश्वरूपदर्शनयोग, Da1 विभूतियोगविश्वरूपं; D3 विश्वरूपीय, D5 श्रीकृष्णविश्वरूपदर्शन, G3 भगवद्विश्वरूप दर्शनयोग, M2 विश्वरूपप्रदर्शनं — *Adhy no* (figures, words or both) D5 M2 34, T G2–4 33 (as in text), M4 35 — *Bhagavadgītā adhy no* (figures, words or both) Ś1 K0–2 5 6 Ñ1 B Da1 Dn D1–4 6–8 G1–3 M1 8 5 Cv 11 — *Śloka no* K1 8 5 Da1 Dn D1 2 5 G2 55

## 34

☞ K4 Da2 om this adhy (cf note at the beginning of adhy 23)

1 b) Ś1 Da1 भक्त्या, Ck l m n r ś u भक्तास् (as in text) — c) K1 चापि क्षरम् (sic) — d) G2 8 तेषा को योगवित्तम, Ck n r ś u as in text Cl cites तेषा के युक्ततमा

2 b) = Gītā 9 14d — d) K0 युक्ततमो (sic) D6 ते मे युक्ता समा मता, Ck n r ś u as in text

3 b) K6 Ck मामुपासते, Cl m n r ś u पर्यु° (as in text) — c) K2 सर्वत्रागमचिन्त्य (sic)

4 a) = B 14 19 36a B 15 19 16c cf 1 110 27a B 15 37 31a — d) = Gītā 5 25d (q v)

5 b) Ś4 (*sup lin* as in text) K5 सर्वत्राव्यक्तचेतसा, Ck l m n r ś u as in text — d) Ś1 8–6 Cā k देहभृद्भिर्, Cn r ś u °वद्भिर् (as in text)

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि नचिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७
मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८
अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥ ९
अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ १०
अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११
श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ १२
अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३
संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १४
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ C 6 1317 B 6 36 16 K 6 36 16

---

6 $^{a}$) Ś1 transp सर्वाणि and कर्माणि — $^{b}$) Cf Gītā 18 57$^{b}$

7 $^{b}$) T2 G3 मृत्यु ससार° (sic)

8 Ś1 reads 8$^{cd}$ in marg — $^{c}$) Ś1 3 4 (marg) 5 6 Cā k नि(Ś6 वि)वत्स्यसि त्वं, Cl n r ś u निव सिष्यसि (as in text) — $^{d}$) D1 धनजय, Cn ś u न सशय (as in text) Ś1 3-6 K6 D5 Cā k योग मुत्तममास्थित

9 $^{a}$) Ś1 (marg) 3-6 K6 D5 Ck अथावेशयितु चित्त, Cl n r ś u as in text — $^{b}$) T2 अशक्नोषि (sic) D2 स्थित, Ck.l r ś स्थिरम् (as in text) D8 (by transp) मयि शक्नोषि न स्थिरं — $^{d}$) M2 मामिहाप्तु, Cā k l n r s u मामिच्छाप्तुं (as in text)

10 $^{a}$) Ś1. 3 6 Ck सन्, Ś6 Cā त्व, M5 हि, Cl r ś u ऽसि (as in text) — $^{d}$) Ś1 मुक्तिम्, Cā k. n r ś u सिद्धिम् (as in text)

11 $^{b}$) Ñ1 T2 M3 5 उद्योगम्, Cā k l n r s u मद्योगम् (as in text) Ś1 3 4 6 K6 Da1 D3 Cā.k आस्थित ; Cl r ś u आश्रित (as in text) — $^{c}$) = Gītā 18 2$^{c}$ — $^{d}$) Ś1 K6 यतात्मवाक्, D1 जितात्मवान्, Ck n r ś यतात्मवान् (as in text)

12 $^{a}$) G3 श्रेयोभि, Cg k m n r ś u v श्रेयो हि (as in text) — $^{d}$) Ś3-6 Cā k अनतरा, K6 निर तरा, Ckp l m n r s u अनन्तरम् (as in text)

13 $^{a}$) T2 अचेष्टा (sic) — $^{b}$) K6 D6 वरुण (sic) D2 आत्मवान्, Ck r ś एव च (as in text) — $^{c}$) = Gītā 2 71$^{c}$ (q v) — $^{d}$) Cf B 12 297 36$^{c}$ D6 क्षम (sic)

14 $^{b}$) D8 जितात्मा, Ck l n r ś u यतात्मा (as in text) — $^{c}$) = Gītā 8 7$^{c}$ — $^{d}$) = 16$^{d}$ K2 6 B Da1 Dn D1 8 मे भक्त:, Ck l n r ś u मद्भक्त (as in text) D6 यो भक्त स च मे प्रिय

15 With 15$^{ab}$, cf B 14 46 41$^{ab}$ — $^{a}$) Cf 3 29 22* B 12 262 24$^{a}$, 30$^{a}$, 31$^{a}$ — $^{b}$) Ś6 लोकादुद्विजते, Cl n r ś u लोकान्नोद्विजते (as in text) Ś6 न य, Dn1 D2 8 तु य, D6 हि स, Cl n r ś u च य (as in text) — $^{c}$) Ś1 4 (m as in text) हर्षामर्षभयक्रोधैर्, Ś6 हर्षामर्शभयोद्वेगैर्, K6 हर्षमन्युभयक्रोधैर्, Ñ1 मर्षामर्षभयोद्वेगैर्, D6 हर्षाद्व र्षभ°, Cl n r s u as in text — $^{d}$) Ś6 स हि, Cl n r ś u स च (as in text)

16 D6 om 16 — $^{b}$) M2 दृढव्यथ, Cup न च क्षमी, Cl n r s u v गतव्यथ (as in text) — $^{c}$) = Gītā 14 25$^{c}$ B 12 329 14$^{a}$ Ś1 3-6 K6 6 -फल°, Cl m n r ś u v -परि (as in text) — $^{d}$) = 14$^{d}$ Dn1 D1 यो मे भक्त स, D8 M8 भक्तिमान्य स, D5 मद्भक्त: स च, Ck.l m n r ś u यो मद्भक्त: स (as in text)

योन हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १७
समः शत्रौ च मित्रे च तथा मानावमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८
तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९
ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २०

इति श्रीमहाभारते भीष्मपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

# ३५

श्रीभगवानुवाच ।
इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।

---

17 M2 8 om (hapl) 17 — b) = Gītā 18 54b — c) Ś1 8-6 K6 फल°, Cl n r ś u परि° (as in text) — d) Cf 19d D6 यो मद्भक्त', Cl n r ś u भक्तिमान्य (as in text)

18 a) = B 12 18 31c K1 D6 G8 सम (sic) K1 Dn1 (before corr) G8 मित्रौ (sic) — b) = Gītā 6 7d, K1-3 6 Ñ1 B D (Da2 om) T2 Cl r ś u मानाप° (for मानाव°) — c) = Gītā 6 7c

19 a) Cf 3 247 42a B 12 222 5a G8 निदा तुल्य°, Cl n ś u तुल्यनिन्दा° (as in text) — d) Cf 17d D7 भक्तिमान्य' स मे प्रिय, Cn r ś u as in text.

20 a) Ś1 8-5 K6 B Da1 Dn1 D1-3 5-7 Ck l n धर्मा°, Cā m r ś धर्म्या° (as in text) — d) T2 मत्प्रिया, Ck l n r ś u मे प्रिया' (as in text)

Colophon om in Ś4-6 — *Sub-parvan* Ś1 K0 3 5 Ñ1 B D (except D8, Da2 om) T G2-4 M2 4 (some MSS with the prefix श्री' or श्रीमद्) भगवद्गीतासु उपनिषत्सु, K3 6 श्रीभगवद्गीतासु (K6 °या), G1 गीताया K0 5 Ñ1 Da1 Dn D6 6 cont ब्रह्म विद्याया (D6 om) योगशास्त्रे श्रीकृष्णार्जुनसवादे, K6 श्रीकृष्णार्जुनसवादे, T2 G2 परमब्रह्मविद्याया परमहस्या श्री योगशास्त्रनिर्णये (T2 om परम° श्रीयोग°) श्रीकृष्णार्जुन सवादे — *Adhy name* Ś1 भक्तिसन्यासयोग, K0-2 5 Ñ1 B2 4 Da1 Dn D2 4 T G1 2 4 Cś v भक्तियोग' (to it B2 adds ज्ञानविज्ञानदर्शन'), K6 योगवित्तम विवरणपूर्वक कर्मफलत्यागरूपधर्मामृतोपदेश (?), D1 भक्तिसज्ञायोग — *Adhy no* (figures, words or both) D5 M2 35, T G 34 (as in text), M4 36 — *Bhagavadgītā adhy no* (figures, words or both) Ś1 K0-3 5 6 Ñ1 B Da1 Dn D1-4 6-8 G2 3 M1 3 5 Cv 12 — *Śloka no* K1 3 . Da1 Dn D2 . G2 20

## 35

☞ K4 Da2 om this adhy (cf note at the beginning of adhy 23)

Before 6 35 1, Ś1 8 K0-3 5 6 Ñ1 B1 3 4 Da1 Dn1 D1-4 6 T G M2 Cg v ins (cf 109*)

108* अर्जुन उवाच ।
प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ।
एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ।

[(L 1) Prior half = Gītā 13 19a K2 B4 D6 क्षेत्रज्ञ( for क्षेत्रज्ञम्) B1 (by transp) क्षेत्रज्ञ क्षेत्रमेव च — (L 2) K2 om the line from मिच्छामि up to वेत्ति in 6 35 1c T2 ज्ञानाज् (for ज्ञान) K0 (erroneously) भारत (for केशव)]

1 K2 om up to वेत्ति in 1c (cf v l 108*) — After the ref, K6 ins (cf 108*)

क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २
तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३
ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४
महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ५
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६
अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७
इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १०
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ११
ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२
सर्वतःपाणिपादं तत्सर्वतोक्षिशिरोमुखम् ।

C 6 1335
B 6 37 13
K 6 37 14

---

109* प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ।
एतत्ते कथयिष्यामि ज्ञानं ज्ञेयं च भारत ।

— $^{b}$) D6 क्षेत्र, Cā g h k l n r ś u क्षेत्रम् (as in text) — D5 om 1$^{cd}$ — $^{c}$) Ś1 3 4 (sup lin) i e Cā g h k वेद, Cl n r ś u वेत्ति (as in text) — $^{d}$) S1 4–6 Ko 3 6 D1 3 M2 Cā क्षेत्रज्ञम्, Ch l n r ś u क्षेत्रज्ञ (as in text) K2 तद्विधा (sic)

2 $^{a}$) Ś1 6 क्षेत्रज्ञमपि, Ñ1 क्षेत्रज्ञ इति, D11 क्षेत्रज्ञ चापि, Cl n r ś u क्षेत्रज्ञ चापि (as in text) — $^{c}$) T2 (by transp) क्षेत्रज्ञक्षेत्रयोर्ज्ञान

3 $^{a}$) B1 D2 यत्क्षेत्र, Ch l n r ś u तत्क्षेत्र (as in text) K1 2 यश्च, Cā k l n r ś u यच्च (as in text) — $^{c}$) Ś1 3–5 Cā h °स्वभावश्च, Cl n r ś u °प्रभावश्च (as in text) — $^{d}$) = 5 66 3$^{d}$

4 $^{a}$) Ś1 बहुभिर्, Cā g h l n r ś u बहुधा (as in text) — $^{d}$) Ś1 4–6 Ko 6 Ch विनिश्चित, Cl n r ś u विनिश्चितै (as in text)

5 $^{c}$) = B 14 35 47$^{c}$ — $^{d}$) G3 खेन्द्रिय°, Ch l n r ś u चेन्द्रिय (as in text)

6 $^{a}$) K1 M3 5 द्वेषा, K3 द्वेष, Ch l n r ś u द्वेष (as in text) D5 सुख चैव, Ch l n r ś u सुख दुःख (as in text) — $^{b}$) Cr [आ]श्रुति

7 $^{a}$) D6 अदानित्वम्, Cā g h l m n r ś u अमानित्वम् (as in text) Ś1 Ko अदाभित्वम्, some MSS अडभित्वम्, Cā k l m n r ś u अदम्भित्वम् (as in text) — $^{b}$) Cf B 12 270 39$^{b}$ — $^{d}$) Ko मौनम्, Cā h n r s u स्थैर्यम् (as in text)

8 $^{b}$) Ko T2 M3 5 अनहंकारम्, Cā k l n r ś u °कार (as in text) — $^{c}$) = B 12 9 33$^{a}$, 37$^{c}$ B 13 149 131$^{c}$ cf Gītā 14 20$^{c}$

9 $^{a}$) D6 अशक्तिर्, T2 आसक्तिर्, G3 अनक्तिर्, Cā h l m n r s u असक्तिर् (as in text) — Ś1 om (hapl) 9$^{d}$–11$^{a}$

10 Ś1 om 10 (cf v l 9) — $^{b}$) = B 13 17 166$^{d}$

11 Ś1 om 11$^{a}$ (cf v l 9) — $^{a}$) Ś3–5 K5 Ch r °ज्ञाननिष्ठत्व, M4 °ध्याननित्यत्व, Cā l n ś u °ज्ञाननित्यत्व (as in text) — $^{b}$) Cr °चिंतन, Cā k l m n ś u °दर्शनम् (as in text) — $^{d}$) Ś6 G2 Cā यत्ततो, Cn यदितो, Ch l r ś यदतो (as in text)

12 $^{b}$) Cf B 13 16 28$^{d}$ — $^{c}$) Cr sp up अनादि मत्पर, Cā g h l m n s u v अनादिमत्पर (as in text) — $^{d}$) Ś5 (by transp) न सन्नासत्तदुच्यते, Cā h l n r ś u v as in text

13 = B 12 239 29, 302 17, cf 284 75$^{c}$–76$^{b}$, 312 14 B 13 14 418$^{c}$–419$^{b}$ B 14 19 49, 40 4 Śvetāśvataropaniṣad 3 16 — $^{a}$) Ś1 4 6 K1–3 6 D6 8 Cb °पादात, Da1 °पाद च, Ch

सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४
बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १५
अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १७
इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८
प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ १९
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २०
पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २१
उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥ २२
य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २३
ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।

---

r ś u °पाद तत् ( as in text ) Cn cites पाणिपाद — [b] ) Cf B 12 61 17[d] Ñ1 °मुख , Cl n r s u °मुखम् ( as in text )

14 14[ab] = Śvetāśvataropaniṣad 3 17[ab] — [c] ) Ś1 सर्वतश्चैव, Da1 सर्वभृत्त्वेव, M8 °हृच्चैव, Cā k l m n r ś u °भृच्चैव ( as in text )

15 [a] ) K2 हविर्, Ck l n r s u बहिर् ( as in text ) — [d] ) Ś1 5 ( both sup lin ) D8 0 T2 च यत्, Ck l n r ś u च तत् ( as in text )

16 [a] ) S1 8-5 Ck विभक्तेषु, Cn तु भूतेषु, Cl n r s u v च भूतेषु ( as in text ) — [b] ) Ś5 Da1 सस्थित, Ck l n r ś u च स्थितम् ( as in text ) — [c] ) T1 ( after corr ) भूतभृन्न च, Ck l n r ś u °भर्तृ च ( as in text ) Ko विज्ञेय, Ñ1 त ज्ञेय, Cr ś u तज्ज्ञेय ( as in text )

17 T3 om ( hapl ) 17[c]–20[d] — [a] ) D8 तद्योनिस्, Cā k l n r ś u तज्ज्योतिस् ( as in text ) — [b] ) K1 तमसा ( sic ) — [c] ) Ś1 8-0 Ko Ck ज्ञानज्ञेय, Cl n r ś u ज्ञान ज्ञेय ( as in text ) ❀ Cā ज्ञानेनोक्तेनादम्भादिना ज्ञेय साक्षात्करणीयम् । ❀ — [d] ) Ś1 0 K6 Cā. k सर्वस्य हृदि ( by transp ), T1 G4 हृदि सर्वत्र, Cl n r ś u हृदि सर्वस्य ( as in text ) Ś1 मध्यग, Ś4 Ko 6 वेष्टित, K8 5 Ñ1 D ( Da2 om, D4 m as in text ) Cl n up धिष्ठित, Cn k r ś u विष्ठितम् ( as in text )

18 T2 om 18 ( cf v l 17 ) — [a] ) Ś3 Cg एतत्, Ck l n r ś u इति ( as in text )

19 T2 om 19 ( cf v l 17 ) — [a] ) = B 13 14 6[a] — [b] ) D5 7 शुभा°, Cl n r ś u उभा° ( as in text ) — [c] ) Ś1 Cg विकाराश्च, Cl m n r s u v °रांश्च ( as in text )

20 T2 om 20 ( cf v l 17 ) — [a] ) Cn np ś u कार्यकरण°, Cg k l m n r śp up °कारण° ( as in text ) — Ś1 om 20[cd]

21 [a] ) Ś6 Ko [ऽ]पि, Cn s u हि ( as in text ) T1 G4 पुरुष सुखदुःखो हि — [c] ) Ś1 Ko गुणसगस्य, Ck l n r ś u v °सङ्गोऽस्य ( as in text )

22 [a] ) K6 उपदेष्टा, Cā k l m n r ś u °द्रष्टा ( as in text ) — [b] ) Ś1 K6 T2 कर्ता, K1 G1 भक्ता, Cā k l n r ś u भर्ता ( as in text ) — [d] ) D5 पर, Cā l n r s u परः ( as in text )

23 [a] ) D2 T2 G2-4 M1 Cr एन, Cā g k n ś u एव ( as in text ) — [c] ) = Gītā 6 31[c] Ś5 स यथा, Cā g k n r ś u सर्वथा ( as in text ) Cup [आ]वर्त° — [d] ) Ko Ñ1 B1 2 Da1 T2 G2 M8 [ऽ]पि, G8 हि; Cā k n r ś u ऽभि ( as in text ) D5 स पुनर्नाभिजायते

24 [a] ) D1 ज्ञानेन, Cā k l n r ś u ध्यानेन ( as in text ) — [c] ) Ko D1 अन्येन ( D1 °न्ये तु ) साख्ययोगेन, Cā k l m n r ś u as in text

अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २४
अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५
यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २६
समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७
समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ २८
प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ २९
यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३०
अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३१
यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२
यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३
क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३४		C 6 1355
B 6 37 34
K 6 37 35

इति श्रीमहाभारते भीष्मपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

25 $^{a}$) Ś1 5 चैवम्, D3 त्विदम्, Cā l n ś u त्वेवम् (as in text) Cr cites तु Ck cites एवम् T2 अजायत (sic) — $^{c}$) Ś6 Cā [ए]व, Ck l n r ś u [ए]व (as in text)

26 $^{a}$) Ś5 Cg सभवति, D3 संभवते, Cl r ś u सजायते (as in text) Ś1 8 4 (marg) 6 Ck याव त्किंचित्सभवति — $^{d}$) = 2 45 $4^{d}$

27 $^{a}$) = B 14 1 $17^{a}$ B3 समा, Cā k l n r ś u सम (as in text) — K2 om (hapl) $27^{c}$–$28^{b}$ — $^{d}$) = Gītā 5 $5^{d}$

28 K2 om $28^{ab}$ (cf v l 27) — $^{d}$) = Gītā 6 $45^{d}$ (q v), 16 $22^{d}$ K8 याति (sic)

29 With $29^{ab}$, cf Gītā 3 $27^{ab}$ — $^{a}$) Ś1 8–6 K6 Cā g हि, Cl n ś u v च (as in text) — $^{c}$) T2 सदात्मानम्, G2 तदात्मानम्, Cl n r ś u v तथा त्मानम् (as in text)

30 = B 12 17 23 — $^{a}$) T2 G3 यथा, Ck l n r ś u v यदा (as in text) — $^{b}$) D8 एकत्वम्, Cā k l m n r ś u v °स्थम् (as in text) — $^{d}$) = 3 30 $41^{d}$ B 12 7 $39^{b}$, 21 $5^{d}$, 26 $14^{d}$, $15^{d}$, 174 $52^{d}$, $54^{d}$, 239 $21^{d}$, 251 $6^{d}$, 262 $15^{d}$, $16^{d}$, 326 $33^{d}$, $34^{d}$, $36^{d}$, $38^{d}$, etc D8 सदा, Cā k l n r ś u तदा (as in text)

31 Da1 om 31–32, D7 om (? hapl) 31 — $^{a}$) M2 अनतत्वान्, Cā k l m n r ś u v अनादि° (as in text) K6 निर्मलत्वात्, Ck l m n r ś u निर्गुण° (as in text) — $^{b}$) G3 M2 परमात्मानम्, Cl n r ś u परमात्मायम् (as in text)

32 Da1 om 32 (cf v l 31) D2 om $32^{cd}$ — $^{c}$) D8 M1 5 देही, Cā k l r ś u देहे (as in text)

33 Ś1 transp 33 and 34 — $^{a}$) M4 एकं, Ck n r ś u एकः (as in text)

34 For sequence in Ś1, cf v l 33

Colophon om in Ś4–6 — *Sub-parvan* Ś1 K0 2 3 5 Ñ1 B Da1 Dn D1 4–6 8 T G2 3 M2 4 (some MSS with the prefix श्री or श्रीमद्) भगवद्गीतासु उपनिषत्सु, K6 D2 6 7 श्रीभगवद्गीतासु (K6 °यां); G1 गीताया K0 5 Ñ1 Dn2 D5 6 T2 cont ब्रह्म(T2 परब्रह्म)विद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे, K6 श्रीकृष्णार्जुनसंवादे, G2 परब्रह्मविद्याया परमहस्या श्रीयोगशास्त्रनिर्णये श्रीकृष्णार्जुनसंवादे — *Adhy name*: Ś1 K2 B4 G2 4 क्षेत्रक्षेत्रज्ञविभागयोग, K0 क्षेत्रनिर्देश, K8 क्षेत्रक्षेत्रज्ञदर्शन, K5 Ñ1 T2 प्रकृतिपुरुषविवेकयोग, K6 प्रकृतिपुरुषक्षेत्रक्षेत्रज्ञादिवर्णन (?), B2 क्षेत्रप्रकृतियोग,

# ३६

श्रीभगवानुवाच ।
परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २
मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥ ३
सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४
सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५
तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६
रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७
तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८
सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९
रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १०
सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते ।

---

Da1 D5 क्षेत्रनिर्देशयोग, Dn D6 8 क्षेत्रक्षेत्रज्ञनिर्देश°; D8 क्षेत्राभिदर्शन°, T1 क्षेत्रक्षेत्रज्ञविभाग, G1 Cś v क्षेत्रक्षेत्रज्ञयोग° — *Adhy no* (figures, words or both) D5 M2 36, T G 35 (as in text), M4 37 — *Bhagavadgītā adhy no* (figures, words or both) Ś1 K0–3 5 6 Ñ1 B Da1 Dn D1–4 6–8 G2 3 M1 3 5 Cv 13 — *Śloka no* K1 5 D1 2 5 34, K3 Dn D6 G2 35, Da1 32

## 36

☞ K4 Da2 om this adhy (cf note at the beginning of adhy 23).

1 M3 5 om the ref — d) Ś6 उपागता°, Ñ1 उदागता°, D8 अतो गता°, Ck l m n r ś u इतो गता° (as in text)

2 a) K3 D7 G3 अपाश्रित्य, Cn r ś u उपाश्रित्य (as in text) Ck cites आश्रित्य — b) G3 आस्थिता, Ck l n r ś u आगता° (as in text) — c) D2 स्वर्गे, Ck l n r ś u सर्गे (as in text) Ś1 G2 3 नोपि, Ś6 न प्र, Cl r ś u नोप- (as in text) Cn cites न जायते — d) D6 च, Ck l n r ś u न (as in text) Ś5 व्ययति च; Ś6 व्यथति ते, K1 विशति च, B1 कथति च, Cg l n r ś u व्यथन्ति च (as in text)

3 b) Ś1 3 Ñ1 Ck ददामि; Cl m n r ś u दधामि (as in text)

4 c) Ñ1 (by transp) तासां योनिर्महद्ब्रह्म, Ck l n r ś u v as in text

5 a) = B 12 16 13a (var) B 14 12 4c — b) = B 12 269 55f

6 a) M4 निर्ममत्वात्; Ck l n r ś u निर्मलत्वात् (as in text) — c) K1 सुखमगेन, T2 सुखदुःखेन, G3 M3 5 सुखसगे नि, Ck l n r ś u v सुखसङ्गेन (as in text) K2 ज्ञानसघेन, K6 °सखेन, Ck l n r ś u v °सङ्गेन (as in text)

7 b) M1 °ङ्गवा (sic) — d) Ś1 Ñ1 D1–3 7 8 G3 देहिना, Cn r ś u देहिनम् (as in text)

8 a) M2 ततस् (sic) — b) Ś5 D2 मोहिन; Ck n r ś u मोहन (as in text)

9 D2 om (hapl) 9ab — b) Dn1 D8 T2 कर्माणि (sic) — c) Ś6 तु तम; Ñ1 तु मत° (by metathesis), Da1 मनुज, Ck r ś u तु तम° (as in text)

10 a) M3 (*sup lin* as in text) चापि भूय°, Cg k l n r ś u v चाभिभूय (as in text) — b) Ś3–6 K0 Cg k सत्त्व भारत वर्धते, Cl n ś u as in text Cr cites सत्त्व वर्तते — c) Cf B 14 39 1d Da1 दमश्, Cg n r ś u v तमश् (as in text) — d) Cf B 14. 39 12c

ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११
लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३
यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥ १४
रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५
कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६
सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७
ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः ॥ १८
नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९
गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ।

C 6 1375
B 6 38 20
K 6 38 20

---

11 [b]) Ś3 D2 Cv प्रकाशम्, Cr प्रकाशे, Cā k l n ś u प्रकाश (as in text) — [c]) K5 Ñ1 D1 5 7 8 विंद्याद्, M8 विद्या, Ck l n r ś u विद्याद् (as in text) — [d]) Ś1 D1 सत्त्वमात्मन॰, G2 सत्यमित्युत, Cl n r ś u सत्त्वमित्युत (as in text)

12 [a]) K8 D2 M1 4 लोभ, Cā k l n r ś u लोभ॰ (as in text) — [b]) Ś1 कर्मणो मनम॰ स्पृहा, Ś3 4 (marg) 5 Ck कर्मणामशमश्च तृट्, Cn r ś u as in text Cl cites कर्मणाम् — [d]) D6 T2 प्रवृद्धे, Cn r ś u विवृद्धे (as in text) Ś4 (sup lin as in text) K6 कुरुनदन, Cn ś u भरतर्षभ (as in text)

13 K2 reads 13 twice Ś4 D7 read 13 on marg — [a]) K1 अप्रकाशोप्रविप्रश्च (sic), Da1 अप्रकाश प्रवृत्तिश्च; D8 अप्रकाशाप्रवृ॰ Cā k n r ś u as in text — [b]) K3 मोहम् (sic) — [c]) G2 (also as in text) जायति, Ck r ś u जायन्ते (as in text) — [d]) D1 8 प्रवृद्धे, Ck r ś u विवृद्धे (as in text) K2 (first time) G3 भरतर्षभ, Cś u कुरुनन्दन (as in text)

14 [a]) Ś3 4 (sup lin) 5 6 Cg k u विवृद्धे, D2 प्रवृत्ते, Cl r ś प्रवृद्धे (as in text) — [b]) Ñ1 Da1 Dn1 (before corr) D6 यादि, Ck l r ś u याति (as in text) — [c]) Ś4 5 Ko Dn1 D6 तदोत्तमविदाँल्लोकान्, Da1 तद्योत्तमविदा लोकान्, G2 ततोत्तमविदा लोकान्, Cā k l n r ś u v as in text — [d]) Da1 नमलान्, D1 निर्मलान्, M1 8 अचलान्, Ck n r ś u अमलान् (as in text)

15 [b]) Ś6 जायते कर्मसगिषु (by transp), D6 G2 कर्मसंगीषु जायते, T2 Cā कर्मसगेषु जा॰, M8 5 कर्मसंधिषु जा॰, Ck l n r ś u as in text — [c]) Ś1 (m as in text) तदा तमसि लीने तु, K6 तथा तमसि लीनास्तु, G2 तथा प्रलीने तमसि, Ck r ś u as in text — [d]) G2 मूढा, Cā k l n r ś u मूढ (as in text)

16 D5 om 16 — [a]) K1 Da1 कर्मणा, Cā k l r ś u कर्मण (as in text) — [b]) Ś1 transp सात्त्विक and निर्मल — [c]) T2 पर, Cā k l m n r ś u फलं (as in text)

17 [b]) Ś1 (m as in text) मोह, Cl r ś u लोभ (as in text) — [cd]) Ś1 जायेता तमसो, Ś3–6 K6 Ñ1 जायेते तमसो, Ko 1 Da1 तमसौ जायेते, G1 तपसो जायेते, Cr ś u तमसो भवतो (as in text) Cl cites तमस॰ — After 17, Ś1 reads 20 for the first time, *repeating* it in its proper place

18 = (var) B 14 39 10 — [a]) K6 सत्त्वेन; Cr ś u सत्त्वस्था (as in text) — [c]) Ś3 Ko 1 3 5 6 Da1 D1–3 5 6 8 T2 G2 3 Cl ॰वृत्तिस्था, Cn r ś u ॰वृत्तस्था (as in text)

19 Ś6 transp 19 and 20 — [b]) K2 दृष्ट्वा, Cā l n r ś u v द्रष्टा (as in text) Ko न पश्यति (sic) — [d]) M2 सोपि, Cā l n r ś सोऽधि (as in text)

20 Ś1 reads (for the first time) 20 after 17 Ś6 transp 19 and 20 — [b]) Ś6 Ko 1 देहे, Cg k r ś u देही (as in text) — [c]) = B 12 215 2[a] (var) 3 200 33[a] cf Gītā 13 8[c] — [d]) Ś5 G2 ॰क्षोमृत्युम्; Cl n r ś u ॰क्षोऽमृतम् (as in text)

जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २०

अर्जुन उवाच ।

कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥ २१

श्रीभगवानुवाच ।

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२
उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥ २३
समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४
मानावमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ २५
मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥ २६
ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७

इति श्रीमहाभारते भीष्मपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

21 [a]) T2 त्रिगुणानेतान्, Ck l n r ś u त्रीन्गुणानेतान् (as in text)

22 After the ref, Ko reads 6 37 1–2, *repeating* them in their proper place — [b]) T2 मोह, Ck l n r ś u मोहम् (as in text) — [c]) Dn1 सनिवृत्तानि, Ck l n r ś u v संप्र° (as in text) — [d]) Ś3 transp न and निवृत्तानि

23 [a]) Cf Gītā 9 9[c] — [c]) Ñ1 D2 4 7 M1 3 5 Cu इत्येव, Cā k l n r ś इत्येव (as in text) — [d]) Ś3–6 K6 Cā g यो ह्यतिष्ठति, G2 नोनुतिष्ठति; Cśp up योनुतिष्ठति, Ck l n ś r u योऽवतिष्ठति (as in text)

24 = (var) B 12 236 38 — [a]) Cf B 12 297 36[c] Ś3 4 (*sup lin*) 5 6 K6 Ck समदुःखसुख (Ś3 K6 °ख°) स्वस्थ°, K3 Da1 D3 G2 समदुःख(Da1 °ख°)सुखस्वस्थ°, Cl m n r ś u as in text — [b]) = Gītā 6 8[d] 3 247 42[b] Cf B 12 192 3 (line 4), 262 12[d], 326 49[d] — [c]) Cf 3 297 64[a] — [d]) = 1 110 9[b] B 9 50 3[b] B 12 9 14[b]

25 [a]) K1–3 5 Ñ1 B D (Da2 om) M2 4 5 Cl n ś u मानापमानयोस्, Cā r मानाव° (as in text) — [c]) = Gītā 12 16[c] B 12 329 14[a] Ś1 3–6 K6 Cā g सर्वारंभफलत्यागी, K1 °परित्यागे, Cl r ś u as in text

26 [b]) Ñ1 सेव्यते (sic) — [c]) Ś6 °त्यैनान्, D2 3 G2 °त्येतान्, M5 °त्यैता, Ck l n r ś u °त्यैतान् (as in text) — [d]) Gītā 18 53[d] B 12 160 25[d], 215 20[d], 251 7[d] B 13 141 31[d], 142 33[d], 143 57[d] B 14 35 18[d], 42 51[d], 47 8[d] B3 कल्प्यते, Cā k l n r ś u v कल्पते (as in text)

Colophon om in Ś1–6 — *Sub-parvan* Ś1 Ko 2 3 5 Ñ1 B Da1 Dn D1 2 4–6 8 T G2 4 M2 4 (some MSS with the prefix श्री or श्रीमद्) भगवद्गीतासु उपनिषत्सु, K6 D3 7 Cv श्रीभगवद्गीतासु (K6 °या); G1 गीतायां Ko Ñ1 Da1 Dn D1 5 6 cont ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे, K6 श्रीकृष्णार्जुनसंवादे, T G4 परब्रह्मविद्याया योगशास्त्रे (T2 om योग°) श्रीकृष्णार्जुनसवादे, G2 परब्रह्मविद्याया परमहस्या श्रीयोगशास्त्रनिर्णये श्रीकृष्णार्जुनसवादे — *Adhy name* Ś1 गुणविमर्दनं, Ko गुणत्रयनिर्देश°, K2 B2 D4 T G1 2 Cś गुणत्रयविभागयोग°, K5 त्रिगुणविवेक°, K6 सत्त्वरजस्तमोगुणमयजगद्वर्णनपूर्वक गुणातीतस्थितिप्राप्तिसाधनज्ञाननिदर्शन (?), Ñ1 D7 गुणातीतयोग°, B4 ज्ञानविज्ञानयोग°, Dn D6 8 प्रकृतिगुणभेद°, D1 प्रकृतिपुरुषगुणभेद°, D5 Cv गुणत्रयविचार (Cv °भाग), T1 G4 गुणत्रयगुणातीतलक्षणविभागयोग° — *Adhy no* (figures, words or both) D5 M2 37, T G 36 (as in text), M4 38 — *Bhagavadgītā adhy no* (figures, words or both) Ś1 Ko–3 5 6 Ñ1 B Da1 Dn D1–4 6–8 G2 3 M1 3 5 Cv 14 — *Śloka no* K1 3 5 Da1 Dn D1 5 6 G2 27

# ३७

श्रीभगवानुवाच ।

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १
अधश्चोर्ध्वं प्रसृतास्तस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसंततानि
कर्मानुबन्धीनि मनुष्यलोके ॥ २
न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च संप्रतिष्ठा ।
अश्वत्थमेनं सुविरूढमूल-
मसङ्गशस्त्रेण दृढेन छित्त्वा ॥ ३
ततः पदं तत्परिमार्गितव्यं
यस्मिन्गता न निवर्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४
निर्मानमोहा जितसङ्गदोषा
अध्यात्मनित्या विनिवृत्तकामाः ।
द्वंद्वैर्विमुक्ताः सुखदुःखसंज्ञै-
र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५
न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६
ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।

C 6 1390
B 6 39 8
K 6 39 8

## 37

☞ K4 Da2 om this adhy (cf note at the beginning of adhy 23)

1 M1 om the ref Ko reads st 1–2 (for the first time) after the ref of 6 36 22 With 1[ab], cf. Kathopaniṣad 2 3 1[ab] — [a]) Ñ2 °शाखाम्, Cv °शाखा, Cā k l m. n r ś u °शाखम् (as in text) — [c]) Ś1 तस्य, Cā g k l n. r ś u v यस्य (as in text) — [d]) = B 14 51 26[d] Maitryupaniṣad 6 15 (stanza 1[d])

2 [a]) Cf. Muṇḍakopaniṣad 2 2 11[c] D4 S Ck n °श्चोर्ध्वं च, Cā l m n r ś u. v °श्चोर्ध्वं (as in text) Ś3 4 (sup lin) 5 K6 Cu यस्य; Cā l m n r ś तस्य (as in text) — [d]) K2 कर्मानुबधेन, Cā k. l m n r ś u v °बन्धीनि (as in text)

3 [a]) B1 तयोपपद्यते, D7 G5 M2 ततोपलभ्यते, Cā. l m r ś u तथोप° (as in text) — [b]) M3 सप्रतिष्ठिता, Cā k l n ś u संप्रतिष्ठा (as in text) — [c]) Ś1 प्रविरूढ°, Ś3 स्वविरूढ°, Cā k. l n r ś u सुविरूढ° (as in text) — [d]) Ś1 3–6 K6 D3 Cā k शितेन, Cr n ś u दृढेन (as in text) M1 (inf lin as in text) 3–5 हित्वा, Cā g k l m n r ś u छित्त्वा (as in text)

4 [a]) Ś1 4 6 K6 D8 Cā पर, Ck n r ś u पद (as in text) B2 यत्, Cā n r ś u तत् (as in text) Ś4 K6 पद मा°, Cv परमा°, Cā k. l n r ś u परिमा° (as in text) — [b]) Ś1 3–6 K6 Cā k यस्मिन्गतो (K6 °ते) न निवर्तेत भूय°, Cl n r ś u as in text — Ko om 4[cd] — [cd]) Ś3–5 D3 M4 Ck r प्रपद्येद्, Clp त प्रपद्य, Cā l m n ś u प्रपद्ये (as in text) ❀ Cr प्रपद्य इयत इति वा पाठः । ❀

5 [a]) Ś1 5 Ñ1 D6 7 Ck निर्माण°, Cl. m. n r ś u निर्मान° (as in text) — [b]) Ś4 (sup lin) D8 (before corr) G1 3 अध्यात्मविद्या, K3 °योगा, K6 °निष्ठा, B1 °चित्ता, Cā k l n. r ś u °नित्या (as in text) Da1 विनिवर्त°, Cā k l n r ś u विनिवृत्त° (as in text)

6 [a]) Ś1 यद्, Cg k l m n r ś तद् (as in text) — [b]) D5 न शशी न च पावक°, Cn r ś u as in text — 6[cd] = (var) Gītā 8 21[cd] — [c]) D8 निवर्तेत, Ck l n r ś u निवर्तन्ते (as in text).

7 [c]) = B 13 54 34[c]

गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८
श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९
उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १०
यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११
यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२
गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४
सर्वस्य चाहं हृदि संनिविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ॥ १५
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८
यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।

---

8 b) Ś6 °त्क्रमतेश्वर°, K0 °त्क्रमतीश्वर°, Cg k l m r ś u v °त्क्रामतीश्वर° (as in text) — c) K6 गृहीत्वा तानि, Ck l m n r ś u v °त्वैतानि (as in text) — d) D2 गंधम्, Cg k l m n r ś u v गन्धान् (as in text)

9 a) K8 transp श्रोत्र and चक्षु° D8 स्पर्शनश्च, Cr ś u °नं च (as in text) — b) K0 रसना, Cś u रसन (as in text) — c) K2 मनश्चैव; M1 मनश्चैन; Cn r ś u °श्चाय (as in text)

10 a) Ś1 3 5 K6 Cg k तिष्ठतमुत्क्रामत वा, Ś4 (marg, orig as in text being deleted) 6 Cā तिष्ठतमुत्क्रमत वा, K2 उत्क्रामंत स्थित चापि, Cl m n r ś u as in text — b) K0 1 च, Cg l n r ś u v वा (as in text) — d) Cf 3 181 31d D8 G1 2 (before corr) M1 3 5 °चक्षुषा, Cā k l n r ś u °चक्षुष° (as in text)

11 G3 om (hapl) 11ab Ś1 transp 11ab and 11cd — a) Ś1 चैव, D8 M3 5 चैवं, Ck [s]प्येन, Cā n r ś u चैन (as in text) — c) K2 यततोपि कृता°, G3 यततोप्यकृता°, M1 3 5 यततोन्यकृता°, Cā g k l m n r ś u as in text — d) D3 6 नैव, Ck l n r ś u नैन (as in text)

12 a) B2 ज्योतिर्; Cā k l n r ś u तेजो (as in text) — b) G2 भाव°, Cn r ś u भास° (as in text) — c) K1 2 यश्चन्द्र°, Ck n r ś u यच्चन्द्र° (as in text)

13 a) K6 माम्, Cā g k l m n r ś u v गाम् (as in text) D6 योगमाविश्य (orig गमाविश्य च) भूतानि — c) K0 T2 G2 चोषधी°, D2 वौषधी°, Cā g l n r ś u चौषधी° (as in text)

14 a) K6 विश्वानरो, Cā g k l n r ś u वैश्वानरो (as in text) — b) Ś3–6 K0 D8 Cā आस्थित°, Cn r ś u आश्रित° (as in text) Ck cites आविष्ट° — c) M2 प्राणापान॰ समा°, Cā प्राणापानसखो भूत्वा Ck n r ś u as in text

15 b) K1 मत्तस्मृतिज्ञानम् (sic), Da1 M1 3 4 मत्त° स्मृतिज्ञानम्, G2 3 मत्तस्मृतिर्ज्ञानम्, Cā k l n r s u as in text D6 अमोहन, Cā g k l n r ś u अपो° (as in text) — d) Ś1 (marg) 5 K6 D3 वेदकृदेव, Cā g k l n r ś वेदविदेव (as in text)

16 b) = B 12 280 20b — d) K1 2 एव च; Cā k l r ś u v उच्यते (as in text)

17 b) = B 12 187 23d. — d) Ś5 6 Ck [अ]व्ययम्; Cā l n r ś u [अ]व्यय (as in text)

18 a) M2 तस्मात्, Ck l n r r ś u v यस्मात् (as in text) Ś4 5 Ck अक्षरस्यापि; Cā g l n ś u अक्षरादपि (as in text) — c) Ś6 D3 अतोस्मिन्; Cr ś अतोऽस्मि (as in text). Cl cites अत

स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९
इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥ २०

इति श्रीमहाभारते भीष्मपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

# ३८

श्रीभगवानुवाच ।

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ २
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति संपदं दैवीमभिजातस्य भारत ॥ ३
दम्भो दर्पोऽतिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४
दैवी संपद्विमोक्षाय निबन्धायासुरी मता । C 6 1407 B 6 40 5 K 6 40 5

19 [d]) = Gītā 18 62[b]

20 [a]) D6 गुह्य°, Cā g k l n r ś u गुह्य° (as in text) — [b]) Ś1 4 (m as in text) K6 मया प्रोक्तं तवानघ, Cā l n r ś u as in text — [d]) M2 °कृत्य च, Cā g k l n r ś u v °कृत्यश्च (as in text)

Colophon om in Ś1-6 — *Sub-parvan* Ś1 K0 3 5 Ñ1 B Dn D2 4-6 8 T G2-4 M2 4 (some MSS with the prefix श्री or श्रीमद्) भगवद्गीतासु उपनिषत्सु, K2 गीतासु, K6 Da1 D3 7 श्रीभगवद्गीतायां (D3 7 °सु), G1 गीतायां; Cv भगवद्गीतासु Ś1 K6 D1 cont श्रीकृष्णार्जुनसंवादे, K0 5 Ñ1 Dn D5 6 T1 G4 ब्रह्म (T1 G4 परब्रह्म)विद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे, T2 G2 परब्रह्मविद्यायां परमहंस्यां योगशास्त्रे (G2 श्रीयोगशास्त्रनिर्णये) श्रीकृष्णार्जुनसंवादे — *Adhy name* Ś1 अक्षरनिर्देश°; K0 3 5 B3 Dn D1 4-6 8 T G4 Cs पुरुषोत्तमयोग°, K6 गुह्यशास्त्रविवर्णनपूर्वकं पुरुषोत्तमयोगात्मक. (?), Ñ1 पुरुषोत्तमप्रकृतियोग, B1 बुद्धियोग, G1 संसारविषवृक्षच्छेदकुठारयोग, G2 संसारवृक्षच्छेदनयोग° — *Adhy no* (figures, words or both) D5 M2 38, T G 37 (as in text), M4 39 — *Bhagavadgītā adhy* no (figures, words or both) Ś1 K0-3 5 6 Ñ1 B Da1 Dn D1-4 6-8 G2 3 M1 3 5 Cv 15 — *Śloka no* K1 3 5 Da1 Dn D5 6 G2 20

## 38

☞ K4 Da2 om this adhy (cf note at the beginning of adhy 23)

1 [a]) D2 सत्त्वसंसिद्धिर्, Cā k n r ś u v °संशुद्धिर् (as in text) — [b]) Dn1 G2 °स्थित° (sic) — [d]) Cf 3 197 38[b]

2 [a]) = B 12 36 10[c], 65 20[a], 191 15[c] B 13 22 19[a], 162 23[a] — [b]) Ś3-6 Cā k त्यागोऽसक्तिर्, Cn r ś u त्यागः शान्तिर् (as in text) — [c]) Cf B 14 38 6[d] Ś3 4 6 Ck [अ]लौल्यं च, Ś5 K0 Dn2 D2 (before corr) 4 6 T1 G1 3 4 M2 4 5 Crp [अ]लोलुत्वं, K6 [अ]लौल्यं च; D2 (after corr) 8 T2 M1 3 [अ]लोलत्वं, Cm n r ś u [अ]लोलुप्त्वं (as in text) — [d]) = B 12 21 12[b], 160 15[d], 313 18[d] D6 G1 M5 आर्जवं, Ck n r ś u मार्दवं (as in text)

3 [a]) Ś3-6 K6 Cā k तुष्टिर्, Cn r ś u शौचम् (as in text) — [b]) Cf 3 198 87[c] Ś4 (sup lin as in text) 6 K0-3 6 Ñ1 Ck नाभिमानि(K3 Ñ1 °न)ता, Ś5 नातिमानता, Cn r ś u नातिमानिता (as in text) — [d]) B1 4 पांडव, Cn r ś u भारत (as in text)

4 [a]) Ś1 3-6 K0-3 6 Ñ1 B D (except D3 8, Da2 om) M4 Ck l n u दर्पोऽभिमानश्च, Cr ś दर्पोऽति° (as in text) — [b]) D6 पारुष्यं; Ck n r ś u

मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥ ५
द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६
प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ८
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९
काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद्गृहीत्वासद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ॥ १०
चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् ॥ १२
इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३
असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ १४
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५
अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।

---

पारुष्यम् ( as in text )

5 [d]) Ś6 M2 3 5 भारत, Cl r ś u पाण्डव ( as in text )

6 [a]) K2 °सर्घौ, Cā k l n r ś u °सर्गौ ( as in text ) M1 भूतेस्मिन्, Cl r ś u लोकेऽस्मिन् ( as in text ) Ś1 दैवी, Ck l r ś u दैव ( as in text ) — [c]) Ś3–5 Dn1 ( *sup lin* as in text ) D3 6 G4 विस्तरत°, Cl r ś u विस्तरश ( as in text )

7 [a]) = Gītā 18 30[a] — [c]) Ś1 नाशौच वापि, Ck l r ś u न शौच नापि ( as in text ) K1 D6 वाचारो, Ck l r ś u चाचारो ( as in text )

8 [a]) Ś4 K6 D1 Ck च, Cś ते ( as in text ) — [d]) Ś3 4 ( marg ) 5 K1 6 Ck अकिंचित्कमहेतुकम्, Ś4 ( orig ) K5 Da1 D3 G2 3 M1 4 Cr किमन्यत्कामहेतुकम्, Ś6 K2 अकिंचित्कामहै( K2 °है )तुकम्; Cl n ś u v as in text Ck cites अकिंचित्क

9 [a]) Ś6 बुद्धिम्, Ck l n r ś u दृष्टिम् ( as in text ) — K5 om 9[cd] — [c]) Ś6 प्रवर्तति, Ck प्रवर्तते, Cl r ś u प्रभवन्ति ( as in text ) — [d]) Ś3 4 ( marg, but deleted ) 5 6 B1 T2 G1 3 M1 3–5 Ck [ऽ]शुभा°, Cn ś u ऽहिता° ( as in text )

10 M2 om ( hapl ) 10[a]–11[b] — [b]) Ś1 दम्भमानमदान्वित°, Ś3–6 Ck दम्भलोभमदान्वि( Ś6 °श्रि )ता°, Cl r ś u as in text — [c]) Ś3–6 K6 Cā k असद्गृहाश्रिता° क्रूरा, Cl n r ś u as in text — [d]) Ś1 प्रभवतः शुचिव्रता, Ś3–6 K6 Ck प्रचरत्यशुचि°; Cl n r ś u as in text

11 M2 om 11[ab] ( cf v l 10 ) — [a]) Ś1 अपरिमेये, K1 अपरिमीयां, K2 Da1 अपरमेया, Ck r ś u अपरिमेया ( as in text ) Cu ता, Cr ś च ( as in text ) — [b]) D2 G3 M ( M2 om ) अपाश्रिता; Ck r ś u उपा° ( as in text ) — Da1 om ( hapl ) 11[cd]

12 [c]) K1 M2 रोहते, D3 G3 ईहते, Cā n r ś u ईहन्ते ( as in text ) Ś3–6 कामभोगार्थान्, K6 काम लोभार्थम्, Cl r ś u °भोगार्थम् ( as in text ) — [d]) Ś1 K3 °सचय, K1 G2 °सजयान्, Cn r ś u °सचयान् ( as in text )

13 [b]) K0 2 6 Ñ1 ( before corr ) B Dn1 ( marg ) n3 D4 m 5 7 T1 G1 2 4 M1 Cr इमं, Ck ś u इदं ( as in text ) Ś6 मनोगत, Ck r ś u मनोरथं ( as in text )

14 [c]) K0 6 योगी, K1 भागी, Ck n r ś u भोगी ( as in text ) — [d]) D6 बलवत्, Ck n ś u बलवान् ( as in text )

15 [a]) K1 अद्याभि; G3 आढ्योपि, Cā k n r ś u आढ्योऽभि- ( as in text ) — [b]) T2 [अ]पि वा; Ck r ś u मया ( as in text ) — [c]) Ś1 3 6 K2 3 Dn2 D2 5 G1 3 M5 Ck मो( Ś1 म )दिष्ये, Cl r ś u मोदिष्य ( as in text ) — [d]) K1 इति ज्ञान, Cl n ś u इत्यज्ञान- ( as in text )

प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६
आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७
अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८
तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २०
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१
एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२
यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४

C 6 1426
B 6 40 24
K 6 40 24

इति श्रीमहाभारते भीष्मपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

---

16 a) Ś3–6 D2 अनेकचित्ता वि( D2 °त्रस )भ्रांता, Ck l n r ś u as in text — b) Ś3–6 K6 मोहस्यैव वश गता°, T2 मोहजालविमोहिता°, Cn r ś u as in text — c) D5 कामलोभेषु, Cr ś °भोगेषु ( as in text ) — d) Ś3–6 K6 B3 4 D2 8 Cā g निरये, Cl r ś u नरके ( as in text ) K1 [ऽ]शुभौ, Cg l n r ś u ऽशुचौ ( as in text )

17 b) D4 °समन्विता°, Ck n r ś u °मदान्विता ( as in text ) — c) D1 कामयज्ञैस्, D2 मानयज्ञैस्, Cg l n r ś u नाम° ( as in text ) ❀ Cā यजन्ते नाम । नामेत्यलीकार्थमव्ययम् । ❀ — After 17, M4 reads 6 39 5–6

18 With 18ab, cf Gītā 18 53ab — b) Da1 कामक्रोधे, Cn r ś u काम क्रोध ( as in text ) Ś6 समाश्रिता°, K1 च सस्थिता, Cn r ś u च सश्रिता ( as in text ) — c) K0 T2 ममात्मा परदेहेषु, Cā m n r ś u v as in text — d) K1 °भिसूर्यक ( sic ), G3 ह्यसूयका, M2 [ऽ]भ्यसूयया, Ck n r ś u ऽभ्यसूयका ( as in text )

19 cd) Ś1 8–5 K0–2 6 अशुभास्वासुरी( Ś1 °रे )ष्वेव, Ś5 अशुभामासुरी°, Cr ś u v अशुभानासुरी° ( as in text ) Ck cites अशुभासु, Cg l आसुरीषु

20 a) K8 4 Ñ1 आसुरी, Ck l n ś u आसुरीं ( as in text ) — c) G3 अप्राप्य च, M3 अप्राप्येव, Cl r ś u v अप्राप्यैव ( as in text ) — d) Da1 D8 याति ( sic )

21 G1 om ( hapl ) 21–22 — a) G2 8 M3 4 °स्यैतद्; Cg k r ś °स्येद ( as in text ) — b) D7 नाशकम्, Cr ś u नाशनम् ( as in text ) — c) K1 8 D8 G2 8 कामक्रोधस्, Ck l r ś u काम° क्रोधस् ( as in text ) — d) Ś1–6 त्यज; Cl r ś u त्यजेत् ( as in text )

22 G1 om 22 ( cf v l 21 ) — a) Ś1 K1 विमुक्ता, Ś3 Ck वियुक्त°, Cn ś u विमुक्त° ( as in text ) — d) = Gītā 6 45d ( q v ), 13 28d cf Gītā 9 32d K8 यांति ( sic )

23 K2 M4 om ( hapl ) 23 — b) B1 8 कामचारत; D2 6 °कातर°, D8 °कारक°, T2 °कारक, Cā k l n r ś u v °कारत ( as in text ) — d) B2 परमा, Ck l n r ś u न परा ( as in text )

24 b) Cf B 8 69 20b G8 कार्यं कार्ये°, Cā g k n r ś u कार्याकार्ये° ( as in text ) — c) Ś5 6 Ck कृत्वा; Cn r ś ज्ञात्वा ( as in text )

Colophon om in Ś1–6 — *Sub-parvan* Ś1 K0 6 Ñ1 B Da1 Dn D1–6 8 T1 G2–4 M2 4 ( some MSS with the prefix श्री- or श्रीमद् ) भगवद्गीतासु उपनिषत्सु; K2 3 6 D2 8 7 श्रीभगवद्गीतासु ( K6 °या ), T2 श्रीभगवद्गीतोपनिषत्सु, G1 गीतायां, Cv भगवद्गी-

# ३९

27
1
1

अर्जुन उवाच ।

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १

श्रीभगवानुवाच ।

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २
सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३
यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः ।
प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४
अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५
कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६
आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७
आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ८

---

तासु Ko Ñ1 Da1 Dn D4-6 cont ब्रह्मविद्याया योगशास्त्रे ( D4 *om* योग° ) श्रीकृष्णार्जुनसंवादे, K6 श्रीकृष्णार्जुनसवादे, T G4 परब्रह्मविद्याया योगशास्त्रे श्रीकृष्णार्जुनसंवादे, G2 परब्रह्मविद्याया परमहस्या श्रीयोगशास्त्रनिर्णये श्रीकृष्णार्जुनसवादे — *Adhy name* Ś1 damaged, Ko दैवासुरीसपद्विभाग°, K1 2 प्रकृतिविभागयोग ( K2 om योग ), K5 D6 8 दै( D8 दे )वासुरसपत्तियोग, K6 दैव्यासुरसपदैवासुरभूतसर्गवर्णनपूर्वकमासुरभावापन्नजतूना दशानिरूपण (?), Ñ1 दैवासुरसपद्विवेकयोग, B2 Dn2 D1 5 दे( Dn2 दै )वासुरसपद्विभाग ( B2 cont प्रविवेकदर्शन ), B4 Dn1 T G1 2 4 Cś दैवा( B4 दैत्या-, T G1 2 4 Cś देवा )सुरसपद्विभागयोग, Cv सपद्विभाग — *Adhy no* (figures, words or both) D5 M2 39, T G 38 (as in text), M4 40 — *Bhagavadgītā adhy no* (figures, words or both) Ś1 damaged, Ko-3 5 6 Ñ1 B Da1 Dn D1-4 6-8 G2 8 M1 3 5 Cv 16 — *Śloka no* K1 3 5 6 Da1 Dn D1 5 6 G2 24

## 39

☞ K4 Da2 om this adhy (cf note at the beginning of adhy 23)

1 [b]) = Gītā 9 23[b] Ś3-5 K6 Ck l वर्तते, Cu यजति, Cn r ś यजन्ते (as in text) — [d]) Ś1 D1 सत्त्व मोहो (sic)

2 With 2[cd], cf B 12 194 30[ab], 348 68[cd] — [d]) Ś3-5 K6 D8 Cā ता, G2 तान्, Cl n r ś u ता (as in text)

3 [a]) K8 सत्त्वस्य, Ck r ś u v सर्वस्य (as in text) — [b]) B1 देहिना, Cś u भारत (as in text) — 3[cd] = B 12 264 17[cd] — [d]) K1 2 G2 3 M3 4 य श्रद्ध°, Cm n r ś u यच्छ्रद्ध° (as in text)

4 [a]) Da1 सात्त्विकान् (sic) — [b]) D6 M3 5 राक्षसा°, Cā r ś u राजसा (as in text) — [c]) Ś3-5 K6 Ck भूतप्रेतपि( Ś5 °तान्प्रेतान्पि )शाचाश्च, B1 भूतान्प्रेतगणाश्चान्ये, Cr ś u as in text

5 M4 reads 5-6 after 6 38 17 — [b]) Ś3-5 D8 तपस्तप्य( Ś5 °प्स्य )ति ये जना, Ck l n r ś u as in text — [c]) Da1 दभोहकार° (sic)

6 For sequence in M4, cf v 1 5 — [a]) Ś3-5 Ko 1 3 5 Ñ1 B Da1 Dn1 D1 3 4 (before corr) 5-8 M2 3 5 Cg k l v कर्षयत°, Cm n r ś u कर्श° (as in text) — [b]) Ś3-5 K6 Cg k अचेतन ( Ś5 °ना ), M4 अचेतस, Cl n r ś u अचेतस (as in text)

7 [a]) D6 m °श्चापि, Cg l n r ś °स्त्वपि (as in text) — [d]) G2 इद, Cl r ś u इम (as in text)

8 [ab]) G3 °रोग्य (sic) S6 K2 D8 °विवर्धन°, Ck l n r ś u as in text Cm cites प्रीतिविवर्धना — [cd]) K1 रस्या स्निग्धा, Da1 Dn1 Cv रस्यास्निग्धा (sic), D2 7 G2 3 रस्यास्निग्धा, D8 तस्या स्निग्धा, Cl n r ś u रस्या स्निग्धा (as in text) Ś6 Cā रस्य स्निग्ध स्थिरो हृद्य आहार सात्विकप्रिय

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९
यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १०
अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११
अभिसंधाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२
विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३
देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६
श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७
सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८
मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९

C 6 1445
B 6 41 19
K 6 41 19

---

9 $^a$) K2 कट्वम्लवणात्युष्ण Da1 M2 कट्वाम्ललवणा त्युष्ण, M1 कट्वम्ललवणात्युष्ण; Cv h n r ś u as in text — $^b$) K6 रूक्षाभिमानिन, Cn r ś u as in text — $^c$) Da1 आहार, M2 आहारो Cr ś u आहारा (as in text) D2 राजसश्रेष्ठा (sic) — $^d$) G2 दुःख शोकमय, Cv h n r ś u as in text

11 $^a$) K6 °काङ्क्षिणा, Cv r ś u °काङ्क्षिभिर् (as in text) — $^b$) K6 न युज्यते, Cv n r ś u य इज्यते (as in text) — $^c$) M2 यष्टव्य, Cv n r ś u यष्टव्यम् (as in text) K1-2 इत्येव, Cv r ś u एवेति (as in text) D1 तत, Cv h n r ś u मन (as in text) — $^d$) M1 सात्त्विक, Cn r ś u सात्त्विकः (as in text)

12 $^a$) D अभिसंध्येय (sic) — $^b$) D दम्भोर्थम् (sic) K1-2 D1 चैव य, Cr ś u चैव यत् (as in text) — $^c$) Da1 इज्येत, Ch r ś u इज्यते (as in text) Ś2-3 K1 D2 (before corr) विद्धि त यज्ञ, T2 भारतश्रेष्ठ, Cś u भरतश्रेष्ठ (as in text) — $^d$) Ś2-3 K1 D2 (before corr) Ca h राजस च (D2 व) लमध्रुव (= 18$^d$), Cr ś u as in text

13 $^a$) K1 Cl असृष्टान्न, B1 असृष्टार्थं, M1 अनुष्टान, Cg n r ś u असृष्टान्न (as in text) Ca असृष्टान्न पाकादिसंस्कारहीनान्नम् । $^*$ — $^c$) Ś1 °विरजित, Ch r ś u °विरहित (as in text) Ś2 यज्ञ, Ch r ś u यज्ञ (as in text)

14 $^{cd}$) = B 12 217 17$^{ab}$

15 K4 om (hapl) 15 G2 transp 15 and 16 — $^c$) = B 12 60 9$^c$ Ś1 Ñ1 Da1 (by corr) °भ्यासन, Cr ś u °भ्यसन (as in text)

16 G2 transp 15 and 16 — $^a$) K1 3 D1 G1 2 M2 मन प्रसादसौम्यत्व, Ch n r ś u as in text — $^c$) Da1 °संशुद्धिर्, Cg h n r ś u °संशुद्धिर (as in text) — $^d$) Ś1 K1-3 5 Da1 Dn1 (before corr) D3 5 8 M1 मानस, G2 ज्ञान स, Ch n r ś u मानसम् (as in text)

17 $^a$) Ś3 Cg h परयोपेत, Cr ś u परया तप्त (as in text) — M2 om (hapl) 17$^b$–18$^a$ — $^b$) Ś2 transp तपस् and तत् K6 तपस्तु, Cr ś u तपस्तत् (as in text) — D3 om 17$^{cd}$ — $^c$) M3 मुक्तै, Ca h n r ś u युक्तै (as in text) — $^d$) K2 °रक्षते (sic)

18 M2 om 18$^a$ (cf v l 17) — $^c$) T2 यदिह, Ch r ś u तदिह (as in text)

19 $^a$) Ś2-3 K1 C1 h मूढग्रहेण, K6 व्यूढग्राहेण, Da1 गूढग्राहेण, G2 मूढाग्रहेण, Cn r ś u v मूढग्राहेण (as in text) — $^b$) K3 नरै, Ch r ś तप (as in text) — $^c$) K1 Ñ1 °स्योच्छादनार्थं, Cg h n r ś u °स्योत्सादनार्थं (as in text) Ś6 D8 Cr च, Cś u वा (as in text) — $^d$) = 22$^d$, Gītā 18 22$^d$, 39$^d$ Da1 तामस, Cg h r ś u तामसम् (as in text)

16 20 20

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २०
यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२
ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४
तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५
सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८

इति श्रीमहाभारते भीष्मपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

20 G3 om (hapl) 20–21 G1 om (hapl) $20^{b}$–$22^{a}$ — $^{c}$) B1 2 transp देशे and काले — $^{d}$) B3 D4 (m as in text) 8 विदु॰, Cr ś u स्मृतम् (as in text)

21 G1 8 om 21 (cf v l 20) K1 om $21^{c}$–$22^{d}$ — $^{c}$) M4 परिकुष्टः; Cā n r ś u v परिक्लिष्ट (as in text) — $^{d}$) Ś3–5 K6 तद्राजसमिति स्मृत, Ś6 Ko 2 8 Ñ1 Da1 D5 7 T G2 4 M2 तद्राजसमुदाहृत, Cr ś u as in text

22 K1 5 om 22 (for K1, cf v l 21), G1 om $22^{a}$ (cf v l 20) — $^{b}$) T1 ॰भ्य प्र, Ck n r ś u ॰भ्यश्च (as in text) — $^{c}$) = B 13 135 $17^{a}$ Ś1 D8 अविज्ञात, M1 8 6 अवज्ञातु, Ck n r ś u अवज्ञात (as in text) — $^{d}$) = $19^{d}$, Gitā 18 $22^{d}$, $39^{d}$ B1 तद्दान तामस स्मृत, Da1 तत्तामस उदाहृत, Cś u as in text Ck cites तत्तामस

23 $^{a}$) K2 निर्दिष्टो, Ck l n r ś u v निर्देशो (as in text) — $^{b}$) Ś1 Dn1 (before corr) ब्राह्मणस्, Cā g k l n r ś u v ब्रह्मणस् (as in text) — $^{c}$) Ś1–6 Ko 1 6 Ck l ब्रह्मणा, Cl m n r ś u v ब्राह्मणास् (as in text)

24 $^{b}$) Cf Gitā 18 $3^{c}$, $5^{a}$ — K2 om (hapl) $24^{c}$–$25^{b}$ — $^{d}$) Cf B 13 22 $7^{b}$

25 K2 om $25^{ab}$ (cf v l 24) — $^{b}$) Da1 यज्ञस्, D8 यज्ञास्, Cā k l n r ś u यज्ञ (as in text) — $^{c}$) K2 दान (sic) — $^{d}$) K5 क्रियतां, Cā k l n r ś u क्रियन्ते (as in text)

26 In Da1, the portion from 26 up to 6 40 2 is lost on a missing fol B1 om (hapl) $26^{cd}$ — $^{a}$) Ś1 M2 प्रशस्त, Ck l n r ś u प्रशस्ते (as in text) — $^{d}$) K2 सछद॰ (sic), G8 स शब्द॰, Ck n r ś u सच्छब्द॰ (as in text) Ś3–5 K6 Ck पार्थ गीयते, Ś6 परिपठ्यते, Ñ1 पार्थ उच्यते, Cl n r ś पार्थ युज्यते (as in text)

27 Da1 missing (cf v l 26) — $^{a}$) D6 यत्ते, Ck l n r ś u यज्ञे (as in text) K1 दान, Cl r ś u दाने (as in text) — $^{b}$) K1 चोद्यते, G3 चोद्यते, Ck l n r ś u चोच्यते (as in text) — $^{d}$) K1 ॰वाभिदधते, Ck l n r ś u ॰वाभिधीयते (as in text)

28 Da1 missing (cf. v l. 26) D6 reads $28^{ab}$ in marg *sec m* — $^{a}$) G2 दान, Ck n ś u दत्त (as in text) — $^{c}$) T2 असती॰ (sic) — $^{d}$) G8 चैतत, Ck l n r ś u च तत् (as in text)

Colophon om in Ś1–6 Da1 missing — *Sub-parvan* Ś1 Ko 2 3 5 Ñ1 B Dn D2–8 T1 G1–4 M2 4 (some MSS with the prefix श्री or श्रीमद्) भगवद्गीतासु उपनिषत्सु (K2 3 D2 8 om उप॰),

# ४०

अर्जुन उवाच ।

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।
त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १

श्रीभगवानुवाच ।

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २
त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३
निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥ ४
यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५
एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६
नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७
दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८

C 6 1462
B 6 42 8
K 6 42 5

K₄ श्रीभगवद्गीतायां; G₁ गीतायां, C₇ गीतासु K₀ Ñ₁ D₇ D₁₋₇ cont ब्रह्मविद्यायां योगशास्त्रे (Dn₁ om योगशास्त्रे) श्रीकृष्णार्जुनसंवादे; K₂ श्रीकृष्णार्जुनसंवादे, G₄ परमब्रह्मविद्यायां योगशास्त्रनिर्णये श्रीकृष्णार्जुनसंवादे — *Adhy name* K₀ श्रद्धागुणनिर्देश, K₁ ₂ Dn G₁ श्रद्धाविवेकयोग, K श्रद्धागुणभेद, K₄ श्रद्धात्रयपुरुषवर्णनपूर्वकं त्रिगुणात्मकतपआहारयज्ञत्रिविधतपोदानफलनिर्देशोंतत्सदर्थयोगवर्णन (?), Ñ₁ गुणकर्मश्रद्धाविवेकयोग, B₄ श्रद्धात्रिविधयोग, B₁ गुणयोग, D₁ संवादे श्रद्धात्रययोग, D₄ G₄ C₅ श्रद्धात्रयविभागयोग, D₂ सिद्धांतयोग, D₅ प्रकृतित्रिगुणत्वयोग, D₂ कर्मगुणविभागयोग, T₁ G₁ शास्त्रयोग, T₂ श्रद्धात्रिविभागयोग, C₇ गुणनिर्देशयोग — *Adhy no* (figures, words or both) D M₂ 40, T₁ G 39 (as in text) M₄ 41 — *Bhagavadgītā adhy no* (figures, words or both) Ś₁ K₀₋₂ ₄ ₆ Ñ₁ B Dn D₁₋₄ ₆₋₈ T₂ G₄ ₆ M₁ ₂ C₅ 17 — *Śloka no* K₁ ₂ Dn D₁ G₂ 28

## 40

☞ K₄ Da₂ om this adhy (cf note at the beginning of adhy 23)

1 Da₁ missing (cf v l 6 39 26) — ᵃ) Cf Gītā 5 6ᵃ M₂ सन्यासस्तु, Cg k l m n r ś u सन्यासस्य (as in text) — ᵇ) = B 12 124 59ᵈ cf 2 11 51ᵈ — ᵈ) Ś₁ K₁₋₃ K₄ ₆ Ñ₁ B M पृथक्केशिनिसूदन, T₂ पृथक्कर्मनिषूदन, Cl m n ś u as in text Ck cites पृथक्

2 Da₁ missing (cf v l 1) — ᵃ) Ś Ck त्यागं, Cl m r ś u v न्यासं (as in text) — ᶜ) = Gītā 12 11ᶜ

3 ᵃ) Ś₁ त्याग, Ca g k l m n r ś u v त्याज्य (as in text) T₂ मोक्षवद्, Ca g k l m n r ś u दोष° (as in text) G₁ [ए]ते, Ca l m n r ś u v [ए]के (as in text) — ᵇ) D₆ विचक्षण°, Ck l m n r ś u मनीषिण° (as in text) — ᶜ) = 5ᵃ cf Gītā 17 24ᶜ — T₁ om (hapl) 3ᵈ–5ᵃ

4 T₁ om 4 (cf v l 3) ᵃ) Ś₂ निश्चय, Cg k l m n r ś u निश्चय (as in text) — ᵇ) D₂ T₂ भारतसत्तम, Cś u भरत° (as in text) — ᵈ) Ś₁ ₂ T₂ Ck संप्रदर्शित, B₁ Cn परिकीर्तित°, Cl r ś u संप्रकीर्तित (as in text)

5 T₁ om 5ᵃ (cf v l 3) — ᵃ) = 3ᶜ, cf Gītā 17 24ᶜ K₄ D D₃ Cl u यज्ञो दान, Cm n r ś यज्ञदान° (as in text) — ᶜ) Cf 3 198 57ᵃ 5 130 22ᵃ

6 ᵃ) = (var) B 12 34 16ᵃ Ś₂₋₆ K₂ ₆ D₆ T₂ G₂ M₄ Ck च, Cl n r ś तु (as in text) — ᵇ) Cf 9ᶜ Ś₁ ₆ B₂ त्यक्त्वा सङ्ग (by transp)

7 ᵃ) Ś₁₋₃ K₀ Ck च, Cg l n r ś u तु (as in text) — ᶜ) M₂ मोहार्तस्य, Ck l n r ś u मोहात्तस्य (as in text) — ᵈ) Ś₁ ₆ परिकीर्त्यते, Cl n r ś u °कीर्तित (as in text)

8 ᵃ) Ś₂₋₃ K₀ Ck य कर्म, Da₁ यत्कार्यं, Cn r ś u यत्कर्म (as in text) — ᵇ) Da₁ कार्यं, M₂

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९
न द्वेष्टयकुशलं कर्म कुशले नानुषज्जते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १०
न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११
अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिना प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२
पञ्चैतानि महाबाहो कारणानि निबोध मे ।
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३
अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥ १४
शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५
तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते ॥ १७
ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८

---

काल, Cn r ś u काय (as in text) — c) M2 राजसात्, Cg k l n r s u राजस (as in text) — d) Ś0 तत्र, Da1 त्याग, Cg k l n r ś u त्याग (as in text) T2 भवेत्, Cl n r ś u लभेत (as in text)

9 b) K5 Ñ1 D2 कुरुते, Ck l n r ś u क्रियते (as in text) — c) Cf 6b — d) D2 त्यागी, Ck l n r ś u त्याग॰ (as in text) B1 D7 स्मृत॰, Cl n r ś u मत॰ (as in text)

10 a) K1 2 कुशल, Cā l n r ś u [अ]कुशल (as in text) — b) Ś1 0 G1 2 M ॰पज्यते, Ś3 Ck ॰पज्जति, B1-3 ॰मज्जते, Cl n r ś u ॰पज्जते (as in text) — c) Ś1 सत्य॰, Ck l n r ś u सत्त्व॰ (as in text)

11 a) K2 3 D2 3 5 T2 देहभृता, M3 5 ॰कृता, Cā l m n r ś u ॰भृता (as in text) — c) Da1 यत्तु, Cā l n r s u यस्तु (as in text)

12 a) K3 . इष्टमिश्र, Cā k l r ś u इष्ट मिश्र (as in text) — c) K3 भवत्यसगिना, D2 भवत्य त्यागिना, Cā g l n r ś u भवत्य॰ (as in text)

13 a) Ś3-6 K1 5 6 Ñ1 B D2 3 5 7 M Ck पञ्चे मानि, Cl r ś u पञ्चैतानि (as in text) D6 महा भाग, Cn ś u महाबाहो (as in text)

14 = (var ) B 12 347 89 — b) K2 D6 Cv कारण, Cā g k l m n r ś u करण (as in text) — c) Ś3 6 D1 T1 G2 4 विविधा च, Cā l n r ś u विविधाश्च (as in text) — d) Ś3 5 6 K6 Ck u एव, Cl r ś चैव (as in text)

15 a) Ś3-6 K6 हि, Ck r s u यत् (as in text). — b) Ś3-6 K6 Ck यत्कर्मारभते, Cr ś u कर्म प्रारभते (as in text) Ś3-6 K6 T1 G4 [ऽ]र्जुन, Cś u नर॰ (as in text) K6 कर्म प्रारभ्यते नरैः — c) Ś4-6 K6 1 3 M1 3 5 न्याय (sic) K1 वापि परीत च (sic) — d) K6 पच ते, Cś u पञ्चैते (as in text)

16 a) D3 तत्रैव, Cā k l m n r ś u v तत्रैव (as in text) K1 Cn सत्यकर्तार, Cā k l r ś u सति कर्तारम् (as in text) — b) K1 2 त्वय॰ (sic), M3 5 तु यत्, Cā k l n r s तु य (as in text) — c) Ñ1 (before corr ) पश्यतेकृत॰, Ck l n r ś u पश्यत्यकृत॰ (as in text) — d) Dn1 (before corr ) M5 सपश्यति, Cā k l n r ś u स प॰ (as in text)

17 a) K1 नाहकृते, Cā k l n r s u नाहकृतो (as in text) — b) Ś6 यस्य बुद्धिर् (by transp ) — c) K5 कृत्वा, D2 T2 हित्वा, Cā k l n r ś u हत्वा (as in text) — d) Ś6 न निहति न बध्यते, Ck l n r ś u as in text

18 b) Ś1 कर्मवेदना, D2 Cā ॰नोदना, Cg k l m n r ś u ॰चोदना (as in text) — c) Cf B 14 25 3a K2 Da1 D3 (before corr ) कारण, M2 त्रिविध, Cā g k l m n r ś u करण (as in text) — d) Ś6 कर्मसश्रय॰, G2 सग्रह, Cā k l m n r ś u ॰सग्रह (as in text)

ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९
सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २०
पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१
यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२
नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३
यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४
अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५
मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६
रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७
अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८
बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥ २९

C 6 1483
B 6 42. 29
K 6 42. 29

---

19 [b]) M2 त्रिधेव, Cl n r ś u त्रिधैव (as in text) Ñ1 (before corr) कर्म, Cā k l n r ś u v गुण° (as in text) — [c]) Ś0 प्रोच्यते, M2 प्राप्यते, Cl u उच्यते, Cl r s प्रोच्यते (as in text)

20 [b]) Ñ1 अव्ययम्, Cl n r s अव्ययम् (as in text) Ś1 Da1 D2 7 6 ईक्ष्यते, Cl l n r s ईक्षते (as in text) — [d]) M1 2 यज्ज्ञान, Cl n r ś u तज्ज्ञान (as in text)

21 [a]) D2 च, Cl r s n तु (as in text) D4 तज्ज्ञान, M1 यज्ज्ञानात्, Cn r ś u यज्ज्ञान (as in text) — [c]) D7 8 भावेषु, Cn r ś u भूतेषु (as in text) — [d]) Ś1 Ko 6 तद्राजसमिति स्मृत, Ck n r ś u as in text

22 [a]) Ś1 Ko यत्तु (K1 °ट) कृत्स्नविद्, Ś0 Cā k यत्तत्कृत्स्नविद्, D2 यत्तु कृत्स्नमद, Cl n r ś u v यत्तु कृत्स्नवद् (as in text) — [b]) Du कार्यमक्तम्, Ca r ś u कार्ये सक्तम् (as in text) Ck cites कार्ये Cl n cite सक्त Ś1 2-6 K1 2 6 6 B3 Cg l r ś u अहेतुक, Ck n v as in text Ko कार्यमेतमहेतुक — [c]) T2 °र्थविद्, Cā k n r ś u र्थवद् (as in text) — [d]) = 39[d], Gītā 17 19[d], 22[d] B1 तज्ज्ञान विद्धि तामस, Cn r ś u v as in text Cl cites तत्तामसं

23 T1 om (hapl) 23[d]–24[a] — [d]) K1 सत्यकम्, B3 तामसम्, Cl n r ś u सात्त्विकम् (as in text) Ko तत्सात्त्विकमुदाहृत

24 T1 om 24[a] (cf v l 23) — [b]) T2 साहङ्करेण (sic) D6 चै, Cl n r ś u वा (as in text) — [c]) Ś3-6 K6 D3 Cā g k क्लेशबहुल, Cl n r ś u बहुलायास (as in text) — [d]) Ś3-6 D3 तद्राजसमि (D3 स इ)ति स्मृत, Cn s u as in text Cl cites तद्राजसम्

25 [a]) Ś1 K3 D2 Ck अनुबध, Cā l n r ś u v अनुबन्ध (as in text) — [b]) Ś3-6 Ko 3 6 Dn1 D2 8 6 T2 M1 3 Cā k n r u अनवेक्ष्य (Ś5 °वीक्ष्य, D2 वेक्ष), K1 Ñ1 अनपेक्ष, C? v अनपेक्ष्य (as in text) — [c]) D7 आरभते, Cl u प्रारभ्यते, Cā k n r ś आरभ्यते (as in text) — [d]) K1-3 Da1 D2 6 Cl n u तत्तामससमुदाहृत, Cā r ś as in text

26 [c]) Cf Gītā 2 48[c] D2 निराकार, Cā l n r ś u निर्विकार° (as in text)

27 [a]) K1 2 रागे, Cā k n r ś u रागी (as in text) D3 कर्मफले, Cl l n r ś u कर्मफल° (as in text) — [b]) K1 2 लब्धो, Cā k l n r s u लुब्धो (as in text) K1 हिंसात्मके, Ck l n r ś u °त्मको (as in text) — [d]) Ś3-6 परिकीर्त्यते, Cn r ś u कीर्तित° (as in text)

28 [b]) Ś1 K0 6 Dn1 Ck r ś नैष्कृतिको, D8 7 नैःकृतिको, Cā g n u v नैकृतिको (as in text) — [c]) Ś1 3-6 K0 Cā k दीर्घसूत्रश्, Cl m n r ś u °सूत्री (as in text)

29 [a]) G2 धृतिश् (sic) — [b]) Ś0 त्रैविध्य गुणत शृणु, D2 गुणतस्तु विधिं शृणु, Ck l ś u v as in text.

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ ३०
यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१
अधर्मं धर्ममिति या मन्यते तमसावृता ।
सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२
धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥३३
यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४
यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥ ३५
सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६
यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७
विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८
यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९

---

30 $^a$) = Gītā 16 7$^a$ — $^b$) D2 कार्याकार्यौ, Ck n ś u कार्याकार्ये (as in text) — $^c$) Dn1 (before corr) D2 6 8 M6 यो, Ck l n r ś u या (as in text) Ś3–6 K0 Ck बुद्धिर्, Cl n r ś u वेत्ति (as in text) — $^d$) Ś3–6 K0 Ck वेद सा सात्त्विकी मता, Cl n r ś u as in text

31 D8 om 31 — $^a$) Ś1 K2 T2 यथा, Ck l m r ś u यया (as in text) — $^b$) K1–3 Ñ1 (by corr) Da1 वाकार्यम्; Cl r ś u चाकार्यम् (as in text) — $^c$) D2 अथ यावत्, Cā g l m n r ś u अयथावत् (as in text) K6 यथावन्नाभिजानाति

32 $^a$) Cf B 12 123 14$^a$ B 13 145 62$^a$ D6 G4 M1 3 5 अधर्म्यं, Cl n r ś u अधर्मं (as in text) G4 M1 3 5 धर्म्यम्, Cr ś u धर्मम् (as in text) — $^b$) Ś3–6 Ck बुध्यते, Cn r ś u मन्यते (as in text) S3–6 K6 तमसा(K6 °सो)न्विता, Ck n r ś u तमसावृता (as in text) — $^c$) Da1 Dn1 D2 तु, Ck r ś u च (as in text) K1 सर्वार्थरूप रेतांश्च (sic) — $^d$) Ś3–6 K6 Ck तामसी मता, Cr ś u पार्थ तामसी (as in text) Cl n cite तामसी

33 G1 om 33 — $^a$) Cg k u धारयति, Cā n r ś धारयते (as in text) — $^c$) D2 [अ]व्यभिचारिण्यो, D6 (marg by corr) [अ]व्यभिचारेण, M1 3 5 व्यभिचारिण्या, Cā k l n r ś u [अ]व्यभिचारिण्या (as in text) — $^d$) K0 बुद्धि (sic) Ś3–5 D8 सात्त्विकी मता, Cn r ś u पार्थ सात्त्विकी (as in text) Ck l cite सात्त्विकी

34 $^a$) K1 यथा, Cā k l n r ś u यया (as in text) D6 कर्म°, Cā k n r ś u धर्म° (as in text). — $^c$) M8 प्रसक्तेन, Cā g k l n r ś u v प्रसङ्गेन (as in text) G1 [अ]फलाकाङ्क्षी, Ck l n r ś u फला° (as in text) — $^d$) M2 या, Cl n r ś u सा (as in text)

35 $^a$) Ś1 D2 यथा, Cg k l r ś u यया (as in text) Ś1 (sup lin as in text) स्वास्थ्य, K1 s स्वप्न, Ck स्वप्न°, Cl n r ś u स्वप्नं (as in text) B1 क्रोध, Ck शोक°, Cn r ś u शोकं (as in text) — $^b$) Ś3 मोहम्, B2 दमम् (by metathesis), Ck r ś u मदम् (as in text) — $^d$) Ś3–6 K6 Ck धृति सा तामसी मता (Ś1 5 स्मृता), Cg n r ś u as in text

36 $^{ab}$) Ś1 6 K0 6 transp त्रिविध and शृणु मे — $^d$) S3–6 B D1 8 M2 Ck च नियच्छति, D8 न निगच्छति, D6 च न गच्छति, Cl n r ś u च निगच्छति (as in text)

37 $^a$) Ś3–6 K6 Cā g k यत्तदात्वे, B1 तत्तदग्रे, Cl n r ś u यत्तदग्रे (as in text) — $^c$) Ś3–6 K6 विद्याद्, Cn r ś u प्रोक्तम् (as in text) — $^d$) K6 °प्रसादन, Cā n ś u °प्रसादजम् (as in text)

38 $^b$) Ś3–6 K6 Ck यत्तदात्वे, Cl n r ś यत्तदग्रे (as in text) — D8 om. 38$^{cd}$ — $^d$) Ś3–6 K6 Ck तद्राजसमिति स्मृत, Cn r ś u as in text

39 $^b$) Ś1 Cv सुखमोहनम्, Cā g k l n r ś u सुख मोहनम् (as in text) — $^d$) = 22$^d$, Gītā 17 19$^d$, 22$^d$ K0 तत्तामसमिति स्मृत, D1 तत्सुखं तामसं स्मृत, Cr ś u as in text

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ ४०
ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षत्रकर्म स्वभावजम् ॥ ४३
कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६
श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४७
सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४८
असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९
सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५०

C 6 1504
B 6 42 50
K 6 42 50

---

40 $^{a}$) Ś1 नो, D1 6 Cl च, Cr ś u वा (as in text) — $^{b}$) D7 कचित्, Cr ś u पुन (as in text)

41 $^{ab}$) = B 12 107 1$^{ab}$ — $^{d}$) M4 प्रविभु क्तानि, Cg k l n r ś u °भक्तानि (as in text)

42 $^{a}$) Ś3 Ck तथा शौच, Cś u तप शौच (as in text) — $^{d}$) Ś3–6 Ko D4 T2 Cā ब्राह्म कर्म, Cn r ś u ब्रह्मकर्म (as in text) D2 प्रभावज, Cn r ś u स्वभावजम् (as in text)

43 $^{a}$) Ś1 दक्षं, Da1 दाक्ष, D1 दाद्यं, Cā k l n r ś u दाक्ष्य (as in text) — $^{b}$) Da1 Cn वा, Cr ś u च (as in text) — $^{c}$) D2 7 ऐश्वर°, Cā k l n r ś u ईश्वर° (as in text) — $^{d}$) Ś3–6 Ko 2 3. 6 Ñ1 (by corr) B D (except D1 2 6 8, Da3 om) T G M2 Ck n क्षात्र कर्म, Cr ś u क्षत्र कर्म (as in text)

44 D8 om (hapl) 44 — $^{a}$) = 3 198 23$^{a}$ B 12 88 27$^{a}$, 89 7$^{a}$ B 13 135 9$^{c}$ cf B 12 77 15$^{a}$, 167 11$^{c}$ K6 Da1 D1 5 6 T2 G1 3 M कृषिगोरक्षवाणिज्य, Ñ1 °वाणिज्यगोरक्ष, Cś u °गौरक्ष्य वाणिज्य, Ck r as in text — $^{b}$) K1 D4 T G1 2 4 वैश्य (K1 °श्य), Ck n r ś u वैश्य (as in text) — $^{c}$) Ś3–6 K6 Ck पर्युत्थानात्मक कर्म, G2 परिचर्यात्मिक कर्म, Cl r ś u as in text — $^{d}$) Ko (erroneously) वैश्यकर्म (for शूद्रस्यापि)

45 $^{b}$) D2 M8 (*inf lin*) परा, Cā k n r ś नर (as in text) — $^{c}$) Cf 1 58 22$^{a}$ M8 (*inf lin*) 5 शुद्धिं, Ck n r ś u सिद्धिं (as in text) D3 अयात सम्प्रवक्ष्यामि

46 $^{a}$) K1 Da1 D8 प्रवृत्ति-, D2 प्रवृत्तिं, Ck n r ś u प्रवृत्तिर् (as in text) — $^{b}$) = Gītā 2 17$^{b}$ (q v), 8 22$^{d}$ Ś3–6 K6 Ck विश्वम्, Cn r ś u सर्वम् (as in text) — $^{c}$) D2 अकर्मणो (sic) Ś1 6 Ko 5 Cā k तमेवार्च्य, Cn r ś u तमभ्यर्च्य (as in text)

47 47$^{ab}$ = Gītā 3 35$^{ab}$ (q v) — $^{a}$) M8 5 विगुणात्, Cā k l n r ś u विगुण (as in text) — After 47$^{ab}$, Ś1 5 Ko 6 D8 ins (of Gītā 3 35$^{cd}$ with v l)

110* स्वधर्मे निधन श्रेय परधर्मोदयादपि ।

— $^{d}$) = Gītā 4 21$^{d}$

48 $^{d}$) Ś1 6 K1 2 Ñ1 B2 D8 M1 °वृत, Ck l n r ś u °वृता (as in text)

49 $^{a}$) Ñ1 असक्त, D8 असक्ति, Cā k l n r ś u असक्त (as in text) — $^{c}$) Ś1 निष्कर्म°, D1 6 नैकर्म्य°, Da1 T2 नैष्कर्म°, Cā k l m n r ś u नैष्कर्म्य° (as in text)

50 $^{a}$) D2 सिद्धिमाप्नोति च यथा, Cl m n r ś u as in text — $^{b}$) Ś5 6 D8 Cā तदाप्नोति, K6 Ck प्राप्नोति तन्, Cl m r ś u तथाप्नोति (as in text) — $^{c}$) Ś3–6 Ko 6 तु, Cś u [ए]व (as in text)

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२
अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३
ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४
भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६
चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७
मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।
अथ चेत्त्वमहंकारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ ५८
यदहंकारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९
स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥ ६०

— $^{d}$) K1–3 Da1 Dn D2 5 6 8 ध्यानस्य, Cm n r ś u ज्ञानस्य (as in text) T2 M2 चापरा, Cā m n r ś u या परा (as in text)

51 $^{a}$) = B 7 3 12$^{c}$ — $^{c}$) T2 शब्दादि ; Ck n r ś u शब्दादीन् (as in text) — $^{d}$) Ś0 नियम्य, Cā k n r ś u व्युदस्य (as in text)

52 $^{a}$) = (var) B 12 215 16$^{c}$ Cl (as reported by Puruṣottama) लध्वाशी, Cā k n r ś u लघ्वाशी (as in text) — $^{b}$) Cf 3 38 14$^{d}$ Ś1 जित°, K1 यत्त्व°, Cā k n r ś u यत° (as in text)

53 With 53$^{ab}$, cf Gītā 16 18$^{ab}$ — $^{b}$) Cf B 14 45 8$^{d}$ T2 कामक्रोधौ, Ck r ś u v कामं क्रोध (as in text) — $^{d}$) = Gītā 14 26$^{d}$ (q v) B3 D6 कल्प्यते, Ck m n r ś u कल्पते (as in text)

54 $^{b}$) = Gītā 12 17$^{b}$ cf B 14 19 25$^{d}$ B 15 26 8$^{d}$ Ś3–6 K6 Ck śp up हृष्यति, Cn r ś u काङ्क्षति (as in text) — $^{c}$) = 1 45 8$^{e}$ B 12 160 27$^{c}$, 236 36$^{a}$, 240 12$^{c}$, 31$^{c}$, 345 28$^{a}$ B 14 46 40$^{c}$ cf B 12 59 104$^{b}$, 262 10$^{c}$, B 14 28 24$^{a}$ — $^{d}$) Cv मर, Cā k n r ś u पराम् (as in text)

55 $^{b}$) Ś3–6 K6 Cā k योह यश्, D6 यावद्यश्, Cl r ś u यावान्यश् (as in text) K5 यादृश°, Cā k l r ś u तत्त्वत (as in text) — $^{c}$) Ś5 ततोसौ; Cā k l n r ś u v ततो मा (as in text)

56 $^{a}$) D2 नर°, T2 तदा, Ck n ś u सदा (as in text) — $^{b}$) D2 मय्यपाश्रय, Cā k n r ś u मद्व्यपाश्रय° (as in text)

57 $^{b}$) Cf Gītā 12 6$^{b}$ Ś3–6 B1 भारत, Cl n r ś u मत्पर° (as in text) — $^{c}$) Ś1 शुद्धियोगम्, Cā k l n r ś u बुद्धि° (as in text) Ś3–6 K6 Cā k समाश्रित्य, K1 Ñ1 B Da1 Dn2 D4 T1 G1 4 M3 5 मपाश्रित्य, Cl n r ś u उपा° (as in text) — T1 om (hapl) 57$^{d}$–59$^{a}$

58 T1 om 58 (cf v l 57) — $^{a}$) Ś4 (*sup lin* as in text) 6 Cā °दुःखानि, D1 (m as in text) °कर्माणि, Ck l n r ś u °दुर्गाणि (as in text) — $^{b}$) Da1 D2 तरिष्यति, Cā k l r ś u तरिष्यसि (as in text) — $^{c}$) Ś3–6 K6 D6 Cā k अहंकार, Cn r ś u °कारान् (as in text) — $^{d}$) Ś3–6 K6 D3 Cā k मोक्ष्यसि, Cl n r ś u श्रोष्यसि (as in text) K2 न काक्षसि, Cā k n r ś u विनङ्क्ष्यसि (as in text)

59 T1 om 59$^{a}$ (cf v l 57) — $^{a}$) Ś1 या[?यो]हकारमुपाश्रित्य, K5 D1 3 6 T2 G1 3 M4 यद्यहकारमाश्रित्य, Ck n r ś u as in text — $^{b}$) D3 6 न योत्स्यामीति मन्यसे (D6 °ते), Cā k l n r s u as in text — $^{c}$) Ś1 3–6 K6 5 D3 T3 Cā k मिथ्यैव, D2 मय्येव, Cl n r ś u v मिथ्यैष (as in text) K1 Dn1 व्यवसायास्ते, Cā k l n r ś u v °यस्ते (as in text) K6 मिथ्यैवाध्यवसायस्ते — $^{d}$) Ś4 G1 प्रकृति स्त्वा, K6 प्रकृतिं त्वा, Cā k l n r ś u प्रकृतिस्त्वा (as in text) Ś4 5 Ck नियोक्ष्यते, Ñ1 D6 M4 नियोक्ष्यसि, Da1 निरक्ष्यति, Cā l n r ś u नियोक्ष्यति (as in text)

60 $^{a}$) D2 स्वभावज्ञेन, D6 स्वभावाद्येन, Cl n r ś u स्वभावजेन (as in text) — $^{c}$) T2 इच्छासि, Cr

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१
तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२
इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३
सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६४
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६
इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७
य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९
अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७०

C 6 1524
B 6 42.70
K 6 42 70

ś u नेच्छसि ( as in text ) D6 तन्मो॰, Cr ś u यन्मो॰ ( as in text ) — d ) Ś1 D6 करिष्यति, Cl n r ś u सि ( as in text ) Ś4 6 K6 Ñ1 D7 8 Cā सन्, K5 त, Cn r ś u तत् ( as in text )

61 a ) = B 12 72 6c, 227 25a — b ) Ś3 K6 D3 Ck हृद्येष, Ñ1 Cā हृदये, Cl. n r ś u हृद्देशे ( as in text ) Ś3–6 K6 D8 वसतेर्जुन, Cl m n ś u ऽर्जुन तिष्ठति ( as in text ) — d ) Ś4 यन्त्रारूढेव, Ck l n r ś u ॰रूढानि ( as in text ) Da1 मानव; Ck l n r ś u मायया ( as in text )

62 a ) Ś1 तामेव, Cā g k l m n r ś u तमेव ( as in text ) — b ) = Gītā 15 19d Ś6 पाण्डव, Cr ś u भारत ( as in text ) — c ) Ś3 D6 Cg k l मत्प्रसादात्, Cm n.r ś u तत्प्रसादात् ( as in text ) Ś3–5 Ck सिद्धिं, Cā l n.r ś u शान्तिं ( as in text ) — d ) Dn1 D2 प्राप्स्यति, Cā k.l n r ś u प्राप्स्यसि ( as in text )

63 a ) D6 इदं, Cā l.n r ś u इति ( as in text ) D6 ध्यानम्, Cā g l n r ś u ज्ञानम् ( as in text ) — b ) G2 ॰तम, Cn r ś u तरं ( as in text ) — c ) Some MSS विसृज्य — d ) = 1 224 15d 5 123 17d Ś4 5 K6 D2 यदिच्छसि, Cā l n r ś u यथेच्छसि ( as in text )

64 b ) = Gītā 10 1b — c ) K2 इष्टोसि, Cg k n.r ś u इष्टोऽसि ( as in text ) Ko Ñ1 D1.8 T2 Ck दृढमतिस्, D6 दृढमत, T1 G1 4 Cr दृढ इति, Cn ś u दृढमिति ( as in text ) — d ) Da1 D6 वक्षामि ( sic )

65 $65^{ab}$ = Gītā 9 $34^{ab}$ — a ) Da1 D2 सन्मना, Cg l n r ś u मन्मना ( as in text ) — b ) Da1 मा, Cn r ś u मा ( as in text ) — c ) Cf Gītā 9 34c Ś6 K1 ॰वेष्यसि ( sic )

66 c ) Ś5 K3 5 Ñ1 B D2 5 6 T2 M4 Cā g k त्वां, Cl n r ś u त्वा ( as in text ) — d ) Da1 D8 मां, Cā g k.l.n r ś u मा ( as in text ) Ñ1 D6 शुच, Cā g l n r ś u शुच ( as in text )

68 a ) Ś6 D8 G1 Cā ś u य इम, D6 इदं य; Ck l n r य इद ( as in text ) — b ) G2 ॰धास्यते, Cā g k l n r ś u ॰धास्यति ( as in text ) — c ) Ś6 मयि भक्तिं ( by transp ) — d ) Cf. Gītā 8 7d Ś1 D6 M5 मामेवेष्यति, Ś3–6 K6 Ck स मामेष्यति, Ko वैष्यसि, Cā l n r ś मामेवैष्यति ( as in text ) Ś4–6 Ko 5 6 D1.3 7 8 M4 [अ]सशय, Cn r ś u [अ]सशय ( as in text ) D2 भविष्यति न संशय

69 c ) G2 समस्, Cā k l n r ś u च मे ( as in text ) T2 यस्माद्, Cā k ś u तस्माद् ( as in text ) — d ) K5 D1 M1 5 Cu प्रियतमो, Cā n ś प्रियतरो ( as in text )

70 a ) D2 इद, Ck r ś v इम ( as in text ). — b ) K1 Cn धर्मं, D2 M2 धर्म्यं, M3 5 धर्मं, Cā k r ś धर्म्यं ( as in text ) — c ) Ko ज्ञानयोगेन; Cr ś u ज्ञानयज्ञेन ( as in text )

श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥ ७१
कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय ॥ ७२

अर्जुन उवाच ।

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।
स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥ ७३

संजय उवाच ।

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४
व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ।
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५
राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६
तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः ॥ ७७
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८

इति श्रीमहाभारते भीष्मपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥ समाप्तं भगवद्गीतापर्व ॥

71 [a]) Cf Gītā 3. 31[c] K2 D2 6-8 M6 अनुसूय (D7 M6 °सु)श्च, G1 2 M1-3 अनसूयुश्च; Cr ś u अनसूयश्च (as in text) — [d]) K0 आप्नु°, Ck n r ś u प्राप्नु° (as in text)

72 Before 72, Ñ1 ins श्रीभगवानुवाच — 72[ab] = (var) B 14 19 55[ab] — [b]) Ś0 °कायेण, Cl n r ś u °काग्रेण (as in text) — [d]) Some MSS प्रणष्टस्ते

73 Ś1 धनजय उ° — [c]) Da1 D8 गतसमोह, Cā k l n r ś u °संदेह (as in text) — [d]) = 5 176 26[d] B 13 14 35[d] cf 3 128 1[d] 5 15 8[d]

74 [b]) = 3 89 8[b] Ś0 महात्मना, Cr ś u °त्मन (as in text) — [c]) Da1 M6 इदम्, Cl r ś u इमम् (as in text) — [d]) Some MSS लोम°

75 [b]) Ś0 D2 Cu इम, Cś एत (as gloss for एतद्); Ck l n r एतद् (as in text) Ś3-5 K6 Ck गुह्यतरं, K0 Da1 D1 2 4 T G1 2 4 M4 Cś गुह्यतम, Cl n r u गुह्यमह (as in text) Ś3-5 K6 महत्, Cl n r ś u परम् (as in text) D3 एत गुह्यमनुत्तम — [c]) Ś4 5 K0 योगीश्वरात्, Cā l r ś u योगेश्वरात् (as in text) — [d]) K1 कथयता, G1 तु कथित, Cā k l n r ś u कथयत (as in text)

76 Ś0 om 76-77 M3 om (hapl) 76[b]-77[a] — [b]) Ś1 5 K2 Ñ1 Da1 M1 इदम्, Cl r ś u इमम् (as in text) D6 उत्तम, Cl r ś u अद्भुतम् (as in text) — [d]) Ś1 हृष्यामीव (marg °ति), Cl ś हृष्यामि च (as in text) D1 2 पुन पुन, Cl r ś u मुहुर्मुहु (as in text)

77 Ś0 om 77, M1 om 77[a] (cf v l 76) — [a]) Ś3-5 सस्मृत्य परम, Cl n r ś u सस्मृत्य सस्मृत्य (as in text) — D3 reads (see m) 77[cd] on marg — [c]) Ś1 3-5 K2 6 Ñ1 Da1 D6-8 महाराज (Ś1 K2 Ñ1 D6 8 °जन्), Cl r ś u महाप्राजन् (as in text) — [d]) Ś1-5 K6 प्रहृष्ये; Cl r ś u हृष्यामि (as in text)

78 [a]) Ś1 3-5 K0 1 D3 7 T2 G1 योगीश्वर, Cā l r ś u योगेश्वर (as in text) — [b]) D2 पार्थो यत्र (by transp) — [d]) Ck स्थिरा, Ca l n r ś u ध्रुवा (as in text) Ś1 Ck इति, Cā l n r ś u नीतिर् (as in text) K0 ध्रुवाणीति मतिर्मम — After 78, Ñ1 ins

111* भगवद्भक्तियुक्तस्य तत्प्रसादात्मबोधत ।
सुख बन्धविमुक्ति स्यादिति गीतार्थसग्रह ।

[This is (with var) the सग्रहश्लोक to adhy 18 in Cg]

# ४१

संजय उवाच ।
ततो धनंजयं दृष्ट्वा बाणगाण्डीवधारिणम् ।
पुनरेव महानादं व्यसृजन्त महारथाः ॥ १
पाण्डवाः सोमकाश्चैव ये चैषामनुयायिनः ।

C 6 1534 B 6 43 7 K 6 43 7

---

Colophon om in Ś4–6 G3 not collated *Sub-parvan* Ś1 K0–2 5 Ñ1 B Da1 Dn D1–3 T G2 4 M1. 2 4 5 Cv ( a few of these MSS with the prefix श्री or श्रीमद् )भगवद्गीतासु उपनिषत्सु ( K1. 2 D2 om उपनिषत्सु ), K6 श्रीभगवद्गीताया, D3 भगवद्गीता समाप्ता, G1 गीताया Ś1 K6 D3 M1 3 5 cont श्रीकृष्णार्जुनसंवादे, K0 5 Ñ1 B3 Da1 Dn2 D1. 4–6 T G2 4 M2 Cv ब्रह्म( T2 G2 M2 परब्रह्म )विद्यायां योगशास्त्रे ( T1 G2 4 °शास्त्रनिर्णये ) श्रीकृष्णार्जुनसंवादे — *Adhy name* Ś1 विभूतयोग ( sic ), K0 2 D3 संन्यासयोग, K3 निर्णयसंन्यासयोग, K5 परमार्थनिर्णय, K6 सर्वकर्मफलत्यागपूर्वक काम्यकर्मणा सम्यक् न्यासपूर्वक सत्वरजस्तमोगुणमयजगाद्विवरणपूर्वक ब्रह्मप्राप्तियोग (?), Ñ1 परमार्थनिर्गुणमोक्षयोग, B3 छिन्नसंशय, Da1 D1 5 Cś मोक्षसंन्यासयोग, Dn संन्यासादितत्त्वनिर्णययोग, D4 सर्वोपनिषदर्थप्रतिपादनमोक्षयोग, D6 संग्राम अंगीकार, D7 परमार्थनिनिर्णणे ( sic ), T1 G2 4 सकलवेदशास्त्रपुराणसंग्रहमोक्षयोग, T2 G1 मोक्षयोग, Cv अर्जुनसुबोध — *Adhy no* (figures, words or both) D5 M2 41, T1 G1 2 4 40 ( as in text ), M4 42 — *Bhagavadgītā adhy no* ( figures, words or both ) Ś1 K0–3 5 6 Ñ1 B Da1 Dn D1 2 4 6–8 T2 G2 M1. 3 5 Cv 18 After the adhy no, Ś1 Dn2 D6 read समाप्त, K5 समाप्ता चेयं गीता, B4 T G1 M4 भगवद्गीता समाप्ता, D1 गीताशास्त्रं समाप्तं — *Śloka no* K1. 3 5 Da1 Dn D1 5 6 G2 78 — *Aggregate Śloka no* D1 1465 — *Aggregate Bhagavadgītā Śloka no* Ś1 ( marg ) 740

Ś1 K0 1 ins after adhy 40 K2 B2–4 Dn D4 8 cont after 113*

112* षट् शतानि सविंशानि श्लोकानां प्राह केशवः ।
अर्जुनः सप्तपञ्चाशत्सप्तषष्टिस्तु संजयः ।
धृतराष्ट्रः श्लोकमेकं गीताया मानमुच्यते ।

[ ( L 2 ) Ś1 K0 1 पञ्चपञ्चा° ( for सप्तपञ्चा° ) Ś1 K0 पञ्चषष्टिस्तु, K1 पञ्चषष्टिं च, K2 B2 8 सप्तषष्टिं तु, B4 सप्तषष्टिं च ( for सप्तषष्टिस्तु ) — ( L 3 ) Ś1 K0–2 एषा गी( Ś1 °तश्री )तार्थसंग्रहः ( for the post half ) ]

K2 B2–4 Dn D3 ( om lines 3–6 ) 4 8 ins after adhy 40

113* वैशंपायन उवाच ।
गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः ।
या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता ।
सर्वशास्त्रमयी गीता सर्वदेवमयो हरिः ।
सर्वतीर्थमयी गङ्गा सर्ववेदमयो मनुः ।
गङ्गा गीता च गायत्री गोविन्देति हृदि स्थिते । [5]
चतुर्गकारसंयुक्ते पुनर्जन्म न विद्यते ।

[ B2 संजय उ° ( for वैशंपायन उ° ) — ( L. 1 ) Dn2 गीताः सुगीताः कर्तव्याः K2 D3 8 °संग्रहैः ( for °विस्तरैः ) — ( L 2 ) K2 B4 D3 स्वयं, B3 त्विय ( for चेयं ) — ( L. 4 ) B3 सर्वधर्म°, Dn1 D4 8 सर्वदेव° ( for सर्ववेद° ) — ( L 5 ) Dn D4 transp गङ्गा and गीता B2 3 D4 गोविंदे च ( for गोविन्देति ) D3 गोविंदे हृदि संस्थिते ]

B2–4 Dn D4 8 ins after 112*

114* भारतामृतसर्वस्वगीताया मथितस्य च ।
सारमुद्धृत्य कृष्णेन अर्जुनस्य मुखे हुतम् ।

[ ( L 1 ) D4 8 °सर्वस्य ( for °सर्वस्व- ) ]

After adhy 40, D5 *repeats* 6 22 17–22

## 41

☞ S reads this adhy after adhy 22

1 In Da1, the portion of the text from st 1 up to st 27 of this adhy is partly lost on a damaged fol — After the ref, D6 ins

115* प्रबोधितः स तु तदा विष्णुना विश्वमूर्तिना ।
अविनाशिस्वरूपं च दृष्ट्वा तत्त्वेन फाल्गुनः ।
कृत्रिमं तु जगद्रूपं ज्ञात्वा युद्धोद्यतोऽभवत् ।
देवदत्तं समायुज्य शस्त्राणि जगृहे पुनः ।

— b ) K3 5 D1–3 6 बाणकार्मुक°, K4 B रणे गाण्डीव°, T2 रथो गाण्डीव° — c ) D3 महात्मान ( for °नाद ) D6 पुनश्च सर्वे ते योधा — d ) Ś1 K0 1 3 5 D1 2 व्यमुञ्चत, K2 विसृजत D6 महानाद व्यमुञ्चत

दध्मुश्च मुदिताः शङ्खान्वीराः सागरसंभवान् ॥ २
ततो भेर्यश्च पेश्यश्च क्रकचा गोविषाणिकाः ।
सहसैवाभ्यहन्यन्त ततः शब्दो महानभूत् ॥ ३
अथ देवाः सगन्धर्वाः पितरश्च जनेश्वर ।
सिद्धचारणसंघाश्च समीयुस्ते दिदृक्षया ॥ ४
ऋषयश्च महाभागाः पुरस्कृत्य शतक्रतुम् ।
समीयुस्तत्र सहिता द्रष्टुं तद्वैशसं महत् ॥ ५
ततो युधिष्ठिरो दृष्ट्वा युद्धाय सुसमुद्यते ।
ते सेने सागरप्रख्ये मुहुः प्रचलिते नृप ॥ ६
विमुच्य कवचं वीरो निक्षिप्य च वरायुधम् ।
अवरुह्य रथात्तूर्णं पद्भ्यामेव कृताञ्जलिः ॥ ७
पितामहमभिप्रेक्ष्य धर्मराजो युधिष्ठिरः ।
वाग्यतः प्रययौ येन प्राङ्मुखो रिपुवाहिनीम् ॥ ८
तं प्रयान्तमभिप्रेक्ष्य कुन्तीपुत्रो धनंजयः ।

---

2 a) K4 B Da2 Dn D4 5 7 8 सृ( B3 D5 स ) जयाश् ( for सोमकाश् ) M पाचाला केकयाश्चैव — b) K3 5 D2 6 चैतान्, B3 चान्ये ( for चैषाम् ) — c) B2 S दध्मु प्र ( for दध्मुश्च ) D3 transp मुदिता and शङ्खान् — d) K1 भीरा Ś1 Ko 1 D1 2 सागर सनिभान्, D6 सगारसभवान् ( sic )

3 a) Ko 1 तेषा, K2 4 B1 3 Da Dn D4–8 तथा, K3 5 D2 अथ ( for ततो ) K3 5 D2 6 भेर्य स- ( for भेर्यश्च ) Ca cites भेर्य्या, Cd ( corrupt ) भार्ये Ś1 K1 पेटाश्च, Ko पोटाश्च, K3 5 D2 3 6 S पणवा, Da D5 पेय्यश्च, D1 पटहा, D3 ढकाश्च ( for पेश्यश्च ) Ca cites पेय्या, Cc पेशी — D4 om 3bc — b) Da1 damaged Ś1 Ko 1 D1 कृकवो, K3 क्रकवो; K5 कृकचो, Dn1 कवचा, D3 स्कृकतो, D6 कृकवा, D8 दुदुभी, T1 G4 ककरा, T2 G1–3 काहला, M1 3–5 कृकरा, M2 कृतरा, Ca c क्रकचा ( as in text ) Cd cites क्रकच K5 गौविषाणिका, D3 गोमुखादय, S गोविषाणका ( T2 °णगा, G3 °णिन ), Ca c d °णिका ( as in text ) — c) = 6 23 13c Cc cites सहसा M1 3–5 °हन्यतस्, Cc °त ( as in text ) — d) Da1 damaged Ś1 तेन ( for तत ) B Da2 Dn(!) D4 5 7 8 स शब्दस्तुमुलोभवत् ( = 6 23 13d ), M स ( M3 5 सु ) शब्द सुमहानभूत्

4 a) Da1 damaged K2 D3 T1 G2 तथा, G4 ततो ( for अथ ) T1 G4 च ( for स ) — b) Ś1 Ko–2 किंनराश्च, T2 पितर स, G1 शखरश्च, G3 शकरश्च ( for पितरश्च ) K3. 5 D2 नरेश्वरा, B1 गणेश्वरा, B2 D3 जनाधिप, Da1 जनेश्वर, D1 8 °श्वरा, D6 T G महेश्वरा ( G1–3 °र ), M सहेश्वरा — c) K3 °गधर्वा, D3 °सर्वे वै ( sic ) ( for °सघाश्च ) — d) T1 G4 समेयुस्ते K3 D1 3 दिदृक्षव

5 In Da1, st 5 is lost on a damaged fol. — a) K5 ऋषयस्ते — c) D6 सहसा ( for सहिता ) — d) Ś1 K1 D6 तद्वैपस, D1 तद्विस्मय — After 5, S ins

116* ते सेने स्तिमिते चास्ता वीक्षमाणे परस्परम् ।
गङ्गायमुनयोर्वेगौ यथैवेत्य परस्परम् ।
एव प्रवृत्ते ते सेने निःशब्दे जनससदि ।
चित्रे इव पटालेख्ये दर्शनीयतरे शुभे ।

[ ( L 1 ) T2 सैन्ये T1 G4 सज्जे, G1 3 तत्र ( for चास्ता ) T2 G2 ईक्ष° ( for वीक्ष° ) — ( L 4 ) T G M4 चित्रे पट इवालेख्ये ( for the prior half ) T2 G2 °तमे ( for °तरे ) T2 G2 3 M2 4 उभे ( for शुभे ) ]

6 a) Ś1 Ko–2 राजा, S वीक्ष्य ( for दृष्ट्वा ) — b) Ś1 Ko–2 समुपस्थित, K3–5 B2 D1. 2 समवस्थिते ( D2 °त ), B3 समसमुच्यते, Da1 समुपद्यते, D3. 6 समुपस्थिते, S सु( T1 G2–4 स )समुद्यत — c) K3 5 D2 6 सागरनिभे, D1 °राकारे Ś1 ( m as in text ) तेन सागरप्रख्येन — d) K1 प्राचल्यते, S प्रज्वलिते ( T1 °ध्वसिते )

7 a) D3 धीरो — b) D1 विक्षिप्य च, T1 G विनिक्षिप्य Ko 1 शरासन, Cc वरायुधम् ( as in text ) — c) Da1 damaged Ś1 Ko–2 4 5 Dn1 D1 6 क्षिप्र ( for तूर्णं )

8 b) K4 धर्मपुत्रो — K3 5 D2 om 8c–9b — c) Ś1 T1 G2 4 वीर ( for येन ) — d) = 11d.

9 K3 5 D2 om 9ab ( cf v l 8 ) — a) Ś1 K1 2 D3 5 6 8 G1–3 M5 प्रयातम्, K4 तु यातम् — b) T1 G2 4 कुतीपुत्र S वृकोदर ( for धनजय ) — c) K3 5 D2 अवरुह्य — d) K3 D2 7 °तोभ्ययात्; K5 B4 Dn D4 8 °तोभ्यगात्, B1–3 Da ( Da1 dam-

अवतीर्य रथात्तूर्णं भ्रातृभिः सहितोऽन्वयात् ॥ ९
वासुदेवश्च भगवान्पृष्ठतोऽनुजगाम ह ।
यथामुख्याश्च राजानस्तमन्वाजग्मुरुत्सुकाः ॥ १०

अर्जुन उवाच ।

किं ते व्यवसितं राजन्यदस्मानपहाय वै ।
पद्भ्यामेव प्रयातोऽसि प्राङ्मुखो रिपुवाहिनीम् ॥ ११

भीमसेन उवाच ।

क्व गमिष्यसि राजेन्द्र निक्षिप्तकवचायुधः ।
दंशितेष्वरिसैन्येषु भ्रातॄनुत्सृज्य पार्थिव ॥ १२

नकुल उवाच ।

एवंगते त्वयि ज्येष्ठे मम भ्रातरि भारत ।
भीर्मे दुनोति हृदयं ब्रूहि गन्ता भवान्क नु ॥ १३

सहदेव उवाच ।

अस्मिन्रणसमूहे वै वर्तमाने महाभये ।
योद्धव्ये क्व नु गन्तासि शत्रूनभिमुखो नृप ॥ १४

संजय उवाच ।

एवमाभाष्यमाणोऽपि भ्रातृभिः कुरुनन्दन ।
नोवाच वाग्यतः किंचिद्गच्छत्येव युधिष्ठिरः ॥ १५

C 6 1547
B 6 43 20
K 6 43 22

---

aged ) D5 6 °तोन्वगात्, D1 °तोन्वियात्, S °तो वशी — After 9, S ins

117* भीतं युधिष्ठिरं मत्वा भीमसेनः प्रतापवान् ।

10 a) Da (Da1 damaged) Dn D4 5 7 8 त राजन् (for भगवान्) — b) Ś1 K0 1. 4 तान्, K3 5 D2 3 6 त (for ह) — After 10ab, S ins

118* सात्यकिश्चार्जुनश्चैव अभिमन्युश्च वीर्यवान् ।

— c) K2 B Da (Da1 damaged) Dn D4 5 7 8 पार्थिवाश्चैव, K3 D2 यथामुख्यास्तु, K4 यथामुख्य च, D3 तथा मुख्याश्च, G3 ययौ मुख्याश्च B Da (Da1 damaged) D5 राजान — d) K0 उत्तमा (for उत्सुका) K1 तमन्वाजग्मुरुत्सुमा (corrupt), K2 त जग्मुरत्नु सोत्सुका, K3 D2 8 तमथाजग्मुरु°, K4 त समा जग्मुरु°, B अनुजग्मु म( B2 °ग्मुस्त )मु°, Da (Da1 damaged ) Dn D4 5 7 8 तमनुजग्मुरु°, D1 ते समा जग्मुरु°, D6 तरसा जग्मुरु°, S तमन्वाययुरु°

11 S भीमसेन (for अर्जुन उवाच) — a) K3 D1-3 6 पार्थ (for राजन्) — b) Ś1 K0 1 D3 8 अवहाय, D1 त्व विहाय (for अपहाय) — c) M1-3 5 मेवापया — d) = 8d S (except T2) प्रमुखे (for प्राङ्मुखो)

12 S अर्जुन (for भीमसेन उवाच) — a) T2 किं (for क्व) Da (Da1 damaged) D5 गमिष्यामि — b) K2 Dn2 T2 M2 निक्षिप्यकवचायुध (sic), D8 T1 G °प्य (T1 °प्त) कवचायुध — c) K0 8 D4 (by corr) S दसितेपु, C0 दशि° (as in text) K5 अरिवृंदेषु — d) G1 8 °नुद्दिश्य S पाडव (T2 °वान्)

13 a) K3 5 Da2 D2 5 6 श्रेष्ठे (for ज्येष्ठे) — b) D8 पार्थिव (for भारत) — c) K0 भीम, K3 5 D2 3 6 भी स, D1 भृश, D8 भीष्मे (for भीर्मे) Ś1 K0 1 तनोति (for दुनोति) — d) D1 क्व हि (for ब्रूहि) D1 भवान्कथ — For 13, S subst

119* क्वैव गमिष्यसि श्रेष्ठ त्यक्त्वास्मान्दुर्बलो यथा ।
राजा हि त्व महाबाहो वाग्यतो मन्युमानिव ।

[ (L 1) M2 केन T2 केन नैव गमिष्यति (for the prior half) T2 त्यक्त्वासून् (for °स्मान्) — (L 2) T2 G1. 8 M राजा भीम, G2 राजमभि (for राजा हि त्व) T2 G1 8 M वार्यतामत्र मानद (M1 2 °द), G2 वार्यतोत्र ममानघ ]

14 T1 om the ref — a) D8 अस्मिन्नृप, T1 G4 अस्मिन्राज, M2 3 5 अस्मिन्रणे (for अस्मिन्रण) K0 °समूहे तु, M2 महाबाहो (for °समूहे वै) — b) T1 G4 महाहवे, M1-3 5 भयावहे (for महाभये) — c) K0-3 योद्धव्य — d) D6 रणे (for नृप) S अभिमुखे स्थितान्

15 a) Ś1 K1 सभाप (for आभाष्य°) K4 D8 वै, M3 हि (for ऽपि) — b) K4 5 B Da2 Dn1 D1-3 5 6 S (except T1 G4) °नदन (for °नन्दन) — d) D6 अटव्ये च, D8 गच्छत्सेव

16 b) D1 देवो देवकिनदन

तानुवाच महाप्राज्ञो वासुदेवो महामनाः ।
अभिप्रायोऽस्य विज्ञातो मयेति प्रहसन्निव ॥ १६
एष भीष्मं तथा द्रोणं गौतमं शल्यमेव च ।
अनुमान्य गुरून्सर्वान्योत्स्यते पार्थिवोऽरिभिः ॥ १७
श्रूयते हि पुराकल्पे गुरूननुमान्य यः ।
युध्यते स भवेद्व्यक्तमपध्यातो महत्तरैः ॥ १८
अनुमान्य यथाशास्त्रं यस्तु युध्येन्महत्तरैः ।
ध्रुवस्तस्य जयो युद्धे भवेदिति मतिर्मम ॥ १९
एवं ब्रुवति कृष्णे तु धार्तराष्ट्रचमूं प्रति ।
हाहाकारो महानासीन्निःशब्दास्त्वपरेऽभवन् ॥ २०
दृष्ट्वा युधिष्ठिरं दूराद्धार्तराष्ट्रस्य सैनिकाः ।
मिथः संकथयांचक्रुर्नेशोऽस्ति कुलपांसनः ॥ २१
व्यक्तं भीत इवाभ्येति राजासौ भीष्ममन्तिकात् ।
युधिष्ठिरः ससोदर्यः शरणार्थं प्रयाचकः ॥ २२
धनंजये कथं नाथे पाण्डवे च वृकोदरे ।
नकुले सहदेवे च भीतोऽभ्येति च पाण्डवः ॥ २३
न नूनं क्षत्रियकुले जातः संप्रथिते भुवि ।
यथास्य हृदयं भीतमल्पसत्त्वस्य संयुगे ॥ २४

17 a) K1 2 एव (for एष) — b) Co गौतम (as in text) — c) T1 G4 कुरून् (for गुरून्) K3-5 D2 6 S वृद्धान् (for सर्वान्) — d) B1 8 Da2 Dn D4 5 7 8 सह शत्रुभि, B2 शत्रुभि सह, B4 सह शत्रुणा (for पार्थिवोऽरिभि)

18 Ś1 Ko 1 om 18-19 — a) G2 3 °कल्पो, Ca o °कल्पे (as in text) — b) D1 गुर्वाज्ञां नानु°, D6 गुरूनन्वनु°, T2 गुरून्स्वानु°, M3-5 न गुरूननु° K2 4 B Da2 Dn D4 5 7 8 गुरून्वृ(K2 D4 7 8 °स्वृ) द्धान्सबाधवान्, K5 गुरूनत्वनुमान्यव (sic) — B Da2 Dn D4 5 7 8 om (? hapl) 18cd — K4 transp 18cd and 19ab — c) K3-5 D1 2 6 युध्येत — d) D1 अपराधो महत्तर — For 18cd, S subst

120* युद्धायावतरत्येव तस्य नास्ति जयो रणे ।
यस्तु युद्धे समुत्पन्ने गुरून्दृष्ट्वाथ दशितान् ।

19 Ś1 Ko 1 om 19 (cf v l 18) K4 transp 18cd and 19ab — a) D8 यथान्याय, M5 °शास्त्र D1 प्रणम्य च गुरु यस्तु° — b) T G तैस्तु, M ततो (for यस्तु) D6 G2 युद्धे (for युध्येन्) D6 महामति (for महत्तरै) D1 *भियुध्येत मानव — c) D1 T G ध्रुव (for ध्रुवस्)

20 a) K4 कृष्णे च, K5 कृष्णेन, D6 वै कृष्णे — b) S निःशब्दा सर्वसैनिका (of 20d) — After 20ab, S ins

121* नेत्रैरनिमिषैः सर्वे प्रेक्षन्ते स्म युधिष्ठिरम् ।

[T1 G4 M1 4 सर्वं T2 G2 3 M5 प्रेक्ष्यते G2 त (for स्म)]

— d) B2 निःसंज्ञा (for निःशब्दास्) Ś1 Ko 1 निःशब्दस्त्वपरोभवत्; S धार्तराष्ट्र(G3 °ष्ट्रीं)चमू प्रति (= 20b)

21 a) Da D5 7 8 क्रूरा, Dn D4 चीरा (for दूराद्) — b) T1 G2 4 °राष्ट्रा ससैनिका — c) Da2 D5 च (for स) — d) Ś1 Ko 3 5 D1-3 T G M1 2 4 5 नैषोस्ति, K1 नैशोस्ति, K2 4 B Da2 Dn D4 5 7 8 M3 Co एषो हि, D6 ह्येषोस्ति K4 कुलपांशुल, B °पाशन, Ca °पापण

22 a) K3 B1-3 Da2 D1 2 5 इहाभ्येति, D4 इवान्वेति — b) D1 राजायं K1 2 5 B1 2 4 Da2 Dn D1 4 5 7 8 Co भीष्ममंतिक, K4 B3 D3 6 °मतिके, G2 भीममंतिकात् — c) K3 5 D2 8 ससोदर्य — d) Ś1 K1 °णार्थ, D3 °णार्थी, D8 °णार्थे K5 प्रचायत (sic), T G उपागत, M इहागत (for प्रयाचक)

23 a) K1 नाथ, D1 योधे, T2 नाथै — b) B Da2 Dn1 D4 5 7 8 पाडुपुत्रे (for पाण्डवे च) — d) Ś1 Ko 1 B3 भीतस्त्वभ्येति, K2-5 B2 D2 6 भीतिरभ्येति, D1 भीतश्चाभ्येति, D8 भीतो ह्यभ्येति, D5 भीतो भवति (for भीतोऽभ्येति च) K2 3, 5 D2 पाडव, D5 पाडव S धृष्टद्युम्ने च सात्य(G2 °त्वि)कौ

24 a) D6 भूय, Co नूनं (as in text) — b) K2 D3 6 T G2 4 जात सप्रथि(G2 °स्थि)तो, K3 5 D2 जात उत्पत्स्यते, K4 B Da Dn D4 5 7 8 जातोय प्रथितो (D7 °ते), M जात सम्प्रथितो K3 D2 तथा (for भुवि) — c) K4 D2 तथास्य, S (except M3) यदस्य — d) Da1 अल्पमन्वस्य (sic)

ततस्ते क्षत्रियाः सर्वे प्रशंसन्ति स्म कौरवान् ।
हृष्टाः सुमनसो भूत्वा चैलानि दुधुवुः पृथक् ॥ २५
व्यनिन्दन्त ततः सर्वे योधास्तत्र विशां पते ।
युधिष्ठिरं ससोदर्यं सहितं केशवेन ह ॥ २६
ततस्तत्कौरवं सैन्यं धिक्कृत्वा तु युधिष्ठिरम् ।
निःशब्दमभवत्तूर्णं पुनरेव विशां पते ॥ २७
किं नु वक्ष्यति राजासौ किं भीष्मः प्रतिवक्ष्यति ।
किं भीमः समरश्लाघी किं नु कृष्णार्जुनाविति ॥ २८
विवक्षितं किमस्येति संशयः सुमहानभूत् ।
उभयोः सेनयो राजन्युधिष्ठिरकृते तदा ॥ २९
स विगाह्य चमूं शत्रोः शरशक्तिसमाकुलाम् ।
भीष्ममेवाभ्ययात्तूर्णं भ्रातृभिः परिवारितः ॥ ३०
तमुवाच ततः पादौ कराभ्यां पीड्य पाण्डवः ।
भीष्मं शांतनवं राजा युद्धाय समुपस्थितम् ॥ ३१

युधिष्ठिर उवाच ।

आमन्त्रये त्वां दुर्धर्ष योत्स्ये तात त्वया सह ।
अनुजानीहि मां तात आशिषश्च प्रयोजय ॥ ३२

भीष्म उवाच ।

यद्येवं नाभिगच्छेथा युधि मां पृथिवीपते ।
शपेयं त्वां महाराज पराभावाय भारत ॥ ३३

C 6 1565
B 6 43 38
K 6 43 40

---

25 S om ( hapl ) 25–26 — $^{a}$) $K_4$ B $Da_2$ $Dn_2$ $D_{4\ 5\ 7\ 8}$ सैनिका॰, $Dn_1$ $D_{1.\ 8}$ कौरवा॰ ( for क्षत्रिया॰ ) — $^{b}$) $D_1$ प्रशशसुस्तु सैनिका — $^{c}$) $K_{3\ 5}$ $D_2$ दृष्ट्वा ( for हृष्टा॰ ) $Ś_1$ $K_{0-2}$ सर्वे ( for भूत्वा ) — $K_{0-2}$ om ( hapl ) $25^{d}$–$26^{a}$ — $^{d}$) $K_4$ $B_1$ $Da_2$ $Dn_2$ $D_{1\ 4\ 5\ 7}$ Ca चेलानि $B_1$ दुदधु॰, Ca दुधुवु॰ ( as in text ) $D_{1\ 3}$ च ह ( for पृथक् ) $D_3$ वचास्यूचु॰ पृथक्पृथक्

26 S om 26, $K_{0-2}$ om $26^{a}$ ( cf v l 25 ) — $^{a}$) $Ś_1$ व्यनिंद स, $K_{3\ 5}$ $D_2$ व्यनद् स, $D_1$ व्यनदश्च, $D_6$ व्यनिंदश्च, $D_3$ विनिंदतस् $D_3$ तथा ( for तत॰ ) $K_4$ योधा ( for सर्वे ) — $^{b}$) $K_4$ सर्वे ( for योधास् ) $K_5$ $D_5$ तव ( for तत्र ) — $^{c}$) $K_{1\ 3\ 5}$ $Da_1$ $D_{1-3\ 6}$ ससौदर्यं — $^{d}$) $K_{0-2}$ $D_{1.\ 3\ 6}$ हि, $K_5$ B $Da_2$ Dn $D_{4\ 5\ 7\ 8}$ तु ( for ह )

27 $^{a}$) $K_{1\ 5}$ $B_{1\ 3}$ S तु ( for तत् ) S नृपते ( for कौरव ) T G $M_4$ सेना ( for सैन्य ) $D_6$ समागतस्तु कौरव्य — $^{b}$) $Ś_1$ $D_1$ $M_{1\ 3\ 5}$ [अ]थ, $K_{0\ 3\ 5}$ $D_{2\ 3}$ स्म, $K_1$ स ( sic ), $G_2$ च, $G_3$ नु ( for तु ) $D_5$ कृष्णार्जुनयुधिष्ठिर, $D_6$ ॰सैन्य तत्र युधि॰ — $^{c}$) M राजन् ( for तूर्णं ) $T_1$ G निःशब्दा समभूद्राजन्, $T_2$ निःशब्दा भूश्च सहसा — $T_1$ om ( ? hapl ) $27^{d}$–$36^{c}$ — $^{d}$) S ( $T_1$ om ) दृष्ट्वा प्राप्तं च पाण्डव

28 $T_1$ om. 28 ( cf v l 27 ) — $^{b}$) $D_6$ भीष्म॰ किं ( by transp ) $K_5$ प्रवदिष्यति, $D_{3\ 8}$ प्रविवक्ष्यति — For $28^{ab}$, S ( $T_1$ om ) subst

122* किं नु वक्ष्यति राजासौ धर्मपुत्रो युधिष्ठिर ।
किं नु वक्ष्यति भीष्मोऽसौ भरताना धुरधर ।
[ ( L 2 ) $G_4$ भारताना ]

— $^{c}$) $Ś_1$ $K_5$ $G_{2\ 3}$ भीष्म॰ ( for भीम ) $K_3$ $D_{1\ 2}$ समरे श्लाघी — $^{d}$) $Dn_1$ $D_{7\ 8}$ $G_4$ किं तु $Ś_1$ $K_{0-2}$ $B_3$ $D_1$ ॰नावपि

29 $T_1$ om 29 ( cf v l 27 ) — $^{a}$) $T_2$ विवक्षा तु, Cc क्षितं ( as in text ) — $^{b}$) $D_1$ तु ( for सु ) — $^{d}$) $D_6$ सदा

30 $T_1$ om 30 ( cf v l 27 ) — $^{a}$) $K_2$ B Da Dn $D_{4\ 6\ 7\ 8}$ सोवगाह्य, $K_4$ सवि॰, $K_5$ $D_1$ विगाह्य च, $M_2$ अविगाह्य, $M_5$ सावि॰ — $^{b}$) $K_{0\ 1\ 5}$ $B_1$ $Da_1$ $T_2$ ॰समाकुल — $^{d}$) = $83^{d}$

31 $T_1$ om 31 ( cf v l 27 ) — $^{a}$) $G_1$ उवाच च ( for तमुवाच ) Da $D_5$ तदा ( for तत ) S ( $T_1$ om ) धीमान् ( for पादौ ) — $^{b}$) S ( $T_1$ om ) पादौ स ( for कराभ्यां ) $D_{1\ 3}$ गृह्य ( for पीड्य ) — $^{d}$) $K_{2-5}$ Da $D_{3-5}$ समवस्थित, $B_3$ समुपा॰

32 $T_1$ om 32 ( cf v l 27 ) $D_{3\ 6}$ $G_{1\ 4}$ om the ref — $^{a}$) $Ś_1$ $K_{1.\ 2}$ $T_2$ $G_{2\ 4}$ $M_{1\ 3}$ त्वा ( for त्वा ) — $^{b}$) $K_3$ $D_2$ तावत् ( for तात ) B Da Dn $D_{4\ 5\ 7\ 8}$ त्वया योत्स्यामहे सह, $D_{1\ 3}$ S ( $T_1$ om ) त्वया योत्स्याम्यह सह ( $T_2$ रणे ) — $^{c}$) $Ś_1$ $M_2$ मा, $D_3$ मे ( for मां ) Dn तत्र, S ( $T_1$ om ) राजन् ( for तात ) — $^{d}$) B Da Dn $D_{4\ 5\ 7\ 8}$ आशिषश्चैव योजय, $D_6$ अशेषश्चानुयोजय ( sic ), $G_{2\ 3}$ आशिष्यश्च प्रयो॰ — After 32, S ( $T_1$ om ) ins

123* जयेय च रिपून्सर्वाननुज्ञातस्त्वयानघ ।
युध्यन्त मा रणे वीर त्वमनुज्ञातुमर्हसि ।
[ (L 1) = $64^{cd}$ — (L 2) $M_{1\ 5}$ ॰ध्यातु॰ ( for ॰ज्ञातु॰ ) ]

प्रीतोऽस्मि पुत्र युध्यस्व जयमाप्नुहि पाण्डव ।
यत्तेऽभिलषितं चान्यत्तदवाप्नुहि संयुगे ॥ ३४
व्रियतां च वरः पार्थ किमस्मत्तोऽभिकाङ्क्षसि ।
एवं गते महाराज न तवास्ति पराजयः ॥ ३५
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ॥ ३६
अतस्त्वां क्लीववद्वाक्यं ब्रवीमि कुरुनन्दन ।
हृतोऽस्म्यर्थेन कौरव्य युद्धादन्यत्किमिच्छसि ॥ ३७

युधिष्ठिर उवाच ।

मन्त्रयस्व महाप्राज्ञ हितैषी मम नित्यशः ।
युध्यस्व कौरवस्यार्थे ममैष सततं वरः ॥ ३८

भीष्म उवाच ।

राजन्किमत्र साह्यं ते करोमि कुरुनन्दन ।
कामं योत्स्ये परस्यार्थे ब्रूहि यत्ते विवक्षितम् ॥ ३९

युधिष्ठिर उवाच ।

कथं जयेयं संग्रामे भवन्तमपराजितम् ।
एतन्मे मन्त्रय हितं यदि श्रेयः प्रपश्यसि ॥ ४०

भीष्म उवाच ।

न तं पश्यामि कौन्तेय यो मां युध्यन्तमाहवे ।
विजयेत पुमान्कश्चिदपि साक्षाच्छतक्रतुः ॥ ४१

---

33 = (var) 48, 65, 74 T1 om 33 (cf v l 27) — $^{a}$) B1 Da Dn1 D5 7 8 नाधिगच्छेथा, S (T1 om) नाभिगच्छेस्त्व — $^{b}$) D1 युद्धे S युद्धाय कृतनिश्चय॰ (= 6 24 $37^{d}$) — $^{c}$) Ś1 K1 T2 M2 त्वा (for त्वा) B1 महाबाहो, D8 महाभाग — $^{d}$) Ko B8 D6 Cd पराभवाय, Ca c ॰भावाय (as in text) Ko-2 D1 T2 पाडव (for भारत)

34 T1 om 34 (cf v l 27) D1 om (hapl) $34^{ab}$ — $^{a}$) K2 B1 2 Dn1 D3 प्रीतोह K4 B3 Da D5 राजन् (for पुत्र) — $^{b}$) Ko 1 भारत (for पाण्डव) — G2 om (? hapl) $34^{cd}$ — $^{c}$) Ko यत्तोभिलषित, K5 D2 8 (before corr) यत्तेभिलिखित, M1-3 5 ततोभिलषित Da1 त्वान्यत् — $^{d}$) G1 3 पाडव (for संयुगे)

35 T1 om 35 (cf v l 27) — $^{a}$) K1 श्रयता (corrupt), D1 G1 4 प्रीयता, D8 वृयतां, T2 जयताच् D8 च पर॰, T3 च पर, G4 च वर D6 वियता वर पार्थाय — $^{b}$) K4 T2 ॰वांछसि, B2 8 D8 ॰काक्षति, B4 ॰कांक्षित, G1 3 ॰कांक्षसे K3 5 D2 किं काक्ष( K5 ॰क्ष्य )सि यथेप्सित, D6 किमस्मानभि॰, G4 किं त्व मत्तोभि॰ — $^{c}$) = $50^{c}$ D8 एव कृते, Ca c d एव गते (as in text) — $^{d}$) S (T1 om) युद्धादन्यत्कि ( M4 ॰न्य कि )मिच्छसि

36 = 51, 66, 77 T1 om $36^{abc}$ (cf v l 27) — $^{b}$) D3 अर्थो दासो M2 कर्हिचित् K3 5 D2 6 नार्थो दासो हि ( K3 ॰स्य, K5 ॰सोस्ति ) कस्य॰ — $^{c}$) S (T1 om) एतत् (for इति) Ś1 मत्वा, Da1 सत्यो, Ca सत्य (as in text) — $^{d}$) M1-3 5 बद्धो ह्यर्थेन

37 $^{a}$) Cf $52^{a}$, $67^{c}$, $78^{c}$ Ś1 M4 अतस्त्वा, K3 अतस्त्व, B1 2 Dn2 D4 7 8 यतस्त्वा, Da D5 ततस्त्वा — $^{c}$) Cf $51^{d}$, $66^{d}$, $77^{d}$, $80^{d}$ Ś1 K1 2 4 B Da Dn D4 5 7 8 भृतो; Ko यद्धो, K3 D1-3 6 M4 वृतो (for हृतो) K5 D1 कौंतेय, Da Dn1 D4 5 7 8 कौरव्यैर् (for कौरव्य) — $^{d}$) = $50^{d}$, $52^{b}$, $67^{d}$, $76^{d}$, $78^{d}$

38 $^{a}$) K2 D3 M2 महाबाहो, Da D5 ॰भाग, Dn ॰राज — $^{b}$) B Da Dn D4 5 7 8 हितार्थी (for हितैषी) D6 निश्चय॰ (for नित्यश) — $^{c}$) = $53^{c}$ Da Dn D4 5 कौरवार्थे वै (for ॰वस्यार्थे) — $^{d}$) Ś1 K3-5 D1. 2 एष मे, Ko 1 D6 एष ते (for ममैष) K4 दीयता (for सततं) B1 वच

39 $^{a}$) Ś1 कुरूणा, K5 किमसि (for किमत्र) K4 Da1 Dn D4 5 8 सह्य ते, K5 D1 साहाय्य (for साह्य ते). Ca c cite सह्य — $^{b}$) K5 कुल॰ (for कुरु॰). — For $39^{ab}$, S subst

124* मन्त्रयिष्याम्यहं राजन्यच्च ते हितमुत्तमम् ।

— After $39^{ab}$, D4 *repeats* $37^{c}$–$38^{d}$ — $^{c}$) D1 महाबाहो (for परस्यार्थे) Cd cites परस्य (as in text) — $^{d}$) T1 G यत्ते मनसि वर्तते

40 $^{ab}$) = $56^{cd}$ D1 युधिष्ठिरोय सग्रामे भवत्वेषोपराजित॰ — $^{c}$) K4 G3 एव मे, T2 एतत्ते K5 मन्त्रविहित, G2 मन्त्रसहित — $^{d}$) K5 D2 6 8 प्रपश्यति, M प्रवक्ष्यसि

41 $^{a}$) Ś1 सग्रामे, M कौरव्य (for कौन्तेय) K4 न शक्त तात पश्यामि — $^{b}$) M2 मा (for मा) D1 युध्यन्महाहवे, D6 युध्यति चाहवे K4 समरे यो जयेत माम् — $^{c}$) K5 विजयेत्पुरुष कश्चिद् — $^{d}$) Ś1 यदि

युधिष्ठिर उवाच ।

हन्त पृच्छामि तस्मात्त्वां पितामह नमोऽस्तु ते ।
जयोपायं ब्रवीहि त्वमात्मनः समरे परैः ॥ ४२

भीष्म उवाच ।

न शत्रुं तात पश्यामि समरे यो जयेत माम् ।
न तावन्मृत्युकालो मे पुनरागमनं कुरु ॥ ४३

संजय उवाच ।

ततो युधिष्ठिरो वाक्यं भीष्मस्य कुरुनन्दन ।
शिरसा प्रतिजग्राह भूयस्तमभिवाद्य च ॥ ४४

प्रायात्पुनर्महाबाहुराचार्यस्य रथं प्रति ।
पश्यतां सर्वसैन्यानां मध्येन भ्रातृभिः सह ॥ ४५
स द्रोणमभिवाद्याथ कृत्वा चैव प्रदक्षिणम् ।
उवाच वाचा दुर्धर्षमात्मनिःश्रेयसं वचः ॥ ४६
आमन्त्रये त्वां भगवन्योत्स्ये विगतकल्मषः ।
जयेयं च रिपून्सर्वाननुज्ञातस्त्वया द्विज ॥ ४७

द्रोण उवाच ।

यदि मां नाभिगच्छेथा युद्धाय कृतनिश्चयः ।
शपेयं त्वां महाराज पराभावाय सर्वशः ॥ ४८

C 6 1581
B 6 43 53
K 6 43 55

---

( for अपि ) B Da2 D1 8 6 S साक्षादपि ( by transp ) Ś1 K0-3 5 D2 6 शचीपति , D1 पुरंदर ( for शतक्रतु ) — c) B [s]पि ( for मे )

42 K5 om 42-43 — a) D1 हित ( for हन्त ) Ś1 K0 1 T2 त्वा ( for त्वा ) K4 B Da Dn D4 6 7 8 तस्मात्पृच्छाम्यहं तु त्वा ( K4 B3 भूत्वा, Da1 तु त्वा, D5 तुभ्य ) — b) G2 युधिष्ठिर ( for पितामह ) — c) Ś1 K0-3 D2 6 G1 M5 वधोपाय , D1 जयाय हि ( for जयोपाय ) Ś1 वदाम्यस्त्वम् , K0 वदाद्य त्वम् , K1 वदादत्वाम् ( corrupt ), S हि मे ब्रूहि ( for ब्रवीहि त्वम् )

43 K5 om 43 ( cf v l 42 ) B1 om the ref — a) = 59a K1 न शत्रु , K2 4 B2 4 Da Dn2 D4 6 7 8 न स्म त , D1 न शक्त , T2 M2 न शत्रूंस् , G2 न शक्य — After 43a', S ins ( for lines 2-6 cf 6 103 71c-73d )

125* अयुध्यमानं सहसा सौहृदेन परिप्लुतम् ।
न्यस्तशस्त्रं निरुद्योगं हन्युर्मां शत्रवो युधि ।
निक्षिप्तशस्त्रे पतिते विमुक्तकवचे तथा ।
द्रवमाणे च भीते च तवास्मीति च यो वदेत् ।
स्त्रियां स्त्रीनामधेये च विकले चैकपुत्रके । [5]
अप्रसूते च हीने च न युद्धं रोचयाम्यहम् ।
इदं च गदितं पार्थ परमं व्रतमाहवे ।

[ ( L 1 ) G1 सगम्य , M सगत्या ( M2 °त्य ) — ( L 2 ) T1 G2-4 M5 मा ( for मा ) — ( L 4 ) T2 म्रियमाणे च हीने च ( for the prior half ) — ( L 5 ) G2 3 M4 5 स्त्रिय ( for स्त्रियां ) T G चैव पुत्रक ( T2 G2 °के ) — ( L 6 ) T1 G2 4 भीते ( for हीने ) M अप्रसूतेन ( M4 °नेन्य ) हीने च T2 करवा° ( for रोचया° ) — ( L 7 ) T2 G1 M2 गदिद ( for गदित ) ]

44 B1 2 4 Da Dn1 D5 7 G1 3 om. the ref — b) K0 1 4 5 B1 Dn D3 4 7 8 G1 3 M1 3-5 °नदन — c) S प्रतिगृह्याथ — d) Ś1 K0 1 3 5 D4 6 भूमौ ( for भूयस् ) D2 3 तद् ( for तम् ) D1 अभिवाद्य

45 a) Dn प्रागात् Ś1 K5 D6 महाबाहो , S महाराज — c) M1 3 5 सर्वभूताना — d) T G मध्ये त ( T2 तद्- ) ( for मध्येन )

46 Cf 72 — a) D6 °वाचेव — b) K0 च वै , K2 Da1 Dn1 D3 4 चाभि , B2 चैव , S चापि ( for चैव ) — c) K3 D2 युद्धे , K4 5 B Da D5 M1-4 राजा , D1 वाक्य , D6 युधि ( for वाचा ) K5 T2 M1 3-5 दुर्धर्ष — d) D1 तत ( for वच ) Ś1 K0 2 आत्मन ( K0 2 °चार्य ) श्रेयसे वच , K1 आचार्य श्रेयसेव च Ca cites निःश्रेयस

47 Cf 64, 73 Before 47, M ins युधिष्ठिर — a) K1 D3 अमन्त्रये Ś1 K1 G1 4 M त्वा , Da D5 [s]ह ( for त्वा ) M1-3 5 दुर्धर्ष ( for भगवन् ) — b) K3 °किल्बिष° , M4 5 °कल्मष — M5 om ( hapl ) 47c-64b. — c) K2 4 B Da Dn D4 6 7 8 कथं जये ( for जयेय च ) — d) Da1 शत्रुज्ञातस् ( for अनु° ) K3 D1-3 6 G2 त्वयानघ

48 = ( var ) 33, 65, 74 M5 om 48 ( cf v l 47 ) — a) Ś1 G2 मा ( for मा ) B2 Da Dn D4 6 7 8 नाधिग ( Da1 °पृ ) च्छेथा , S ( M5 om ) नाभिगच्छेस्त्व — c) Ś1 K1 M4 त्वा ( for त्वा ) Da D5 महाभाग — d) K3 D1 भारत ; B3 4 सर्वत ; T G नित्यश

## ५०

धृतराष्ट्र उवाच ।

तथा प्रतिसमादिष्टः कलिङ्गो वाहिनीपतिः ।
कथमद्भुतकर्माणं भीमसेनं महाबलम् ॥ १
चरन्तं गदया वीरं दण्डपाणिमिवान्तकम् ।
योधयामास समरे कलिङ्गः सह सेनया ॥ २

संजय उवाच ।

पुत्रेण तव राजेन्द्र स तथोक्तो महाबलः ।
महत्या सेनया गुप्तः प्रायाद्भीमरथं प्रति ॥ ३
तामापतन्तीं सहसा कलिङ्गानां महाचमूम् ।
रथनागाश्वकलिलां प्रगृहीतमहायुधाम् ॥ ४
भीमसेनः कलिङ्गानामार्छद्भारत वाहिनीम् ।
केतुमन्तं च नैषादिमायान्तं सह चेदिभिः ॥ ५
ततः श्रुतायुः संक्रुद्धो राज्ञा केतुमता सह ।
आससाद रणे भीमं व्यूढानीकेषु चेदिषु ॥ ६
रथैरनेकसाहस्रैः कलिङ्गानां जनाधिपः ।
अयुतेन गजानां च निषादैः सह केतुमान् ।
भीमसेनं रणे राजन्समन्तात्पर्यवारयत् ॥ ७
चेदिमत्स्यकरूपाश्च भीमसेनपुरोगमाः ।

---

$K_5$ भीमस्य सु — [c]) $D_1$ सक्षय°, $T_1$ $G_4$ प्रेक्षण° (for प्रक्षय°) — [f]) $K_{0-3\ 5}$ भयावह, $K_3$ $D_{2\ 6}$ महाबलं, $D_8$ दुरासद (for भयानकम्)

Colophon — *Sub-parvan* Omitting sub-parvan name, $K_{0-2}$ mention only द्वितीययुद्धदिवस, $K_4$ Da $Dn_1$ $D_5$ द्वितीयेह्नि, $K_5$ द्वितीयदिवस, $B_3$ $D_6$ द्वितीयदिवससमाप्त($D_6$ °सयुद्ध), $M_4$ द्वितीयाह्निक — *Adhy name* $K_4$ धृष्टद्युम्नपराजय, Da $Dn_1$ $D_5$ धृष्टद्युम्नयुद्ध — *Adhy no* (figures, words or both) $Da_2$ 11, $Dn_2$ $M_5$ 51, $D_1$ $M_{8\ 4}$ 50, $D_5$ 53, T G 48, $M_{1\ 2}$ 49 (as in text) — *Śloka no* $Dn_2$ $D_5$ 41

## 50

1 [a]) $K_{0-2}$ $M_{1\ 2}$ तत, $D_1$ यथा, $T_2$ $G_{1\ 3}$ तदा (for तथा) $T_1$ $G_{2\ 4}$ मम पुत्रसमादिष्ट, Cal ed पुत्रेण मम सप्रोक्त° — [b]) $K_{0-2}$ $M_3$ कालिंगो — [d]) $T_2$ $G_{1\ 3}$ $M_{1\ 2}$ महारथं (for °बलम्)

2 [a]) $K_{0-2}$ वर्तंत (for चरन्त) $Ś_1$ $K_{0-2\ 5}$ समरे (for गदया) $M_4$ वीर — [b]) $Ś_1$ $K_{0-3}$ $B_{1-3}$ $D_{1-3\ 6}$ दण्डहस्तम्, $K_5$ हस्तदण्डम् — [d]) $Ś_1$ **ग°, $K_{0-2\ 4}$ B $Da_2$ $Dn_2$ $D_{5\ 7}$ कालिंग° $T_1$ $G_4$ transp सह and सेनया $Ś_1$ सर्वे (for सह)

3 [ab]) $D_1$ दुर्योधनेन राजेंद्र तथादिष्टो महाबल — [c]) $K_{4\ 5}$ B Da Dn $D_{1\ 4\ 5\ 7\ 8}$ $M_{3\ 5}$ युक्त°, $G_2$ गुप्त (for गुप्त) — [d]) $Ś_1$ $K_1$ प्रोयाद्

4 [a]) $K_{1\ 5}$ $Dn_1$ (by corr) $D_6$ तमा° $B_{1\ 2\ 4}$ $Dn_2$ $D_{1\ 3\ 4\ 7\ 8}$ S महतीं (for सहसा) — [b]) $G_2$ कालिंगानां — [c]) $K_{3-4}$ $D_2$ $G_1$ $M_2$ रथा नागाश्व°, B Da Dn $D_{1\ 3-5\ 7\ 8}$ $M_{3-5}$ रथाश्वनाग°, $G_3$ (*inf lin* as in text) रथनागा च कलिलां — [d]) S °महागद

5 [a]) $D_1$ भीमस्तत्र (for °सेन) — [b]) $K_5$ मान° छेद् (hypermetric), $T_2$ छिंदन्; $M_2$ मछेद्, Cc.d मार्छेद् (as in text) $Ko_{\ 2}$ भरत — [c]) $T_2$ नैषादीन्; $M_2$ °पादीम् — [d]) $Ś_1$ $K_{0-2\ 4}$ सयांत, $D_8$ संसक्त, S आसाद्य ($T_2$ समन्यु°) (for आयान्तं)

6 [a]) $K_5$ तत शतायु सनद्धो — [b]) $D_1$ $T_2$ $M_{3-5}$ राजन्, $M_{1\ 2}$ राजा (for राज्ञा) — After $6^{ab}$, $Ś_1$ reads $7^c$, *repeating* it in its proper place — [d]) $K_4$ B D (except $D_{2\ 3\ 6}$) व्यूढानीकेन ($K_4$ °पु) दंशित, S °नीको महाबल

7 [a]) S रथस्थै($M$ °थैस्तै)र्बहुसाहस्रै — [b]) $G_2$ कालिंगानां $Ś_1$ $K_{3\ 4}$ $D_6$ नराधिप, $B_{1\ 2}$ $Da_1$ जनाधिप, $B_3$ S जनेश्वर ($T_2$ °र), $D_{1-3}$ नराधिप — [c]) $G_1$ गदाना $T_2$ युयुधेनेन गदिना — [d]) $D_1$ केतुना (for केतुमान्) — [e]) $Dn_2$ $D_{4\ 8}$ महाराज (for रणे राजन्) — [f]) $K_{2\ 3}$ $D_{1\ 4}$ $M_4$ पर्यवारयन्

8 [a]) $Ś_1$ $K_{3-5}$ B D (except $D_{1\ 8}$) °करूपास्तु, $K_{0-2}$ °करूपाश्च, S °क($M_{1\ 2}$ °कु)रूशाश्च — [b]) $Ś_1$

अभ्यवर्तन्त सहसा निपादान्सह राजभिः ॥ ८
ततः प्रवृत्ते युद्धं घोररूपं भयानकम् ।
प्रजानन्न च योधान्स्वान्परस्परजिघांसया ॥ ९
घोरमासीत्ततो युद्धं भीमस्य सहसा परैः ।
यथेन्द्रस्य महाराज महत्या दैत्यसेनया ॥ १०
तस्य सैन्यस्य संग्रामे युध्यमानस्य भारत ।
बभूव सुमहाञ्शब्दः सागरस्येव गर्जतः ॥ ११

अन्योन्यस्य तदा योधा निकृन्तन्तो विशां पते ।
महीं चक्रुश्चितां सर्वां शशशोणितसंनिभाम् ॥ १२
योधांश्च स्वान्परांश्चापि नाभ्यजानञ्जिघांसया ।
स्वानप्याददते स्वांश्च शूराः समरदुर्जयाः ॥ १३
विमर्दः सुमहानासीदल्पानां बहुभिः सह ।
कलिङ्गैः सह चेदीनां निपादैश्च विशां पते ॥ १४
कृत्वा पुरुषकारं तु यथाशक्ति महाबलाः ।

C 6 2249 B 6 54 15 V 6 54 15

---

Ko–2 °सेनपुरोगमान् (Ś1 °मा), D1 S °सेनपदानुगा, D3 °सेनपुरःसरा — c) D1 अभ्यवर्षंत Ś1 K3 D5 सहिता (for सहसा) D3 S अभ्यधावंत समरे — d) Ko–3 D1 6 निपादा, S निपादैः

9 a) Da1 प्रवर्तते — b) Ś1 K D2 3 6 M1 2 4 भयावह (for °नकम्) — After 9ab, M1–3 5 ins (cf 16)

165* सर्वे कलिङ्गकाश्चैव सन्निवृत्तेषु चेदिषु ।
स्वबाहुबलमास्थाय अभ्यवर्तन्त पाण्डवम् ।

— c) Ko 2 प्रजानन्नपि, K3 D2 3 प्राजानन्न च, K4 B1 3 Da प्रयाधन च, B2 4 Dn2 D4 7 8 प्रधावतां च, Dn1 D5 प्रयोधन च, T G परेषां तत्र, M1–3 5 शूराणां तत्र K3 D2 3 6 योधा स्वान् (D6 °धान्तान्), K4 B Da Dn D4 6 7 8 S (except M4) योधानां K1 प्रजाननप्रयोधा तु, D1 तावकाना परेषा च

10 a) Ś1 भीमम् (for घोरम्) S घोररूप ततो (M1–3 °घोर्) युद्ध — b) Dn2 भीमस्य सह सायकैः, D1 भीमस्य रिपुभि सह — d) K3 D2 6 महत्या सेनया नव (K3 °या सह)

11 a) D5 संग्रासे, T1 G समरे (for संग्रामे) — b) Da1 D6 युद्धमा° — c) K2 B3 M3 5 सुमहाशब्द, D1 °हान्नाद Ś1 बभूवु सुमहाञ्छब्दा — d) Da1 सागरस्यैव K3 5 D2 6 दीर्यत, K4 वर्जत, B Da Dn1 D5 वर्धत, Dn2 D4 8 सर्वत, D7 पर्वणि, T1 G निस्वन, M1 गर्जित (for गर्जत)

12 a) Ko 3 B2 D3 T2 G1 3 M1 2 अन्योन्य स, K1 °न्य स, K3 D2 6 °न्य ते, D1 °न्य च (for °न्यस्य) Ś1 Ko–3 6 D2 6 महा, B1 ततो, M2 तथा (for तदा) K4 अन्योन्य सहसा योधा — b) Ś1 Ko–2 विक्कि(Ś1 °क)रतो, K5 B2 D1 M2 विकर्षतो (K5 °ते), T1 G4 विकत्थतो, T2 विकृन्तते, G1 3 विकर्तते, G3 विकर्तत, M1 3–5 विकर्तंतो (for निकृन्तन्तो) K6 परस्पर (for विशां पते) — c) Ś1 T2 च ता, B1 2 चित, Ca चिता (as in text) M1, 3–5 जिवासत (for चिता सर्वां) K5 महतीं चक्रुश्चिता सर्वा (hypermetric) — d) Ko–2 रक्त लोहितसनिभा; K3 5 D2 3 6 शश(K5 शास)लोहित°, K4 B3 Dn2 D1 4 7 8 T G M2 मांसशोणितसनिभां (D3 °कर्दमा, T1 G2 4 M3 कर्दमं), M1 शतशोणित°, M4 शवशोणित°

13 a) K3 D2 3 6 योधाश्च स्वान्, K5 योधाश्चास्वान, Da Dn1 D5 योधान्स्वांश्च, Dn2 D1 4 7 8 M1 योधा न्स्वान्स्वान्; T1 G M3 5 योधान्स्वान्वा, T2 M2 4 योधा स्वान्वा (M2 स्वांश्च) Ko–2 पराश्चैव, B3 D (except D2 3 6) M2 पराश्चापि Ś1 योधाश्च स्वापराश्चापि — b) K5 नाभिजानन्, B2 Dn3 D4 7 न व्यजानन्, D3 न जानत — D5 G1, 3 om 13cd — c) Ś1 Ko–3 D2 3 6 M स्वात्र, K4 B3 Da2 स्वाश्च, Dn3 D7 8 तु स्वा, D4 तुष्टा (for स्वांश्च) K5 स्वान्यथा ददृशु सत्ते, D1 स्वानप्याजघ्निरे शूरा, T1 G4 °प्याददतेसाक, T2 समाजघ्नुश्च ते तत्र, G2 स्वकानप्याददंसाक — d) Ko–3 Dn1 D2 3 6 T2 G2 परम° (for समर°) D1 भीषणा नदतो मुहु

14 d) K2 विपादैश्च, Da D5 निषादैश्च

15 b) K3 D2 6 यथावीर्यं, K5 Cd यथाशक्ति, T1 G4 यथाशक्तिं Ś1 Ko–3 5 D2 6 यथाबल, K4 D1 महाबल, Da1 यथाबल (for महाबला) — M1 4 om (hapl) 15c–17b — c) Ś1 Ko–3 5 D2 6 समासाद्य, K2 समासाद्य (for परित्यज्य) — d) K1 D1 6 G2 स न्यवर्तत, Da1 D2 T2 सन्यवर्तत, D3 सनिवर्तत T1 G4 चेदत, G2 चोदय Cd as in text

भीमसेनं परित्यज्य संन्यवर्तन्त चेदयः ॥ १५
सर्वैः कलिङ्गैरासन्नः संनिवृत्तेषु चेदिषु ।
स्वबाहुबलमास्थाय न न्यवर्तत पाण्डवः ॥ १६
न चचाल रथोपस्थाद्भीमसेनो महाबलः ।
शितैरवाकिरन्बाणैः कलिङ्गानां वरूथिनीम् ॥ १७
कलिङ्गस्तु महेष्वासः पुत्रश्चास्य महारथः ।
शक्रदेव इति ख्यातो जघ्नतुः पाण्डवं शरैः ॥ १८
ततो भीमो महाबाहुर्विधुन्वन्रुचिरं धनुः ।
योधयामास कालिङ्गान्स्वबाहुबलमाश्रितः ॥ १९
शक्रदेवस्तु समरे विसृजन्सायकान्बहून् ।
अश्वाञ्जघान समरे भीमसेनस्य सायकैः ।
ववर्ष शरवर्षाणि तपान्ते जलदो यथा ॥ २०
हताश्वे तु रथे तिष्ठन्भीमसेनो महाबलः ।
शक्रदेवाय चिक्षेप सर्वशैक्यायसीं गदाम् ॥ २१
स तया निहतो राजन्कलिङ्गस्य सुतो रथात् ।
सध्वजः सह सूतेन जगाम धरणीतलम् ॥ २२
हतमात्मसुतं दृष्ट्वा कलिङ्गानां जनाधिपः ।
रथैरनेकसाहस्रैर्भीमस्यावारयद्दिशः ॥ २३

---

16 With 16, cf 165* — M1 2 om 16 (cf v l 15) K0 1 om 16ᵃ–17ᵇ —ᵃ) K5 स तै, D1 भीम (for सर्वै) K3 D1–3 6 आसक्त; K5 आसत्तै, M3–5 मगधै, C0 आसन्न (as in text) T G1 3 4 सर्व(T2 °वै)कालिंगकाश्चैव; G2 सर्वान्कालिंगकाश्चैव —ᶜ) B2 °बलमाश्रित्य, D1 °बलसंपन्न —ᵈ) Ś1 K3 B1 3 4 Dn2 D1 3 4 7 8 M4 सन्य°, K2 5 D6 स न्यवर्त(K5 °र्तं)त, B2 D8 न न्यवर्तत, T1 G अभ्यवर्षत, T2 अभ्यवर्तत, M3 5 सन्यवर्तत K2 पाडव, K5 T G पांडव, M3 5 चेदय

17 K0 1 M1 2 om. 17ᵃᵇ (cf v l 15, 16) —ᵃ) M3–5 रथात्पार्थो (for रथोपस्थाद्) —ᶜ) K5 स तैर्, D1 शरैर्, D2 शतैर्, D6 सर्वैर् (for शितैर्) K4 5 B1 2 4 D1 8 S (except T2 M2) अवाकिरद् (D1 °द्), D4 7 अवकिरन् D1 सर्वा (for बाणै)

18 ᵃ) K4 B1 3 4 Da Dn D4 5 7 कालिंगस्तु; B2 D1 S क(B2 M1 3 का)लिंगश्च —ᵇ) K3 महाद्युते, K5 M2 °बल (for °रथ) —ᶜ) D3 शत्रुदेव K0 इवाख्यातो —ᵈ) पार्थिव (for पाण्डव) K4 पांडव जग्मतु शरै

19 ᵇ) K3 D2 6 S प्रगृह्य (for विधुन्वन्) Ś1 K0–2 रथिनां वर, D1 3 विपुलं धनु —ᶜ) M4 रोध° (for योध°) Ś1 कलिंग, K4 B D (except D2 3 6) कालिंग —ᵈ) D3 आस्थित

20 ᵃ) K5 D3 शत्रुदेवस्तु, B3 शक्रदेवोपि S (except M4) भीमस्य (for समरे). — S transp 20ᶜᵈ and 20ᵉᶠ —ᶜ) K1 अश्व B4 D (except D1–3 6) चतुरो (for समरे) S जघान चाश्वा(T2 साश्वा)न्समरे —ᵈ) K5 वीर्यवान् (for सायकै) — After 20ᶜᵈ, N ins

166* त दृष्ट्वा विरथ तत्र भीमसेनमरिंदमम् ।
शक्रदेवोऽभिदुद्राव शितैरवकिरञ्शरै ।
भीमस्योपरि राजेन्द्र शक्रदेवो महाबल ।

[ (L 1) K5 हताश्व च तथा दृष्ट्वा Da Dn D5 8 अरिंदम — (L 2) K5 D3 शत्रुदेवोभिदुद्राव, B3 Da Dn D5 शक्रदेवोपि दु° K3 D2 6 शतैर् Ś1 अवा°(for अव°) B Da Dn D1 4 5 7 8 किरत (B1 °स्तु, B3–4 °स्त) निशितै शरै — (L 3) K5 D3 शत्रुदेवो. ]

— D8 (following upon 166*) om (hapl) 20ᵉ–21ᵇ —ᵉ) Ś1 K3 5 D2 6 शरजालानि

21 ᵃ) S स हताश्वे (for हताश्वे तु) —ᶜ) K5 D3 शत्रु° (for शक्र°) —ᵈ) Ś1 सर्वसेक्या°, K0 2 3 D3 6 8 G M C0 सर्वसैक्या°, K1 D2 सर्वसैन्या°; T2 सर्वसैन्यहरां, Ca d °शैक्या° (as in text)

22 K2 om (hapl) 22ᵃᵇ —ᵃ) S गदया (for स तया) K0 1 गृहितो, K5 D1 3 S (except M2) [अ]भिहतो (for निहतो) G3 M3–5 राजा —ᵇ) B1 2 4 Dn2 D4 कालिंगस्य B3 D3 S क(B3 का) लिंगतनयो रथात् —ᵈ) D1 पपात (for जगाम) D1 धरणीतले, T1 G जगतीतलं

23 ᵃ) D1 तत कलिंगो राजेंद्र —ᵇ) Dn2 D4 कालिंगा° K2 जनाधिप; K5 S जनेश्वर°, Dn2 D4 महारथ° (for जनाधिप°) —ᵈ) Da Dn1 D1 5 8 °वारयन् G1 3 M3 5 दिश — After 23, S ins (cf 7ᶜᵈ)

167* अयुतेन गजानां च निषादै परिवारित ।

ततो भीमो महाबाहुर्गुर्वीं त्यक्त्वा महागदाम् ।
उद्ववर्हाथ निस्त्रिंशं चिकीर्षुः कर्म दारुणम् ॥ २४
चर्म चाप्रतिमं राजन्नार्षभं पुरुषर्षभ ।
नक्षत्रैरर्धचन्द्रैश्च शातकुम्भमयैश्चितम् ॥ २५
कलिङ्गस्तु ततः क्रुद्धो धनुर्ज्यामवमृज्य ह ।
प्रगृह्य च शरं घोरमेकं सर्पविषोपमम् ।
प्राहिणोद्भीमसेनाय वधाकाङ्क्षी जनेश्वरः ॥ २६
तमापतन्तं वेगेन प्रेरितं निशितं शरम् ।
भीमसेनो द्विधा राजंश्चिच्छेद विपुलासिना ।
उदक्रोशच्च संहृष्टस्त्रासयानो वरूथिनीम् ॥ २७
कलिङ्गस्तु ततः क्रुद्धो भीमसेनाय संयुगे ।
तोमरान्प्राहिणोच्छीघ्रं चतुर्दश शिलाशितान् ॥ २८
तानप्राप्तान्महाबाहुः खगतानेव पाण्डवः ।
चिच्छेद सहसा राजन्नसंभ्रान्तो वरासिना ॥ २९
निकृत्य तु रणे भीमस्तोमरान्वै चतुर्दश ।
भानुमन्तमभिप्रेक्ष्य प्राद्रवत्पुरुषर्षभः ॥ ३०
भानुमांस्तु ततो भीमं शरवर्षेण छादयन् ।
ननाद बलवन्नादं नादयानो नभस्तलम् ॥ ३१
न तं स ममृषे भीमः सिंहनादं महारणे ।
ततः स्वरेण महता विननाद महास्वनम् ॥ ३२

C 6 2270
B 6 54 36
K 6 54 36

---

24 [a]) Ko 1 भीमसेनो, Da Dn1 D5 अथ भीमो Ś1 महावेगो, K0–3 5 D2 3 6 °वेगा, D1 °वेगात् (for °बाहुर्) — [b]) K1 D1 3 त्यक्त्वा गुर्वीं (D1 मूर्ति) K4 B Da Dn D4 5 7 8 गदां त्यक्त्वा महाबल, S रथादा- (G1 °थमा) तुल्य हृष्टवत् — [c]) K0–3 D2 6 उद्ववाहा (K0 °र्हा) थ, K4 B3 उदकर्षच्च, B1 2 Da Dn1 D5 उदकर्षत्स (Da2 D5 °न्स), B4 Dn2 D4 7 8 उद्ववर्ह स, D1 आयार्थवद्ध (for उद्ववर्हाथ) Cc cites उदकर्षत्, Cop Cd उद्ववर्ह (as in text) K5 उद्ववर्हाम्यनिस्तृश (sic), D3 S निस्त्रिंशमाददे घोर — [d]) M3 चिकीर्षन् K3 D1 2 6 S दुष्करं (for दारुणम्)

25 [a]) Ś1 वर्म, B4 M5 कर्म K0 चर्मा*प्रतिम राजन् — [b]) Ś1 °र्षोर्षभ, K3 Da1 °न्सर्षभं K3 पुरुषर्षभं, K5 Dn2 D4 5 7 8 T1 G4 M पुरुषर्षभ°, D1 पुरुषोत्तम Cc cites आर्षभ, Cd चार्षभ — [c]) K4 B1–3 Da Dn1 D5 समछैरर्ध°, G1 3 नक्षत्रैश्चार्ध° — [d]) Ś1 D3 शातकौंभ°, K1 शतकौंभ°, K3 शांतकुंभ°, K5 शात- कौभ° B3 चित

26 [a]) K4 5 B Da Dn D4 7 कालिंगस्तु — [b]) Ś1 K0–2 Da1 D6 °ज्यामवसृज्य, B2 °गृह्यावमृज्य, D1 °ज्यां चात्र°, G2 °ज्यानप° K0–2 4 5 B1–3 Da Dn D1 3 5 S च, D3 स° (for ह) — [c]) K3 D2 6 प्रहृष्ट° (for प्रगृह्य) Ś1 K0 2–5 B4 D (except D1 3) T2 स (for च) S तीक्ष्णम् (for घोरम्) — [f]) K0 2 Da2 D1 3 वधकांक्षी, S जयकाङ्क्षी Ś1 K0 3 D2 3 जनेश्वर; B Da2 D1. 5 नरेश्वर, Da1 Dn D4 7 नरेश्वर°

27 [b]) K5 S प्रेषित D1 पूरित निशित शरै° — [c])
D2 महाराज (for द्विधा राजश्) — [d]) Ś1 K0 1 3 4 D1. 2 6 विमला°, K5 निशिता° (for विपुला°) — [e]) K1 2 उदक्रोशश्च; K3 D1 M4 °शश्च, B2 तदाक्रोशच्च T2 सहसा, M3 5 सक्रुद्धस् (for संहृष्टस्) — [f]) D1 ताप° (for त्रास°) B1 2 4 D (except D1–3 6) बलं तत्र (for वरूथिनीम्)

28 K4 om 28–29 — [a]) K5 B Da2 Dn2 D1 4 5 7 8 कालिंगो (B1 °गस्) K5 B2–4 D (except D2 3 6) S [ऽ]थ (for तु) — [b]) B1 2 4 D (except D2 3) S भीमसेनस्य — [c]) Ś1 प्रहि° — [d]) K1 शिलाचितान्, K3 Da Dn1 D1 5 °सितान्

29 K4 om 29 (cf v l 28) — [b]) K0 2 खग तानिव, D1 शरास्तस्य च (for खगतानेव) — [c]) S समरे (for सहसा) D1 सचिच्छेद महाराजन्

30 [a]) Ś1 निक्षिप्य; D3 निकृत्य M3–5 तरसा (for तु रणे) — [c]) Ś1 K0 2 3 5 D2 6 Cv अभिद्रुत्य, K1 अतिक्रम्य (sic), D1 3 S ततो भीम° (for अभिप्रेक्ष्य) — [d]) K3 D2–4 7 8 पुरुषर्षभ; K5 भरतर्षभ°; Da Dn1 D5 S पुरुषोत्तम°

31 T1 G4 om. (hapl ) 31[ab] B3 transp 31[ab] and 31[cd] — [a]) K0 भीम (for भीमं) S (T1 G4 om) भानुमानपि सक्रुद्ध° — [b]) K3 D2 6 ताडयन्, D1 चार्दयत् (for छाद°) K4 S शरवर्षैरवाकिरत् — [c]) K0 Da1 Dn1 D1 3 4 बलवान्, S सिंहवन् — [d]) S1 M1 4 5 छाद°, K2 नद° (for नाद°) T G1 2 4 M1 5 नभस्थल

32 [a]) K3. 4 B3 D1 2 6 स त न; K5 न त च; D3

तेन शब्देन वित्रस्ता कलिङ्गानां वरूथिनी ।
न भीमं समरे मेने मानुषं भरतर्षभ ॥ ३३
ततो भीमो महाराज नदित्वा विपुलं स्वनम् ।
सासिर्वेगादवप्लुत्य दन्ताभ्यां वारणोत्तमम् ॥ ३४
आरुरोह ततो मध्यं नागराजस्य मारिष ।
खड्गेन पृथुना मध्ये भानुमन्तमथाच्छिनत् ॥ ३५
सोऽन्तरायुधिनं हत्वा राजपुत्रमरिंदमः ।
गुरुभारसहस्कन्धे नागस्यासिमपातयत् ॥ ३६
छिन्नस्कन्धः स विनदन्पपात गजयूथपः ।
आरुग्णः सिन्धुवेगेन सानुमानिव पर्वतः ॥ ३७
ततस्तस्मादवप्लुत्य गजाद्भारत भारतः ।
खड्गपाणिरदीनात्मा अतिष्ठद्भुवि दंशितः ॥ ३८
स चचार बहून्मार्गानभीतः पातयन्गजान् ।
अग्निचक्रमिवाविद्धं सर्वतः प्रत्यदृश्यत ॥ ३९

---

न च त, S न तु त ( M1 3 5 तन् ) K5 वीर ( for भीम ) —$^{b}$) B1 4 महामृधे, B2 D1 3 महाहवे —$^{c}$) D1 8 शब्देन, S स्वनेन ( for स्वरेण ) —$^{d}$) K0 महास्वर, K3 महासुर, K5 B2 8 Dn2 D4 7 8 °स्वन, S °बल

33 $^{a}$) D3 नादेन ( for शब्देन ) B1 4 महता ( for वित्रस्ता ) —$^{b}$) G1 8 वरूथिनीं —$^{c}$) D1 भीम न ( by transp ) D6 transp भीमं and मेने K3 न मेने भीमसेन स —$^{d}$) K2 B Da Dn D4 5 7 पुरुषर्षभ, D1 पुरुषोत्तम, D8 भरतर्षभं

34 $^{a}$) T1 G4 तदा चरन्, T2 M तथा च तं, G1 3 तदा च त; G2 तदा चिर ( for ततो भीमो ) Da Dn1 D5 महानाद D8 °बाहुर् ( for °राज ) —$^{b}$) K2 4 B Dn2 D4 7 नर्दित्वा, K5 ननर्द, S विनद्य ( for नदित्वा ) K0 2 विपुल स्वरं; D1 T1 G1 3 4 M विपुलस्वनं, T2 विपुल बल —$^{c}$) K0 सासि, K5 सासिं ( for सासिर् ) K4 B Da Dn D3-5 7 8 सासिर्वेगवदाप्लुत्य, D1 °र्वेगात्पराक्रम्य, S °वेगात्समाप्लुत्य —$^{d}$) K1 D6 वारुणो°

35 $^{a}$) D1 मध्ये — After 35$^{ab}$, Dn2 D4 ins

168* ततो मुमोच कालिङ्ग शक्तिं तामकरोद्द्विधा ।

—$^{c}$) K3 D1 2 6 पृथुधारेण, Da Dn1 D5 S पृतना मध्ये Co cites मध्ये ( as in text ) —$^{d}$) K0 सानु° ( for भानु° ) Ś1 अथाच्छितान् ( sup lin °नात् ), K3 D2 ( by corr ) 6 अथाच्छिनत्, K4 अथाच्छिनोत्

36 K3 om ( hapl ) 36 T2 om 36$^{ab}$ —$^{a}$) K1 D8 6 ( by corr ) सोत्तरा° Ca c d cite अन्तरायुधिन S उत्तरा( M6 °र )युधिनश्चा( M3 5 °श्चि निश्चा )स्य —$^{b}$) Ś1 K0 1 5 D1 अरिंदम, Da Dn1 D2 5 दम S हत्वा भीमो रणोत्कट —$^{c}$) K0 1 D1 M2-5 गुरुभारस( K0 °म )ह स्कधे ( D1 स्कंधं ), K3 5 D2 6 °सह युद्धे, K4 B D3 Dn D4 6 7 8 गुरुभारसह ( Da1 °ह ) स्कधे, D3 T1 G गुरु( D3 °रु )भार सहे स्कधे, T2 °सहसस्य —$^{d}$) K3 5 D2 6 नागराज मपात( D6 °ताद )यन्, D1 नागस्य समपातयन्, T2 स्कन्धेनास्य न्यपातयत

37 $^{a}$) S1 छिन्नस्कट, K1 2 भिन्नस्कध° ( K1 द° ), T1 G4 भिन्नहस्त T1 G2 4 M1 3-5 स निनदन् T2 सिंहस्कधगतस्येव — D3 om 37$^{cd}$ —$^{c}$) K1 T2 G1 3 अरुग्ण, K6 आरुक्ष्, D8 आरुरुह; Cd आरुग्न, Cv आरुग्ण ( as in text ) D4 सिंह°, Cv सिन्धु° ( as in text ) D1 अरुग्लवघनो भीम° —$^{d}$) K3 Da Dn D4 भानुमानिव Cd cites सानु° ( as in text )

38 D6 reads ( sec m ) 38$^{ab}$ in marg. —$^{a}$) B Da Dn D4 5 7 8 पततश्चाप्यवप्लुत्य, D3 पततस्तु ततस्तस्माद्, T1 G4 M1 3-5 गजाभ्र( M1 °जान्भ°, M2 °ज° भ )पततोप्लुत्य, T2 गजात्पतत आप्लुत्य, G1-3 M2 गजाभ्रपततोप्लुत्य —$^{b}$) Ś1 रथाद्, S रणे ( for गजाद् ) Ś1 K2 4 B2-4 भरत भारत., K3 B1 D1 S भरतसत्तम ( K3 G1 3 M4 °म. ), K5 Da1 भारत भारत, D2 6 भारतसत्तम ( D6 °म° ) Co cites भारत° ( as in text ) D8 गजादाप्लुत्य भारत —$^{d}$) K3 D2 6 व्यतिष्ठद् K0-2 व्यतिष्ठद्भुवि दसित°, K4 अविष्ठस्तु विदशित°; B D3 तस्थौ भूमौ सुदशित°, Da Dn1 D5 S तस्थौ भुवि सुदशि( S °सि )त, Dn2 D4 7 8 तस्थौ भुवि स ( D7 च ) दंशित

39 $^{a}$) B2 स चचाल, T G चचार च, M3-5 चचार सु ( for स चचार ) M1 2 चचार विविधान्मार्गान् —$^{b}$) K3 Da Dn1 D2 3 5 6 8 अभित° Ś1 पतितान्, K0-3 D3 8 प्रति तान्, K5 D6 प्र( K5 प्री )तिमान् ( for पातयन् ) K4 अभीतस्तान्गजान्प्रति, D1 भीमो निपतितो भुवि, S भीम प्रहरता वर° —$^{c}$) Ś1 अग्नि चक्रम्, Co अग्निचक्रम् ( as in text ) D8 [आ]विद्ध°, G2 [अ]विध्यन्, Co [अ]विद्धं; Ca d [आ]विद्धं

अश्ववृन्देषु नागेषु रथानीकेषु चाभिभूः ।
पदातीनां च संघेषु विनिघ्नञ्शोणितोक्षितः ।
श्येनवद्व्यचरद्भीमो रणे रिपुबलोत्कटः ॥ ४०
छिन्दंस्तेषा शरीराणि शिरांसि च महाजवः ।
खड्गेन शितधारेण संयुगे गजयोधिनाम् ॥ ४१
पदातिरेकः संक्रुद्धः शत्रूणा भयवर्धनः ।
मोहयामास च तदा कालान्तकयमोपमः ॥ ४२
मूढाश्च ते तमेवाजौ विनदन्तः समाद्रवन् ।
सासिमुत्तमवेगेन विचरन्तं महारणे ॥ ४३
निकृत्य रथिनामाजौ रथेषाश्च युगानि च ।
जघान रथिनश्चापि बलवानरिमर्दनः ॥ ४४
भीमसेनश्चरन्मार्गान्सुबहून्प्रत्यदृश्यत ।
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं प्रसृतं सृतम् ।
संपातं समुदीर्यं च दर्शयामास पाण्डवः ॥ ४५

C 6 2264
B 6 54 50
K 6 54 50

---

( as in text ) — $^d$ ) Ś1 ( also as in text ) K1 D6 प्रतिदृश्यत, G2 प्रत्यदिश्यत

40 D3 om 40 D5 om ( ? hapl ) $40^{abcd}$ — $^b$ ) K0 रथानेकेषु, Da गजानीकेषु, D1 रथवृंदेषु Ś1 °चाभित°, K0-3 5 D2 3 चाभिभु, K4 B वाभिभू, Da1 चाविभु°, Da2 वाभिभु°, Dn D4 ° चा विभु°, D1 च प्रभु°, T1 ( before corr as in text ) ) चावभौ — $^c$ ) K1 सगेषु, Da1 ( also as in text ) सर्वे च — $^d$ ) M1 2 विनदन् ( for विनिघ्नन् ) Ś1 शोणितोषित°, Dn2 D4 7 प्रत्यदृश्यत ( for शोणितोक्षित ) — $^e$ ) Ś1 Dn2 D1. 6 विचरन्, K0-2 B D° व्यचरन्, K6 D1 2 विचरद्, K° व्यनदन् B Da Dn D4 5 7 सत्ये ( for भीमो ) — $^f$ ) K1 D6 रणेरिपु, B Da Dn1 D° भीमो युधि, T2 रणे तु स, M रणेषु च ( for रणे रिपु ) M2 रणो° ( for बलो ) Dn2 D4 7 युधि भीमो महाबल°, T1 G रणे तु समरोत्कट

41 $^a$ ) K3 छिद्, K° छिदि°, Da1 छिद°, D6 छिन्न — $^b$ ) K0-2 . D3 S °बल ( for °जव ) — $^c$ ) K0 खड्गेण K5 शत ( for शित ) — $^d$ ) D6 ( marg sec m as in text ) राजयोगिना, T1 जय योधिना ( for गजयोधिनाम् )

42 $^a$ ) K3 च स तान्, K1 B Da2 Dn D4 7 8 S शूरान्तान्, Da1 शूरांश्च, D1 पुत्रास्ते, D2 स च तान् ( for च तदा ) D3 6 स मोहयामास च तान् — $^d$ ) K2 कालांतक इवोपम, Ca as in text — After 42, T1 G1 ins

169* पदातिभि पदातींश्च अश्वानश्वैर्गजान्गजे ।
रथान्रथैश्च बहुधा जघान समरे बली ।

43 T2 om $43^{ab}$ — $^a$ ) K0 1 मोहाश्च ( for मूढाश्च ) K4 B Da Dn1 D4 . 7 8 S ( T2 om ) मूढास्तमेव च रणे, Dn2 मूढास्त एव च रणे, D1 मूढाश्च स ततो** — K0 1 om ( hapl ) $43^b$-$44^a$ — $^b$ ) K3 D2 विनदंत, Da1 विनष्ट तत्, D6 विमर्दंत, D8 निग दत° K2 Da1 D6 समाद्रवत्, T1 G1 तथाद्रवन् K6 नदंत समुपाद्रवत्, D1 सगजा° सह सादिभि° — After $43^{ab}$, D1 ins

170* विमुच्य क्षुधिता नादं विद्रवन्ति दिशो दश ।
भ्रमन्त कालरूपेण भीमसेन महाबलम् ।

— M° om $43^{cd}$ — $^c$ ) S ( M2 om ) सोमि मुद्यम्य च रणे — $^d$ ) K2 Da1 D3 विचरंत B1 2 महा हवे, D1 अभीतवत् ( for महारणे ) S ( M2 om ) वेगेन व्यचरन्नदन् ( T1 G रहली )

44 K0 1 om $44^a$ ( of v l 43 ) — $^a$ ) K2 3 D2 6 विकृत्य, K6 निकृत B2 रथिनाम् K3-5 D2 8 6 S चाजौ, Ca d भाजौ ( as in text ) D1 निकृत रथि नस्त्वाजौ — $^b$ ) K0-3 Da Dn D2 4-8 S रथेषा च, D1 रथैषा च — $^c$ ) D1 M6-8 रथिना ( M4 न ) चापि — $^d$ ) D6 रिपु° ( for अरि )

45 $^b$ ) S बहून्दृढपराक्रम — K6 om $45^c$-$46^b$ — $^c$ ) D1 8 S ( except M1 2 ) भ्रातमाविद्धमुद्भ्रांतम् ( by transp ), Ca c d v as in text — $^d$ ) D1 आवृत, M8 5 आप्लुत, Cv आप्लुन, Ca c d आप्लुत ( as in text ) K1 प्रसृत, D1 प्रस्थितं; T2 G1 3 प्रद्रुत, M8 5 प्रसृजन्, Ca c d v प्रसृत ( as in text ) K0 1 सृत, K2 4 B Da2 Dn1 D1. 2 7 द्रुतं, S ( except G2 ) द्रुत, Ca सुतं, Cv स्तत, Co सृतम् ( as in text ) — $^e$ ) D1 सजात, T G2 3 सगत, G1 8 M1-3 5 सहत, Cv सयतं, C1 d सपात ( as in text ) Co cites संपात° Ś1 समुदी*च, K0 2 D4 समुदीय ( K0 °त ) च, K4 B Da Dn D2 5 Ca d °दीर्णं च, D1 सप्रदीप्त च, D8 समुदीप च, D8 Cd °दाय च; T1 G2 4 M4 °दीक्षं च, T2 G1 8 M1-3. 5 दीक्ष्य त,

केचिदग्रासिना छिन्नाः पाण्डवेन महात्मना ।
विनेदुर्भिन्नमर्माणो निपेतुश्च गतासवः ॥ ४६
छिन्नदन्ताग्रहस्ताश्च भिन्नकुम्भास्तथापरे ।
वियोधाः स्वान्यनीकानि जघ्नुर्भारत वारणाः ।
निपेतुरुर्व्यां च तथा विनदन्तो महारवान् ॥ ४७
छिन्नांश्च तोमरांश्चापान्महामात्रशिरांसि च ।
परिस्तोमानि चित्राणि कक्ष्याश्च कनकोज्ज्वलाः ॥ ४८
ग्रैवेयाण्यथ शक्तीश्च पताकाः कणपांस्तथा ।
तूणीराण्यथ यन्त्राणि विचित्राणि धनूंषि च ॥ ४९
अग्निकुण्डानि शुभ्राणि तोत्रांश्चैवाङ्कुशैः सह ।
घण्टाश्च विविधा राजन्हेमगर्भांस्त्सरूनपि ।
पततः पतितांश्चैव पश्यामः सह सादिभिः ॥ ५०
छिन्नगात्रावरकरैर्निहतैश्चापि वारणैः ।
आसीत्तस्मिन्समास्तीर्णा पतितैर्भूर्नगैरिव ॥ ५१

---

Co cites °दीर्यं (as in text) — f) D1 दर्शयान स; G3 दशया° B D (except D1-3 6) T2 M भारत (for पाण्डव°)

46 K5 om 46ab (of v l 45) — a) K3 D3 6 केचिदुग्रासिना छिन्ना°, S गजास्तत्रासिना (M2 °सिवि) छिन्ना° — c) Dn2 निनेदुर् Ś1 भिन्नचर्माणो, K4 छिन्न° वर्माणो, S (except T2 G3 M5) भिन्नवर्माणो (for °मर्माणो)

47 a) K1 3 T2 °हस्ताश्च, M5 °हस्ताश्च — b) Ko-2 भिन्नदतास्, D7 8 छिन्नकुम्भास् — D1 T2 om 47cd — c) Ś1 Ko 1 वियोगात्; K2 व्ययोधा, G3 M4 5 वियौधा, Co d वियोधा° (as in text) — d) D6 नेदुर् (for जघ्नुर्) S (T2 om) मृद्गति वरवारणा° — e) Ś1 K1 विनेदुर् (for निपेतुर्) Da Dn D4 5 7 8 च तदा; D1 बहुधा (for च तथा) — f) Ś1 Ko-2 निपततो (for विनदन्तो) Ko-3 5 D2 6 महारथान्, D1 °गजा — After 47, S ins

171* गजाश्च गजयन्तॄंश्च गजहस्तांश्च भारत ।

[T1 G2 4 M3 °कर्तॄंश्च, T2 °यतार (for °यन्तॄंश्च) T2 चक्रहस्ताश्च (for गज°) M1 2 मारिष (for भारत) ]

48 a) Ś1 Ko-3 D1-3 6 8 छिन्नाश्च, T1 G M2 3 भिन्नाश्च, M5 भिन्नाश्च, Cd छिन्नाश्च (as in text) Ś1 G2 तोमरावापा (G2 °पा), Ko 1 D2 6 तोमराचापा (sic), K2 °रा चापां, K3 °राश्चापा, B Da Dn D4 5 7 8 °रान्राजन्, D3 °रारावान्, T1 G1 3 4 M1-3 5 °रा(M2 °रो)चापान्, T2 °रप्रासान्, M4 °रावासान् — b) Ko सहसान्न, K5 महामात्रा, D3 महामात्रान् Ca c d cite °मात्र°. — c) Ś1 Ko-3 D1 2 °स्तोमा (K2 °मां) विचित्राश्च; K5 B3 D3 6 °स्तोमान्वि(D6 °मा वि)चित्राश्च, B1 2 4 °स्तोमान्विचित्राणि, T2 °स्तोमानि छत्राणि Co cites परिस्तोमाणि (sic), Cd °स्तोमा — d) K3 D कक्षाश्च, K5 वृक्षाश्च

49 T1 G om 49ab — a) K5 ग्रैवेयानथ (for °याण्यथ) Ś1 Ko 1 शक्त्यश्च, Dn1 शक्तश्च, Dn1 D2 शक्तींश्च, D6 M2 शक्तिश्च, M4 शक्तिं च — b) Ś1 Ko-2 पताका° कणय(Ko °नका)स्तस्था, K3 °का कणपा°, K5 D2 3 °का कुणपा°, D6 °का कणया°, D3 °का पणव°, T2 M °का कणया° — c) Ś1 शरीराण्यथ, K4 B तूणीरानथ K5 चित्राणि, S योक्त्राणि, Ca c, d यन्त्राणि (as in text) — d) K5 असूपिं च महामृधे.

50 a) K2 B1 2 4 Da Dn D4 7 8 Co भाति दडानि, K3 D2 3 6 भिडिमालानि, K4 B3 अगुलित्राणि; D1 अग्निवर्णानि, D5 असिदडानि (for अग्निकुण्डानि) — b) K1 2 तोत्रा चैव, K3 D6 तोत्राश्चैव, B3 T1 G4 तोमराश्च Ca d cite तोत्राणि B2 [अ]कुशानि प्र (for [अ]ङ्कुशैः सह) D1 तोत्राणि विविधानि च, T2 तोत्राश्चापाङ्कुशैः सह — c) K4 खड्गाश्च, G3 घटाश्च (for घण्टाश्च) B2 4 Dn2 D4 7 8 G3 विविधाकारा (D4 °रान्), Da Dn1 D5 °धा घोरा — d) Ś1 हेमगर्भां, Ko-2 हमगर्भा (Ko °र्भान्), Da1 हेमगर्भा, D3 हेमगर्भा, T1 G4 M1 3 4 हेमगर्भे, G3 जहो गर्भान् Ś1 तरूनपि, K3 D2 6 बहूनपि, K4 स्सरूनि च; K5 गुरूनपि, B2 D3 G1 M2 सरूनपि G3 °गर्भसरूनपि Cd cites स्सरून् (as in text) — e) K4 पततैः, K5 D3 पतत, D7 पतिता (for पतत) K3 T G M3 प(G1 M2 पा)तिताश्चापि; K4 B Da2 पातिताश्चैव, K5 D3 पतिता°, D1 (before corr) पतता° Ko पतिताश्चैव पतित — f) B2 Da1 Dn D4 5 7 8 पश्यामि; D6 G2 M1 3 5 पश्याम

51 a) Ś1 भिन्नगात्रा°, D3 °त्रापरकरैर्, S छिन्नगात्रैश्छिन्नहस्तैर्, Cd v as in text — b) D7 निहितैश् B2 4 चैव (for चापि) D2 वारुणै° S निहतैर्वरवारणै — c) K3 B3 D2 6 भूमि; K4 तत्र (for तस्मिन्)

विमृद्यैवं महानागान्ममर्दाश्वान्नरर्षभः ।
अश्वारोहवरांश्चापि पातयामास भारत ।
तद्घोरमभवद्युद्धं तस्य तेषां च भारत ॥ ५२
खलीनान्यथ योक्त्राणि कशाश्च कनकोज्ज्वलाः ।
परिस्तोमाश्च प्रासाश्च ऋष्टयश्च महाधनाः ॥ ५३
कवचान्यथ चर्माणि चित्राण्यास्तरणानि च ।
तत्र तत्रापविद्धानि व्यदृश्यन्त महाहवे ॥ ५४
प्रोथयन्त्रैर्विचित्रैश्च शस्त्रैश्च विमलैस्तथा ।
स चक्रे वसुधां कीर्णां शबलैः कुसुमैरिव ॥ ५५
आप्लुत्य रथिनः कांश्चित्परामृश्य महाबलः ।
पातयामास खड्गेन सध्वजानपि पाण्डवः ॥ ५६
मुहुरुत्पततो दिक्षु धावतश्च यशस्विनः ।

C 6 2296
B 6 54 63
K 6 54 63

B1 4 D (except D2 6) S रणे (T1 G4 मृधे) भूमि (for समास्तीर्णा) K5 भाशोस्तस्मिन्समाकीर्णा —d) K3 5 D2 6 भूधरैर्, B Da Dn1 D3 5 7 8 S पर्वतैर्, D1 भुजगैर् (for भूर्नगैर्) Dn2 D4 पर्वतै पतितैरिव

52 a) K0 Da1 D1 4 7 विमृद्यैव, K3 विमृद्येव, B3 विसृत्यैव, B4 विसृज्यैव, D2 विमृश्यैव, D5 विमृद्य च, T2 विद्रिये च (for विमृद्यैव) S तथा नागान् (G3 °ग) —b) K0 समर्द्याश्वान्, K3 D2 6 ममर्दा न्यान्, D1 ममर्द च (for ममर्दाश्वान्) K3 D2 3. 6 महाबल, K4 Da1 D4 5 7 8 नरर्षभ Ś1 मदाश्वान्भरत र्षभ, K1 समर्द्यामनुरर्षभ (sic) —c) Ś1 K1 D3 अश्वरोहवरांश्, K5 M1. 2 अश्वारोहान्व(M1 °च)रांश्, B2 अश्वारोहवराश्, Da1 अश्वरोहावराश् K0 5 Da1 चैव (for चापि) —d) K1 पत°, M3–5 घात° (for पात°) K3 D2 6 संयुगे (for भारत) — Ś1 om (hapl.) 52ef —e) K5 Dn2 D4 7 transp घोर and युद्ध —f) B1. 2 4 Dn2 D4 7 8 तव (for तस्य). B D (except D1 2 6) मारिष (for भारत)

53 a) T2 कवचान्यथ; M3 5 वलिना चाथ, M4 अजिनान्यथ (for खलीनान्यथ) Ca c d v cite खलीनानि (as in text) K4 Da Dn1 D3 5 T G M4 Cv चित्राणि, M1. 2 शस्त्राणि, Cc d योक्त्राणि (as in text) B Dn2 D4 7 8 खलीनानि विचित्राणि —b) K0–2 वृषाश्च, K4 B1. 2 कक्ष्याश्च, B3 4 Da Dn D4 5 7 8 कक्षाश्च (for कशाश्च) Ca cites कक्ष्या[ ] —c) B2 Da Dn1 D5 परिस्तोमानि प्रासाश्च, Dn2 D4 7 8 °मानि यंत्राश्च, D1 °मास्तथा प्रासा —d) K1 ऋपयश्च, K3 D2 6 T2 G3 यष्टयश्च, K5 शक्तयश्च, Da2 D5 हृष्टयश्च, G1 अष्टयश्च Cd cites रिष्टय D3 महाबला, Cc d महाधना (as in text)

54 a) K4 वर्पाणि, K5 वर्माणि, T G चित्राणि (for चर्माणि) —b) Ca आस्तार°, Cc आस्ताराणि, Cd आस्तर° (as in text) Ś1 चित्राण्य*रणानि च, K0 1 विचित्राण्यस्व(K0 °ण्यश्व)राणि च, K2 विचित्राण्यवरानि च, D1 चित्राण्यस्त्रवराणि च, T2 छत्राण्याभरणानि च —c) T1 G तत्रापविद्धान्येतानि, T2 तत्रोपविद्धापहृतान, M1 3 5 तत्रापविद्धानि रणे —d) B1 महीतले (for महाहवे) T1 G M पश्यामस्तत्र (M2 रणे पश्याम) संघश

55 a) K3 D2 6 प्रासयन्त्रैर्, K4 प्रासैर्यन्त्रैर्, B1. 2 योधयन्त्रैर्, B3 प्रोथयन्स, D1 कूथायन्त्रैर्, Cc प्रोथतन्त्रै, Cd प्रोथयन्त्रैर् (as in text) K1 च शस्त्रैश्च; Dn2 D4 च चित्रैश्च, D3 तथा चित्रै (for विचित्रैश्च) K4 प्रोथयश्चैव विविधै, S चकर्त रथचक्रां(M1 2 4 °नीला, M3 5 °नागा)श्च —b) B2 शस्त्रैश्च, B4 Dn2 D4 7 8 खड्गैश्च, D5 शनैश्च (for शस्त्रैश्च) T1 G4 रथनीलास्तथाभिभू, T2 G1–3 रथनीडा(T2 °चक्रां, G2 °क्रीडां)श्च चाभिभू, M रथचक्राणि चाभिभू —c) S तै कीर्णा वसुधा चक्रे —d) K4 B Da1 Dn D4 5 7 8 S Cd शबला, D1 सबलां, D6 सबलौ, Cc सबल (for शबलै) B Dn2 D4 7 8 कुमुदैरिव (for कुसुमै°) K0 अपि (for इव)

56 a) D1 आवृत्य — After 56a, G3 ins

172* आक्षिप्यान्यान्यपातयत् ।
खड्गेनान्यांश्च चिच्छेद

—b) Ś1 K0–2 5 Da Dn D4 परामृज्य, D2 परामृशन्, Cc d परामृश्य (as in text) T1 G महारथ (for °बल) —c) T2 छेद° (for पात°) —d) B3 स भुजानपि, T1 G2–4 ध्वजानपि स, T2 ध्वजाश्चैव स (for सध्वजानपि)

57 a) Ś1 उत्पत्यतो, Da2 M2 4 उत्पतितो —b) Ś1 K1 घातवश्च, K0 घा**श्च; K3 (by metathesis) धातवश्च, D3 पादासेश्च Dn2 D4 7 8 तर° (for यश°) —c) Dn2 समार्गांश् (for मार्गांश्च) D3 चरताश् K3 B D2 6 चित्रं D3 मार्गांश्चरतांश्चित्रांश्च —d) K1 2 T विस्मयत

मार्गाश्च चरतश्चित्रान्व्यसमयन्त रणे जनाः ॥ ५७

निजघान पदा कांश्चिदाक्षिप्यान्यानपोथयत् ।
खड्गेनान्यांश्च चिच्छेद नादेनान्यांश्च भीषयन् ॥ ५८

ऊरुवेगेन चाप्यन्यान्पातयामास भूतले ।
अपरे चैनमालोक्य भयात्पञ्चत्वमागताः ॥ ५९

एवं सा बहुला सेना कलिङ्गानां तरस्विनाम् ।
परिवार्य रणे भीष्मं भीमसेनमुपाद्रवत् ॥ ६०

ततः कलिङ्गसैन्यानां प्रमुखे भरतर्षभ ।
श्रुतायुषमभिप्रेक्ष्य भीमसेनः समभ्ययात् ॥ ६१

तमायान्तमभिप्रेक्ष्य कलिङ्गो नवभिः शरैः ।
भीमसेनममेयात्मा प्रत्यविध्यत्स्तनान्तरे ॥ ६२

कलिङ्गबाणाभिहतस्तोत्रार्दित इव द्विपः ।
भीमसेनः प्रजज्वाल क्रोधेनाग्निरिवेन्धनैः ॥ ६३

अथाशोकः समादाय रथं हेमपरिष्कृतम् ।
भीमं संपादयामास रथेन रथसारथिः ॥ ६४

तमारुह्य रथं तूर्णं कौन्तेयः शत्रुसूदनः ।
कलिङ्गमभिदुद्राव तिष्ठ तिष्ठेति चाब्रवीत् ॥ ६५

ततः श्रुतायुर्बलवान्भीमाय निशिताञ्शरान् ।

---

58 $^{a}$) K8 D2 6 स जघान Ś1 पताकाश्च, K0-2 D1 पदातींश्च, K5 D8 पदातांश्च, T1 G1 2 4 M1 2 4 तदा काश्चिद् — $^{b}$) K0 2 [अ]प्याक्षिप्य, K3 4 B D2 G1 व्याक्षिप्य, C0 आक्षिप्य (as in text) D8 व्य पोथ°, T1 G1 3 4 M अपात°, C0 अपोथ° (as in text) K5 आक्षिप्यान्यानि पोथयत्, T2 तलेनैव व्य पोथ°, G2 काश्चिदाक्षिप्य पातयत् — $^{c}$) K1 2 खड्गे नान्य च, K2 °नान्याश्च; K3 °नाश्वाश्च, T1 G3 4 M2 5 खड्गैरन्याश्च — $^{d}$) K0-2 पादेनान्याश्च, D1 दृष्ट्वा चान्याश्च, T G2 4 M नादैरन्याश्च K4 B1 3 4 Da Dn D4 5 7 8 नादैरन्यान( Dn2 °न्य )भीषयत्, B2 नादेना न्यानविभीषयत् (hypermetric)

59 $^{a}$) K3 5 Da Dn3 D6 उरुवेगेन M चान्यान्स (for चाप्यन्यान्) — $^{c}$) G2 अथान्ये (for अपरे) K2 Da1 D5 8 चैवम् D1 अपरे च समालोक्य — $^{d}$) B Da Dn D4 5 7 8 भयाद्विद्राविणोभवन्, D1 भया द्विप्राणिनोसुवन्

60 $^{a}$) S एव स बहुला ( M4 °व बहुविधा ) सेना — $^{b}$) Da1 कलिंपगाना, D5 कलिपताना — $^{c}$) D2 परिस्पृश्य K0-2 तेन, D1 राजन् (for भीष्म) S विनिघ्नन्व्यचरद्भीमो — $^{d}$) Ś1 K3 D3 6 अभि° (for उपा°) K0-2 भीमेन समभिद्रुत ( K0 °ता ), K5 D2 °सेनो ह्यभिद्रवत्, D1 भीमसेनमथार्दयन्, S युगान्ताग्नि रिवाहवे

61 $^{a}$) D (except D1-3 6) तत कलिंग( Da °गा ) सेना ता — $^{b}$) G1 प्रमुख D1 भरतोत्तम — $^{c}$) Ś1 K1 शता° (for श्रुता°) K1 °प्रेक्ष्य, K5 G2 °प्रेत्य — K5 om (? hapl) 61$^{d}$–62$^{c}$ G3 om (hapl.) 61$^{d}$–62$^{a}$ — $^{d}$) D1 समभ्यगात्, G1 M1 2 तमभ्य यान्; C0 समभ्ययात् (as in text)

62 K5 om 62$^{abc}$, G3 om 62$^{a}$ (cf v l 61) — $^{b}$) K4 B Da Dn D4 5 7 M3-5 कालिंगो L2 बहुभि (for नवभि) — $^{d}$) K2 3 D5 प्रत्यविध्य, K6 अविध्यत, M3 प्रत्यविध्यन

63 $^{a}$) K4 B Da Dn D4-7 कालिंगबाणाभिह( Da2 Dn1 °णाभिभू, Dn3 °णनिह )तस् — $^{b}$) M2 5 °पिंत (for °र्दित) D1 इति (for इव) — $^{d}$) T1 G कोपेन (for क्रोधेन) K0-3 D3 G1 M2 5 इवैधित, K4 इवोद्धृत, K6 D2 6 M1 3 इवेधित, D1 T2 G3 इवोत्थित, T1 G2 4 M4 इवेरित (for इवेन्धनै)

64 $^{a}$) K0 अथाशोक, K3 यथाशोक, B3 तथा, Cv अथा° (as in text) D1 3 S विशोकस्तु ततो राजन् ( D1 3 स्तु रथं तूर्णं ) — $^{b}$) K3 5 Da Dn1 D3 5-7 °परिस्कृत D1 3 S योजयित्वा महारथ ( D1 °त्वा महाजव, M1 2 4 5 °त्वात्मवान्प्रभो, M3 °त्वा महाबल ) — $^{c}$) K3 D2 6 रथ (for भीमं) Ś1 समादया°; S (except M1 2) सपात°, C0 सपाद° (as in text) — $^{d}$) K0-2 स्मरथ, K3 D2 6 भीमस्य (for रथेन) K4 B1-3 Da D3 5 S रथिना वर; B4 Dn D4 7 8 रथिना वर (for रथसारथि)

65 $^{a}$) Ś1 K0-2 समारूढो; D2 समारुह्य, G3 तदारुह्य — $^{c}$) K0 1 4 B Da Dn D4 7 M4 कालिंगम्

66 $^{a}$) T G4 तत्र (for तत) Ś1 शतायुर् — $^{b}$) B2 D (except D1 2 6) भीमस्य (for भीमाय) Ś1 [अ]वासृजन्, K0-2 5 [अ]वसृजन्, K3 D2 6 व्यसृजन् (for निशितान्) — $^{d}$) B Da Dn D4 5 7 8 S हस्त

प्रेषयामास संक्रुद्धो दर्शयन्पाणिलाघवम् ॥ ६६
स कार्मुकवरोत्सृष्टैर्नवभिर्निशितैः शरैः ।
समाहतो भृशं राजन्कलिङ्गेन महायशाः ।
संचुक्रुधे भृशं भीमो दण्डाहत इवोरगः ॥ ६७
क्रुद्धश्च चापमायम्य बलवद्बलिनां वरः ।
कलिङ्गमवधीत्पार्थो भीमः सप्तभिरायसैः ॥ ६८
क्षुराभ्यां चक्ररक्षौ च कलिङ्गस्य महाबलौ ।
सत्यदेवं च सत्यं च प्राहिणोद्यमसादनम् ॥ ६९

ततः पुनरमेयात्मा नाराचैर्निशितैस्त्रिभिः ।
केतुमन्तं रणे भीमोऽगमयद्यमसादनम् ॥ ७०
ततः कलिङ्गाः संक्रुद्धा भीमसेनममर्षणम् ।
अनीकैर्बहुसाहस्रैः क्षत्रियाः समवारयन् ॥ ७१
ततः शक्तिगदाखड्गतोमरर्ष्टिपरश्वधैः ।
कलिङ्गाश्च ततो राजन्भीमसेनमवाकिरन् ॥ ७२
संनिवार्य स तां घोरां शरवृष्टिं समुत्थिताम् ।
गदामादाय तरसा परिप्लुत्य महाबलः ।

C 6 2513
B 6 54 80
V 6 54 80

(T2 अस्त्र)लाघव (for पाणि°)

67 $^a$) Ko–2 स कार्मुकरथो हृष्टो, S स (G3 स्व) कार्मुकच्युतैर्वा(G2 °तो वा)णै° — $^b$) K1 D1 निशातै° S स्वर्णपुङ्खैर्महाहवे (T1 G °मृधे) — K5 om 67$^c$–70$^b$ — $^c$) K8 D1 2 6 महाराज, B1–3 महाराजन् (for भृश राजन्) D3 कलिंगेन शरै पार्थो, S कलिंगेन तदा भीमो (T1 तथा भीमो, G1 महाभीमो, M1 2 तदा विद्धो) — $^d$) K4 B Da Dn1 D5 कालिंगेन K8 D2 6 महात्मना, K4 B Da Dn D1 4 5 7 8 महाबल° (for महायशा°) D3 मर्मभेदिभिराशुगैः, S विद्ध° (M1. 2 भीम°) सप्तभिराशुगैः — $^e$) Ko–2 Dn2 D3 4 7 T G2 4 M1–3 सचुक्रोध, B1. 2 Da Dn1 D5 G1 3 °कोप; B3 4 D2 °क्रुधे, D1 तत क्रुद्धो, D8 M4 6 मन्युक्रोधा S (except M3 4) तदा (for भृश) Ko–2 क्रुद्धो (for भीमो) — $^f$) M6 दण्डहस्त (for दण्डाहत) T2 -महोरग°

68 K5 om. 68 (cf v l 67) — $^a$) K4 B Da2 Dn2 D4 6 7 8 T G M4 5 क्रुद्ध स, D1 M1 2 क्रुद्धस्तु Ś1 चापमाकृष्य, Ko °मायस्य; B °मानस्य, Da Dn1 D5 M3–5 °मादाय Cc cites आयम्य (as in text) — $^b$) M3–5 बलेन (for बलवद्) — $^c$) K4 B Da Dn1 D4 6 7 8 M8 कालिंगम् — $^d$) D1 T G °भिरा शुगैः

69 K5 om 69 (cf v l 67) — $^a$) Ko–2 शराभ्यां (for क्षुराभ्यां) D1 S तु (for च) — $^b$) K4 B1 3 4 Da Dn D4. 7 8 G1 कालिंगस्य D1 T1 G2 4 महाबल°, G1 3 महात्मन°, M1 2 °रथौ — $^c$) G1 3 सत्यदेव — $^d$) K1 यमसाधन, Cc °सादनम् (as in text)

70 Ko–2 D2 om (hapl) 70 K5 om 70$^{ab}$ (cf v l 67) — $^b$) D6 नरान्वै (for नाराचैर्) T G नाराचैश्च त्रिभि° पुन — T G om (hapl) 70$^c$–75$^b$ — $^d$) K8 D6 (with hiatus) क्षनयद् (for ऽगमयद्) K8 °साधनं D1 गमयामास मृत्यवे

71 T G om 71 (cf v l 70) — $^a$) Ś1 Ko–2 6 M4 तत कलिंग° सक्रुद्धो — K5 om 71$^c$–72$^b$ — $^c$) Ko–2 B2 Dn2 D5 8 अनेकैर् M अनेकशतसाहस्रा — $^d$) Ko–2 D1 क्षत्रियै, M समतात् (for क्षत्रिया°) Ko–2 समवारयत्, K8 °वाकिरन्, B Da Dn D4 6 7 8 °योधयन्; D1 M पर्यवारयन्

72 K8 (hapl) T G om 72 (for T G, cf v l 70) K5 om 72$^{ab}$ (cf. v l 71) — $^a$) D1 °खड्गैस् (for °खड्ग) — $^b$) D1 M -तोमरासिपरश्वधै A few MSS °परस्वधै° — $^c$) Ko–2 D6 कलिंगाश् K4 6 B Da Dn D3–5 7 8 M शतशो, D1 समरे (for च ततो) — $^d$) Ko 1 अवाकिरत्, B Dn1 D4 7 8 M4 अवारयन्; Da Dn1 D5 उपाद्रवन्

73 T G om. 73 (cf v l 70) — $^a$) Ko–2 D1 2 स निवार्य, D8 नविचार्य, M समवार्य (for संनि°) B Da Dn D4 6 7 8 तु तां, D1 ततो, D8 M च तां (M1 तान्) (for स तां) K1 घोर; B Da Dn D4 6 7 8 राजन्, D1 घोरान्, D8 M वीर° (for घोरां) — $^b$) Ko शरवृष्टि, Da Dn1 M शस्त्रवृष्टिं; D1 शरवृष्ट्या K1 Da1 समुत्थित, K6 Dn D3. 4 7 8 समुच्छ्रितां, B8 स सायकै°, D1 दुरासदान्, M दुरासदा (for समुत्थिताम्) — $^c$) M1 2 तान्सर्वान् (for तरसा) — $^d$) Ś1 Ko 1 D8 परिपत्य, K8 D2 6 संनिवार्य, K5 संनिपत्य, M परिवृत्य (for परिप्लुत्य). K8 महारथ° D1 अवप्लुत्य रथाद्बली — After 73$^{cd}$, D1 ins

भीमः सप्तशतान्वीराननयद्यमसादनम् ॥ ७३
पुनश्चैव द्विसाहस्रान्कलिङ्गानरिमर्दनः ।
प्राहिणोन्मृत्युलोकाय तदद्भुतमिवाभवत् ॥ ७४
एवं स तान्यनीकानि कलिङ्गानां पुनः पुनः ।
बिभेद समरे वीरः प्रेक्ष्य भीष्मं महाव्रतम् ॥ ७५
हतारोहाश्च मातङ्गाः पाण्डवेन महात्मना ।
विप्रजग्मुरनीकेषु मेघा वातहता इव ।
मृद्नन्तः स्वान्यनीकानि विनदन्तः शरातुराः ॥ ७६
ततो भीमो महाबाहुः शङ्खं प्राध्मापयद्बली ।
सर्वकालिङ्गसैन्यानां मनांसि समकम्पयत् ॥ ७७
मोहश्चापि कलिङ्गानामाविवेश परंतप ।
प्राकम्पन्त च सैन्यानि वाहनानि च सर्वशः ॥ ७८
भीमेन समरे राजन्गजेन्द्रेणेव सर्वतः ।
मार्गान्बहून्विचरता धावता च ततस्ततः ।

---

173* पपात शत्रुसैन्येषु केसरीव महाबल ।

— $^{e}$) K4 D1 योधान् ( for वीरान् ) — $^{f}$) D8 नान° ( for अन° )

74 T G om 74 ( cf v l 70 ) — $^{b}$) D4 7 कालिंगान् K3 परिमर्दन ( for अरि° ) — $^{c}$) M1 2 4. 5 यमलोकाय ( for मृत्यु° ) — $^{d}$) K8 तदद्भूतम् — After 74, D1 ins

174* गदया मुक्तया राजन्पातयामास दन्तिन ।
तथा गज गजेनैव प्राहिणोद्यमसादनम् ।
रथ रथेन सचूर्ण्य तुरङ्ग तुरगेण तु ।
पदातिनं पदातेन प्रेषयामास मृत्यवे ।
पुनरश्वेषु पतति गजेषु च पुनः पुन । [ 5 ]
रथेषु स पदातेषु वायुनेव महानल ।
यथा मृगाणा मध्ये तु केसरीव नखग्रह ।
एवं भ्रमति सैन्येषु भीमकर्मा वृकोदर ।

75 T G om $75^{ab}$ ( cf v l 70 ) — $^{a}$) M तत ( for एव ) K6 सर्वान्य°, Da Dn D1 5 शतान्य° ( for स तान्य° ) — Ko 1 om ( hapl ) $75^{b}$–$76^{e}$ — $^{b}$) D1 समतत ( for पुन पुन ) K3 व्यमर्दत महाबल . — $^{c}$) Ś1 K6 पार्थ, K8 D2 6 तूर्णं, D1 राजन्, M1. 3–5 वीरं ( for वीर ) — $^{d}$) S ( except M4 ) भीम ( for भीष्म ) K8 D2 6 M5 महारथं, T1 G समाप्लुतं, M1–3 महाबल ( for °व्रतम् ) K2 4 B Da Dn D4 5 7 8 भीमो भीमपराक्रम, K5 भीष्मं प्रेक्ष्य महानत्त, D1 भीमसेनो महाबल

76 Ko 1 om $76^{abcde}$ ( cf v l 75 ) — $^{a}$) D1 हस्त्यारोहा समातगाः — $^{b}$) K2 B1 2 4 Da Dn D4 5 7 कृता रणे; K4 D8 महारणे, B8 हता रणे ( for महात्मना ) — $^{d}$) K2 D ( except D2 6 ) S घना ( for मेघा ) K8 Da Dn D5 M वाताहता इव; K6 वात इवाहता , G3 वातेरिता इव ( for वातहता इव ) — D3 om $76^{ef}$ — $^{e}$) D5 मृदग , D6 मर्दत ( for मृद्नन्त ) T G मृद्न( T2 त्रस , G2 मह )त स्यदनानीकान् — $^{f}$) K4 शराहता , Da1 शरानुग , D1 च सातुरा Ko 1 व्य( K1 वि )मर्दत महाबल — After 76, D1 ins

175* भ्रमन्ति तत्र तत्रैव काल्यमाना महात्मना ।

77 K2 om 77–84 — $^{a}$) T1 G महेष्वास, T2 महाघोर, M महाघोषं ( for महाबाहु ) — After $77^{a}$, N ( K2 om ) ins

176* खड्गासक्तमहाभुज ।
समहृष्टो महाघोप

[ ( L 1 ) K8 5 B2–4 D2 6 खड्गहस्तो; Da1 D8 6 खड्गसक्त, D8 खड्गशक्तो ( for खड्गासक्त ) D1 द्राव्य शत्रून्रणाजिरे — ( L 2 ) Dn2 D8 7 8 महाघोर ( for °घोप ) D1 सिंहनाद मुहु कृत्वा ]

— $^{b}$) Ko 1 3 5 Da Dn D5 8 प्रध्मापयद् ( Dn2 °न् ), D4 प्राध्मापयन् D1 शख दध्मौ प्रतापवान् ( = 6 23 $12^{d}$ ), S शख दध्मौ महाबल — $^{c}$) Ś1 °कलिंग°. M2 °योधाना ( for °सैन्यानां ) — $^{d}$) Da1 D8 T1 G1 3 4 M5 समकपयन् — After 77, D1 ins

177* भीमेन सहसा राजन्भ्रममाणेन सयुगे ।

78 K2 om 78 ( cf v l 77 ) D1 om $78^{a}$–$79^{b}$ — $^{a}$) D8 S ( except M8 ) मोहस्तेन ( for °श्चापि ). — $^{b}$) Da1 T2 °तप — $^{c}$) Ko प्राकपत च, K5 अकपस्तव, Da Dn1 D8 5 प्राकंपयत ( for प्राकम्पन्त च ) S प्रचकपे च तत्सै( M1 2 °पे तत सै )न्यं — $^{d}$) B1. 2 4 Dn2 D4 7 8 च सुस्रुवु , B3 Da Dn1 D5 प्रसुस्रुवु, S च भारत ( for च सर्वश ) Co cites सुश्रुवु

79 K2 om 79 ( cf. v l. 77 ). D1 3 S om $79^{ab}$ ( for D1, cf v l 78 ) — $^{b}$) K5 गजेंद्रेणैव Ś1 K4 5 B1–3 D6 पर्वत, Ko 1 पर्वते; K8 D2 सर्वश ( for सर्वत ). D3 गर्जनेन च सर्वश — $^{c}$) Da2 D6

मुहुरुत्पतता चैव संमोहः समजायत ॥ ७९
भीमसेनभयत्रस्तं सैन्यं च समकम्पत ।
क्षोभ्यमाणमसंबाधं ग्राहेणेव महत्सरः ॥ ८०
त्रासितेषु च वीरेषु भीमेनाद्भुतकर्मणा ।
पुनरावर्तमानेषु विद्रवत्सु च संघशः ॥ ८१
सर्वकालिङ्गयोधेषु पाण्डूनां ध्वजिनीपतिः ।
अब्रवीत्स्वान्यनीकानि युध्यध्वमिति पार्षतः ॥ ८२
सेनापतिवचः श्रुत्वा शिखण्डिप्रमुखा गणाः ।
भीममेवाभ्यवर्तन्त रथानीकैः प्रहारिभिः ॥ ८३
धर्मराजश्च तान्सर्वानुपजग्राह पाण्डवः ।
महता मेघवर्णेन नागानीकेन पृष्ठतः ॥ ८४
एवं संचोद्य सर्वाणि स्वान्यनीकानि पार्षतः ।
भीमसेनस्य जग्राह पार्ष्णिं सत्पुरुषोचिताम् ॥ ८५
न हि पाञ्चालराजस्य लोके कश्चन विद्यते ।
भीमसात्यकयोरन्यः प्राणेभ्यः प्रियकृत्तमः ॥ ८६
सोऽपश्यत्तं कलिङ्गेषु चरन्तमरिसूदनम् ।

C 6 2329
B 6 54 96
K 6 54 96

बहु (for बहून्) D1 मार्गा बहुविधा सैन्ये, D8 M मार्गांश्च चरत (T2 सरथ) श्चित्रान्, T1 G मार्गान्विचरत· श्चित्रान् —$^{d}$) Ko 1 धावतश्च D1 कृतप्रतिकृतैः कृता, D3 S धावतश्च (T2 ध्वजं चैव) यशस्विनः —$^{e}$) D6 बहुर् (for मुहुर्) K6 मुरुत्पतनाच्चैव (sic), D3 मुहु रुत्पततश्चैव, S मुहुश्चोत्पततो दिशु —$^{f}$) K3 B4 D2 6 समपद्यत, D7 सह जायते, Cc परिजायते D3 S त्य (D3 by corr वा) सर्यंत रणे जना — For 79$^{cf}$, D1 subst

178* धावता हस्तिमार्गेषु मुहुरापतता पुन ।
कलिङ्गाना ससैन्यानां समोह समजायत ।

80 K2 om 80 (cf. v 1 77) —$^{a}$) S हन्यमान (for भीमसेन) Ko -भयात्रस्तं —$^{b}$) B1 4 Da Dn D4 5 7 8 S सैन्य तत्, D1 8 तत्सैन्यं (for सैन्य च) —$^{c}$) Ko असंबाध, M1 °बाधे, Co °बाध (as in text) D1 ताड्यमानमसख्येय, D5 क्षोभयामास सवाध, T1 G क्षोभ्यमाण महत्सैन्यं —$^{d}$) D1 गजेनेव; D8 T2 G2 ग्राहेणैव Dn2 D1 4 7 महासर

81 K2 om 81 (cf v 1 77) —$^{a}$) Da Dn1 D5 [अ]थ; D8 T1 G M3-5 तु (for च) K8 B3 D2 6 सर्वेषु, D8 S सैन्येषु (for वीरेषु) B1 संत्रासितेषु वीरेषु —$^{d}$) B Da Dn D4 5 7 8 S समंततः; D1 सहस्रशः, D8 च सर्वशः (for च सवशः)

82 K2 om 82 (cf. v 1 77) —$^{a}$) K5 पूर्व (for सर्व) D1 °पादेषु, T1 G4 °सैन्येषु (for °योधेषु) —$^{b}$) B1 2 वाहिनी°; Da2 D8 ध्वजनी°. —$^{c}$) B D (except D1 8. 6) अवादीत् (for अब्रवीत्) D6 स्वानि सैन्यानि —$^{d}$) K4 B D (except D1-8 6) भारत, S मारिष (for पार्षतः)

83 K2 om. 83 (cf v 1 77) —$^{a}$) Ś1 Ko 1 सेनापतिमत; B2 4 D (except D1-8. 6) °पतेर्वच —$^{b}$) K5 Da1 D5 G2 शिखडी Ko 1 तत·, D3 S रथा· (for गणा·) D6 (m as in text) शिखडीप्रमुखा नृपा· —$^{c}$) Ko 1 5 B1 4 D (except D6, D2 marg sec m) भीष्मम् (for भीमम्) Ko अभ्यवर्तत; K5 अभिवर्तत —$^{d}$) D3 T2 प्रहारिण

84 K2 om 84 (cf v 1 77) —$^{a}$) T2 पार्थे· (for सर्वान्) —$^{b}$) S पालयन्पृष्ठतोऽन्वगा (M1 °या) त् —$^{c}$) S मेघ (M2 रथ) घोषेण —$^{d}$) D6 नागानीकेषु· S गजा (M1 रथा, M2 तथा) नीकेन दसित·

85 $^{a}$) Ś1 Ko-2 सछाद्य, K8 D2 6 सनोद्य; K4 सदिश्य, K5 सबोध्य (for सचोद्य) D1 योधास्तु (for सर्वाणि) S सर्वसैन्यानि सचोद्य —$^{b}$) D1 राजन्सात्यकिपार्षतौ, S धृष्टद्युम्नो महावल —$^{c}$) D1 रक्षार्थं, Co जग्राह (as in text) —$^{d}$) K5 पार्णि सत्पुरुपोचित, B Da Dn D4 5 7 8 पार्ष्णि सत्पुरुषैर्वृत·, D1 जग्मतुस्त्वरितौ नृप; S पार्ष्णि सत्पु (G1-3 °र्ष्णीन्स्वपु, M2 °र्ष्णि स्वपु) रुषै· सह

86 $^{a}$) Ko-2 D2 पचाल°, D1 S °पुत्रस्य —$^{c}$) D8 प्रिय· सात्यकिभीमाभ्याम्, D6 न भीमसात्यकोरन्य·; T1 G M भीमशै (M1 °सै) नेययोरन्यो, T2 भीमसेनसमो वीरो —$^{d}$) D8 अन्य· पुरुपसत्तम·, S नर· प्रियतरो (T2 M °मो) भुवि

87 $^{a}$) K2 Da Dn D1 3-5 7 8 सोपश्यत, K3 B1 2 D2 6 सोपश्यच्च; K4 B4 सोपश्यत् (submetrical), K5 सोपश्चाच्च (sic), S स तं पश्यन् — T2 om 87$^{b}$–89$^{e}$ —$^{b}$) Ko-2 D1 8 अरिमर्दन —$^{c}$) M2 महाबाहु·.

88 T2 om 88 (cf v 1 87) —$^{a}$) Ko-2 5 D (except D2 8 6) M5 ननद (for ननर्द) D8 S (T2

भीमसेनं महाबाहुं पार्षतः परवीरहा ॥ ८७
ननर्द बहुधा राजन्हृष्टश्चासीत्परंतपः ।
शङ्खं दध्मौ च समरे सिंहनादं ननाद च ॥ ८८
स च पारावताश्वस्य रथे हेमपरिष्कृते ।
कोविदारध्वजं दृष्ट्वा भीमसेनः समाश्वसत् ॥ ८९
धृष्टद्युम्नस्तु तं दृष्ट्वा कलिङ्गैः समभिद्रुतम् ।
भीमसेनममेयात्मा त्राणायाजौ समभ्ययात् ॥ ९०
तौ दूरात्सात्यकिर्दृष्ट्वा धृष्टद्युम्नवृकोदरौ ।
कलिङ्गान्समरे वीरौ योधयन्तौ मनस्विनौ ॥ ९१
स तत्र गत्वा शैनेयो जवेन जयतां वरः ।
पार्थपार्षतयोः पार्ष्णिं जग्राह पुरुषर्षभः ॥ ९२
स कृत्वा कदनं तत्र प्रगृहीतशरासनः ।
आस्थितो रौद्रमात्मानं जघान समरे परान् ॥ ९३
कलिङ्गप्रभवां चैव मांसशोणितकर्दमाम् ।
रुधिरस्यन्दिनीं तत्र भीमः प्रावर्तयन्नदीम् ॥ ९४
अन्तरेण कलिङ्गानां पाण्डवानां च वाहिनीम् ।
संततार सुदुस्तारां भीमसेनो महाबलः ॥ ९५
भीमसेनं तथा दृष्ट्वा प्राक्रोशंस्तावका नृप ।

---

om ) पुरुषव्याघ्रो ( for बहुधा राजन् ) — b ) D3 जहास च, T1 G2 4 M जहृषे च, G1 3 जहर्षे च ( for हृष्टश्चासीत् ) Ś1 D1 6 परंतप, T1 G पुन: पुन — T1 G4 om 88c–89d — c ) Da Dn D4 7 8 दध्मौ स, D6 च दध्मौ ( by transp ) S ( T G4 om ) शंख च समरे दध्मौ

89 T1 G4 om 89 ( cf. v l 88 ), T2 om 89abc ( cf v l 87 ) — a ) Ś1 सर्व , G1–3 M2 स तु ( for स च ) K0 1 परावताश्वस्य, K6 D1 3 पारापताश्वस्य, Da पारावतश्वास्य, D8 पारावतश्वस्य, M1–3 5 पारावताश्वे तु, Ca पारावताश्वस्य ( as in text ) K3 D6 स चचार ततश्चास्य, D2 स च सवारतश्वास्य ( sic ), Cv as in text — b ) Dn2 रथं, Cd रथे ( as in text ) K3 5 Da Dn1 D1–3 5–8 हेमपरिस्कृते, G1–3 M हेमवि( M2 महति )भूषिते — d ) D2 3 समाश्वसन्; T2 समाह्वयत्, Cd समाश्वसत् ( as in text )

90 a ) K0–2 B Da Dn D4 5 7 8 धृष्टद्युम्नश्च ( for °द्युम्नस्तु ) K0 से दृष्ट्वा; K2 सदृष्ट्वा D1 धृष्टद्युम्नं परिष्कृत्य — b ) B2–4 Da Dn D4 5 7 8 कालिंगै° D1 सात्वत च महारथ° — c ) D1 भीमसेनो महामेघो, T1 G °सेन महाबाहु — d ) Ś1 K0 1 त्राणायासौ, Da Dn1 D6 द्रोणायाजौ D1 नरपर्वतमभ्ययात्

91 a ) K6 D1 दृष्ट्वा ( for दूरात् ) K B Da1 D2 3 6 S सात्य( G2 °त्वि )किं K6 दूरात्, D1 वीरौ ( for दृष्ट्वा ). — c ) K1 D1 कलिंग, K3 D2 6 कालिगान् T1 G4 योधान् ( for वीरौ ) — d ) K3–5 B D2 3 6 योधयेता Ś1 D3 तरश्विनौ, S यशस्विनौ ( for मन° )

92 K6 om 92a–94b — a ) K0 2 तत्र स ( by transp ) D1 [आ]माय, D8 यात्वा ( for गत्वा ) K1 D2 3 6 8 सैनेयो, Da1 G1 M2 शैनेयौ, D1 सेनानीर् — b ) D2 M5 जयेन ( for जवेन ) Ś1 जविना, K1 2 5 जवता, D2 यजता — c ) S ( except M3 5 ) भीम° ( for पार्थ° ) K3 D3 G2 पार्ष्णी, G3 पार्ष्णीन् — d ) K3 D2 6 8 T1 G2 4 पुरुषर्षभ, T2 M पुरुषोत्तम° — After 92, D1 ins

179* एतच्चतुर्दशे वर्षे भीमो दृष्ट्वा रणाजिरम् ।
विशेषेण गजान्राजन्पर तोषमुपागमत् ।

93 K5 om 93 ( cf v l 92 ) — a ) T2 त कृत्वा, M6 स दृष्ट्वा ( for स कृत्वा ) Ś1 K0–3 D1 2 6 दारुणं, Ca o कदनं ( as in text ) Ś1 K0–4 D1 2 6 कर्म ( for तत्र ) — b ) M2 प्रगृहीत° — D3 om 93c–96b — c ) D8 विधाय ( for आस्थितो ) D1 द्रौणम्; T1 G4 रुद्रम् — d ) T1 G रिपून् ( for परान् ) Ś1 K0–3 D2 6 कलिंगानन्ववैक्षत, D1 कलिंगानभिदुद्रवे, D8 कलिंगान्समयोधयत्

94 D8 om 94 (cf v l 93) K5 om 94ab (cf v l 92) — a ) B2 D4 T1 G4 M3 कालिंग° D5 M2 क( M2 का )लिंगप्रभवाश्चैव — b ) Ś1 °कर्दमान् — cd ) B2 °स्यदनं, Da1 Dn1 °स्यदनीं S रुधिरस्य नदीं तत्र भीम: प्रावर्तयद्( T1 °न्व )ली

95 D8 om 95 ( cf v l 93 ) — a )B Da Dn D4 5 7 अर्थान्तरे ( for अन्तरेण ) — b ) K6 पांडवानामनीकिनीं, S पाडूना चैव वाहिनी ( M1 3–5 भारत ) — c ) K0–2 सततान, D6 स ततार, C0 संततार ( as in text ) K3 D2 6 ता सततार दुस्तारां, S तस्या पा( T2 G1 3 M5 प )रमपाराया — d ) S भीमसेनोम्य गच्छत

96 D8 om 96ab ( cf v l 93 ) — a ) Ś1 K0–2

कालोऽयं भीमरूपेण कलिङ्गैः सह युध्यते ॥ ९६
ततः शांतनवो भीष्मः श्रुत्वा तं निनदं रणे ।
अभ्ययात्त्वरितो भीमं व्यूढानीकः समन्ततः ॥ ९७
तं सात्यकिर्भीमसेनो धृष्टद्युम्नश्च पार्षतः ।
अभ्यद्रवन्त भीष्मस्य रथं हेमपरिष्कृतम् ॥ ९८
परिवार्य च ते सर्वे गाङ्गेयं रभसं रणे ।
त्रिभिस्त्रिभिः शरैर्घोरैर्भीष्ममानर्छुरञ्जसा ॥ ९९
प्रत्यविध्यत तान्सर्वान्पिता देवव्रतस्तव ।
यतमानान्महेष्वासांस्त्रिभिस्त्रिभिरजिह्मगैः ॥ १००
ततः शरसहस्रेण संनिवार्य महारथान् ।
हयान्काञ्चनसंनाहान्भीमस्य न्यहनच्छरैः ॥ १०१
हताश्वे तु रथे तिष्ठन्भीमसेनः प्रतापवान् ।
शक्तिं चिक्षेप तरसा गाङ्गेयस्य रथं प्रति ॥ १०२
अप्राप्तामेव तां शक्तिं पिता देवव्रतस्तव ।
त्रिधा चिच्छेद समरे सा पृथिव्यामशीर्यत ॥ १०३
ततः शैक्यायसीं गुर्वीं प्रगृह्य बलवद्गदाम् ।

C 6 2346
B 6 54 113
K 6 54 113

---

Dn2 D4 5 7 तदा ( for तथा ) T1 G M वि( G2 व्या )क्रोशति स त दृष्ट्वा, T2 आक्रोशति सुत दृष्ट्वा — b) S तावका भरतर्षभ — c) D8 भीमजनक ( for °रूपेण ) — d) K5 Dn2 D4 7 8 कालिङ्गै D3 S युध्यतीति भयार्दिता

97 a) T1 G दृष्ट्वा, T2 M श्रुत्वा ( for भीष्म° ) — b) K1 2 Da1 Dn1 तन्, D8 ते ( for त ) S निनद त महाहवे — c) Ś1 K1 अभि° Ś1 K2 त्वरित Ś1 भीष्मो, Dn3 D4 [s]नीक ( for भीम ) — d) K0–2 व्यूढानीक, B2 °नीकै° S परतप ( for सम न्तत° ) D1 व्यूढानीकेन सवृत°

98 a) D2 स ( for त ) M1–3 5 सात्यकिर्भीमसेनोथ — b) K2 पार्षत — c) Ś1 अभ्याद्रवत S वेगेन ( for भीष्मस्य ) — d) K2 3 5 Da Dn1 D1–3 5–7 °परिस्कृत S रथैर्हेमपरिष्कृतै°

99 a) Da2 D5 संनि° ( for परि° ) K3–5 B1 3 4 D ( except D3 ) तु ( for च ) Ś1 तत ( for च ते ) D1 गागेय ( for ते सर्वे ) — b) D1 सर्वे ते ( for गाङ्गेयं ) K4 B D ( except D2 3 6 ) तरसा रणे, S द्रुतमाहवे ( for रभस रणे ) — c) T2 तीक्ष्णैर् ( for घोरैर् ) — d) Ś1 आनर्चुर्, Cd आनाच्छुर्, Ca आनर्छुर् ( as in text ) K3 D1 2 6 ओजसा, Co अञ्जसा ( as in text ) S भीष्म विव्यधु( G3 M3 °धु )राहवे

100 a) K0 पुत्रविध्यत (sic), K1 प्रतिविध्यत, K2 परि विध्यत D1 S प्रत्यविध्यत्तत° ( D1 T1 °ध्य तत ) सर्वान् — c) K0 यतमानो महेष्वासस् — d) T1 G2 4 त्रिभि र्बाणैरजिह्मगै

101 Ś1 om 101 — a) B1, 2 Da2 Dn1 ( before corr ) D5 T1 शत° ( for शर° ) — b) T1 G4 M1–3 5 महारथ° — d) K0 *हनच्, K5 चाहनच् ( for न्य हनच् ) K3 भीममभ्यहनच्छरै, Da Dn1 भीमस्याभ्याह, Dn2 D1 4. 5 7 8 भीमस्याभ्यह°, D8 भीमस्य न्यह, T2 भीम° सन्यह°, M4 भीमस्य निह°

102 a) K0 [s]थ, K3 D2 6 स, D1 च ( for तु ) K5 स हताश्वे रथे तिष्ठन् — c) K5 चिच्छेद ( for चिक्षेप ) K4 सहसा, S समरे ( for तरसा )

103 G3 om 103^ab — a) K4 5 B D अथ ( for एव ) — b) D3 T2 M4 राजन्, M1–3 5 घोरां ( for पिता ) D8 S ( G3 om ) शरै° ( for तव ) — c) K5 D ( except D1–3 6 ) द्विधा ( for त्रिधा ) — d) Ś1 अचीर्यत, D1 पपात ह Da Dn D4 5 7 8 पृथिव्यां सा ( Da Dn1 D5 स ) व्यशीर्यत, D8 S सा व्य शीर्यत ( T2 व्यशीर्यत च ) भूतले

104 a) Ś1 शक्या°, K0–3 D1–3 6–8 S ( except T1 ) सैक्या°, B3 सर्वा° ( for शैक्या° ) K1 2 गुर्वी — b) K3 D1 2 6 M3–5 बलवान्, K4 B Da Dn D4 5 7 8 T G महतीं, M1 2 विपुला ( for बलवद् ) — c) K3 4 B D2 ( marg *sec m* as in text ) 6 ततस्, D1 रथ ( for रथात् ) — d) K1 2 5 पुप्लुवे K0–2 मनुजेश्वर, K5 Da Dn1 D2 ( corr *sec m* ) D6 S भरतर्षभ, Dn2 D4 6 7 पुरुषर्षभ°, D1 मनुजो त्तम° — After 104, Da D4 5 8 read 109 ( Da D5 *repeating* it in its proper place ), while S ins

180* भीष्ममेवाभ्ययात्तूर्णं जिघांसु° पाण्डवर्षभ° ।

[ T2 °भ्यवर्तत, G1 3 M1 2 °भ्यधावत्त, M3–5 °भ्यधावत ( for भ्ययात्तूर्ण ) ]

भीमसेनो रथात्तूर्णं पुप्लुवे मनुजर्षभ ॥ १०४
सात्यकोऽपि ततस्तूर्णं भीमस्य प्रियकाम्यया ।
सारथिं कुरुवृद्धस्य पातयामास सायकैः ॥ १०५
भीष्मस्तु निहते तस्मिन्सारथौ रथिनां वरः ।
वातायमानैस्तैरश्वैरपनीतो रणाजिरात् ॥ १०६
भीमसेनस्ततो राजन्नपनीते महाव्रते ।
प्रजज्वाल यथा वह्निर्दहन्कक्षमिवैधितः ॥ १०७
स हत्वा सर्वकालिङ्गान्सेनामध्ये व्यतिष्ठत ।
नैनमभ्युत्सहन्केचित्तावका भरतर्षभ ॥ १०८

धृष्टद्युम्नस्तमारोप्य स्वरथे रथिनां वरः ।
पश्यतां सर्वसैन्यानामपोवाह यशस्विनम् ॥ १०९
संपूज्यमानः पाञ्चाल्यैर्मत्स्यैश्च भरतर्षभ ।
धृष्टद्युम्नं परिष्वज्य समेयादथ सात्यकिम् ॥ ११०
अथाब्रवीद्भीमसेनं सात्यकिः सत्यविक्रमः ।
प्रहर्षयन्यदुव्याघ्रो धृष्टद्युम्नस्य पश्यतः ॥ १११
दिष्ट्या कलिङ्गराजश्च राजपुत्रश्च केतुमान् ।
शक्रदेवश्च कालिङ्गः कलिङ्गाश्च मृधे हताः ॥ ११२
स्वबाहुबलवीर्येण नागाश्वरथसंकुलः ।

---

105 $^{a}$) K1 सात्त्विकोपि; D1 3 T2 °किस्तु, D3 °क्यपि; T1 G M सात्य( G2 3 °त्वि )किश्च — Ko 1 om. 105$^{ab}$. — After 105$^{ab}$, D1 ins

181* आप्लुत्याप्लुत्य वेगेन चर्म भ्राम्य पुनः पुनः ।
असिना तीक्ष्णधारेण योधाञ्छित्त्वा महाहवे ।

— $^{c}$) Ś1 K3-5 D1 2 6 गाङ्गेयसारथिं तूर्णं — $^{d}$) D8 S भारत ( for सायकैः ) D1 विध्वा चिच्छेद सोसिना

106 $^{a}$) K5 भीष्मस्य ( for °स्तु ) — T2 om 106$^{cd}$ — $^{c}$) Ś1 वातायमानस्, K5 D8 ( sup lin ) पतमानैश्च, T1 G M1 पात्यमानै( G1 °न, G3 °ना )स्तु, Ca c d वातायमानैस् ( as in text ) Da Dn1 D4 5 7 8 transp तैर् and अश्वै° K5 अश्वाव् ( for अश्वैर् ). — $^{d}$) Da Dn1 D5 व्यप° ( for अप° )

107 $^{b}$) K4 अपयाते ( for °नीते ). B D ( except D1-3 6 ) महारथे ( for °व्रते ) — $^{c}$) T G महा ( for यथा ). — $^{d}$) D3 दह ( for दहन् ) Ś1 T1 G2 4 कक्ष, Ko कक्ष्यम् ( for कक्षम् ). Ś1 K3 5 D2 6 इवे धितः; K4 समेधितः; B Da Dn D3-5 7 8 T2 M इवोल्बण ( Da Dn1 [ before corr ] D5 °ल्बणै ), D1 इवानलः, T1 G इवोज्ज्वलः ( G2 °लन् )

108 $^{b}$) Ś1 रणमध्ये, T1 G2 4 बलान्मध्ये, G3 वेला-मध्ये ( for सेना° ). K4 B D ( except D2 6 ) S व्यव स्थितः ( for व्यतिष्ठत ). — K5 om 108$^{c}$–109$^{d}$ — $^{c}$) D6 भीमम् ( for नैनम् ). K3 अभ्युत्सहेत्, D3 अभ्यहनन्, T1 G2 4 त्वभ्युद्ययुः; T2 G1 3 M चाभ्युद्ययुः ( for अभ्युत्सहन् ). Ś1 Ko-2 नैनमभ्यु( K2 °स्यु )त्सहे कश्चित — $^{d}$) Ko-2 तावको ( for तावका )

109 K5 B1 om 109 ( for K5, cf v l 108 ) Da D5 ( both for the first time ) and D4 8 read, 109 after 104 — $^{a}$) Ko-2 तदा°, G3 तवा°, M4 समा° ( for तमा° ) — $^{b}$) Ko-2 5 D1 3 S ( except M3 5 ) स्वरथं M3 5 वरं — $^{c}$) K1 2 पश्यतां M1 सर्व वीराणाम् — $^{d}$) D1 अपोह च, D3 अपोवाहद्, Cc अपोवाह ( as in text ) T2 यशस्विनीं

110 D8 om 110$^{ab}$ — $^{a}$) K1 Da Dn1 D5 M1 स, K5 आ ( for स ) K1 पचाल्यैर्, K5 D2 3 T2 G1 3 M पाचालैर्, D1 पचालैर् — $^{b}$) D3 T2 भरत-र्षभ — $^{c}$) M3 धृष्टद्युम्न D ( except D2 3 6 ) परि ष्वज्य ( for °ष्वज्य ) — $^{d}$) Ko-2 5 D ( except D2 3 6 ) समीयादथ D6 T2 G1 3 M5 सात्यकि, G2 सात्त्विकिं

111 $^{a}$) Da2 Dn1 ( before corr ) भीमसेन — $^{b}$) G2 सात्त्विकि D1 3 S परवीरहा ( for सत्यविक्रम ) — $^{c}$) Ś1 यदुव्याघ्रं; D1 °श्रेष्ठ; S ( except M4 ) °श्रेष्ठो

112 $^{a}$) K1 धृष्टा ( sic ), Dn1 ( by corr. ) दृष्ट्वा- Ko 4 5 B कालिंग° — $^{b}$) D1 °पुत्रः स ( for °पुत्रश्च ). — $^{c}$) K5 शक°; D3 शत्रु°; S सत्य° ( for शक्र° ) K1 कलिंगो, K3 कालिंग्य — $^{d}$) Ś1 कालिंगैश्च, Ko-2 भानुमाश्च, Da2 Dn2 D4 6 7 कालिंगाश्च D1 रणे ( for मृधे )

113 $^{b}$) K1 2 रथनागाश्वसंकुलः, K5 नागाश्वरथसं कुलाः, D3 T G M4 गजाश्वरथसंकुलः, M1-3. 5 रथाश्व गज° — After 113$^{ab}$, Ś1 Ko-4 B3 D2 6 ins

182* महापुरुषभूयिष्ठो वीरयोधनिषेवितः ।
[ K3 B3 D2 6 धीरयोध°, K4 योधवीरसमन्वितः ]

— $^{c}$) D8 भीमव्यूह, G1-3 महान्व्यूह — $^{d}$) G1-3 एतेन Ś1 सादितस् ( for मृदि° )

न च मे कोशतस्तात श्रुतवानसि वै पुरा ।
तदिदं समनुप्राप्तं यत्पाण्डूनवमन्यसे ॥ ३३
यश्च हेतुरवध्यत्वे तेषामक्लिष्टकर्मणाम् ।
तं शृणुष्व महाराज मम कीर्तयतः प्रभो ॥ ३४
नास्ति लोकेषु तद्भूतं भविता नो भविष्यति ।
यो जयेत्पाण्डवान्संख्ये पालिताञ्शार्ङ्गधन्वना ॥ ३५
यत्तु मे कथितं तात मुनिभिर्भावितात्मभिः ।
पुराणगीतं धर्मज्ञ तच्छृणुष्व यथातथम् ॥ ३६
पुरा किल सुराः सर्वे ऋषयश्च समागताः ।
पितामहमुपासेदुः पर्वते गन्धमादने ॥ ३७
मध्ये तेषां समासीनः प्रजापतिरपश्यत ।
विमानं जाज्वलद्भासा स्थितं प्रवरमम्बरे ॥ ३८
ध्यानेनावेद्य तं ब्रह्मा कृत्वा च नियतोऽञ्जलिम् ।
नमश्चकार हृष्टात्मा परमं परमेश्वरम् ॥ ३९
ऋषयस्त्वथ देवाश्च दृष्ट्वा ब्रह्माणमुत्थितम् ।
स्थिताः प्राञ्जलयः सर्वे पश्यन्तो महदद्भुतम् ॥ ४०
यथावच्च तमभ्यर्च्य ब्रह्मा ब्रह्मविदां वरः ।
जगाद जगतः स्रष्टा परं परमधर्मवित् ॥ ४१

C 6 2947
B 6 65 46
Y 6 65 46

---

33 [a]) G2 ते ( for मे ) T G तत्र ( for तात ) —[b]) S यत्र ( for वै ) —[c]) Ś1 तदिमं समनुप्राप्तो —[d]) T2 यत्कार्यं तत्र मन्यसे

34 [a]) D1 यश्च हेतुरवध्यत्वे, G2 यच्च हेतुर्हि दुर्द्धर्षे —[b]) Dn1 तेषामा° —[c]) B2 D4 M1-3 5 तत् ( for त ) K0 1 शृणुष्व B1 महाराजो, D1 महेष्वास ( for महाराज ) —[d]) T2 तत्र ( for मम )

35 [a]) D2 लोके च ( for लोकेषु ) T1 G4 स पुमान्, T2 तत्सत्त्व, M4 यद्भूत, C[a] तद्भूत ( as in text ) —[b]) D3 भूत नो, D5 ततस्मा, T1 G4 न भूतो, C[a c] भविता ( as in text ) K3 D2 या तथाविध, B2 D3 T G M4 न भविष्यति, C[c] नो भवि° ( as in text ) —[cd]) K3 D3 यज्जयेत् K4 B D ( except D1 2 ) सर्वान् ( for संख्ये ) K0 2 3 D3 c °धन्विना; B2 D2 °पाणिना S ससुरासुरमर्त्येषु यो विद्यात्तत्त्वतो ( G2 तद्विद्यात्ततो ) हरिम्

36 [a]) B1 बहु ( for यत्तु ) K0-2 तावत् ( for तात ) B1 कथितं यच्च मे तात —[b]) K0-2 मुनिना भावितात्मना —[c]) Ś1 पुराण गीत, D5 वतोयगीत ( sic ), D8 पुराणगीत , T2 G4 पुराणतत्त्व ( T2 °त्त्व° ) B3 Da1 Dn1 D5 धर्मस्य, D6 धर्मज्ञ, G1 4 M धर्मज्ञैस् D1 G3 पुराणगीतधर्मज्ञैस्, T1 G2 पुराण( T1 °ण )तत्त्व धर्मज्ञैस् —[d]) M4 तच्छृणु त्व ( for °णुष्व ) K3 यथा तथा, D1 2 6 विशां पते, T2 M यथाश्रुत — After 36, D1 ins an addl colophon ( *adhy no* 62 )

37 Before 37, D1 reads भीष्म उवाच —[a]) Da1 [अ]सुरा ( for सुरा ) —[b]) G2 समाहिता ( for °गता ) —[c]) Ś1 K0-2 उपासत ( K2 °ते ), K8 Da Dn1 D5 6 उपागम्य, D2 °मीन —[d]) K0 2 सर्वे ते ( for पर्वते ) S मानसोत्तरे

38 [ab]) B1 मध्य तेषां, Dn2 D4 तेषां मध्ये ( by transp ) K3 D1 3 6 उपा° ( for समा° ) D1 क्षट इयत ( for अपश्यत ) S प्रजापतिरथापश्यदासीनो महद द्भुत —[c]) K3 पुराण ( for विमान ) Ś1 च ज्वलद्, B1 प्रज्वलद्, C[c] जाज्व° ( as in text ) K0-2 विमान प्रवर भासा, B3 विमान जाज्वलवता, D1 विमानमुज्ज्व लाभास°, T1 G4 विमानस्य ज्वलद्भासा, T2 G1 3 °नस्थो ज्वलद्भा( T2 °न्भा )सा, G2 °नस्थज्वलद्भासा —[d]) K0-2 प्रज्वलद्, T1 G4 परमम्, G3 प्रावरम् ( for प्रवरम् ) B2 संतिके ( for अम्बरे ) K3 स्थित च प्रवरंबरे

39 [a]) K0-2 ज्ञानेनावेद्य, Da Dn1 ध्यानेनावेक्ष्य, D2 ध्यानेन वेद्य, D3 S ध्यानेनावे( M1-3. 5 °ल )क्ष्य K0-2 B Da Dn D1 4 5 7 8 T G M1-3 5 तद्ब्रह्मा ( T1 G4 M1 2 °ह्म ) —[b]) K0-2 नियतोजलिं, Dn2 °तोंजलिं, D2 6 G3 °ताजलिं —[c]) Ś1 K0-2 D2 6 तुष्टात्मा ( for हृष्टात्मा ) —[d]) K1 B Da Dn D4 5 7 8 पुरुषं, D1 G1 परम° D8 परमेश्वर

40 [a]) D1 तु स , D2 चैव, T1 G4 M2 चापि, T2 G1-3 M1 3-5 चाथ ( for त्वथ ) Da1 Dn1 D5 वेदाश्च ( for देवाश्च ) —[b]) Ś1 K3 D8 G2 M3 5 ब्राह्मणम् ( for ब्रह्माणम् ) —[c]) S तस्थु° ( for स्थिता ) —[d]) K1 Da1 पश्यतो D1 पश्यतस्तन्महाद्भुत

41 [a]) K3 यथावत्तमथाभ्यर्च्य, B3 °वच्च समभ्यर्च्य —[c]) B1 M2 जगाम ( for जगाद ) —[d]) M2 परा, C[a] पर ( as in text ) Ś1 K0-2 परमं सर्वधर्मवित्

C 6 2944
B 6 65 47
K 6 65 47

विश्वावसुर्विश्वमूर्तिर्विश्वेशो
विष्वक्सेनो विश्वकर्मा वशी च ।
विश्वेश्वरो वासुदेवोऽसि तस्मा-
द्योगात्मानं दैवतं त्वामुपैमि ॥ ४२
जय विश्व महादेव जय लोकहिते रत ।
जय योगीश्वर विभो जय योगपरावर ॥ ४३
पद्मगर्भ विशालाक्ष जय लोकेश्वरेश्वर ।
भूतभव्यभवन्नाथ जय सौम्यात्मजात्मज ॥ ४४
असंख्येयगुणाजेय जय सर्वपरायण ।
नारायण सुदुष्पार जय शार्ङ्गधनुर्धर ॥ ४५
सर्वगुह्यगुणोपेत विश्वमूर्ते निरामय ।
विश्वेश्वर महाबाहो जय लोकार्थतत्पर ॥ ४६
महोरग वराहाद्य हरिकेश विभो जय ।
हरिवास विशामीश विश्वावासामिताव्यय ॥ ४७
व्यक्ताव्यक्तामितस्थान नियतेन्द्रिय सेन्द्रिय ।
असंख्येयात्मभावज्ञ जय गम्भीर कामद ॥ ४८

---

42 Before 42, Ko 1 read ॐ, K2 3 ब्रह्मा उवाच ॐ, D1 7 ब्रह्मोवाच, M1-3 5 ब्रह्मा —$^{a}$) T2 G1-3 M हि विश्वो, Cc विश्लेषो (for विश्वेशो) K3 D2 3 6 विश्वावसुर्वि(D2 6 °सो वि)श्वकृद्विश्वमूर्तिर्; T1 G4 °वसुर्विश्वगो विश्वमूर्तिर्, Ca as in text —$^{b}$) Cc विश्वसेनो, Ca विष्वक्सेनो (as in text) T2 विभुश्, Ca c वशी (as in text) —$^{c}$) Ś1 °वोपि, D5 °वोस्मि; M1 °वो हि D2 3 विश्वेश्वरो वासुदेवोमितात्मा· —$^{d}$) Ś1 दैवत त्वा, Da1 देव त्वाम्, D6 देवतायम्, Cc दैवत त्वाम् (as in text) Ś1 प्रणौमि, K2 B3 उपैषि, D3 T G1 4 उपैति, Ca c उपैमि (as in text) — For 42, D1 subst

257* विश्वावासो विश्वमूर्तिर्विष्वक्सेनो जनार्दन ।
विश्वकर्ता विश्वपतिर्देवदेव जगत्पते ।
योगेश्वर नमस्तेऽस्तु ससारार्णवतारण ।
[(L 1) विश्वभूतिर् (sup lin ) ]

43 $^{a}$) D1 (sup lin as in text) देव (for विश्व) —$^{b}$) Da1 D2 3 रत· —$^{c}$) Ko 1 Da1 D1. 2 योगेश्वर, B2 गोपीश्वर, M5 लोकेश्वर Da1 हि भो (for विभो) T1 G M4 जय योगमयो देव; T2 जय लोकमयाजेय, M1-3 जय योगमयाजेय, M3 (inf lin ) जय लोकेश्वर विभो — T G om (hapl ) 43$^{d}$–44$^{a}$ —$^{d}$) Ś1 D1 योग( D1 लोक )परायण, K3 D2 3 6 M लोकपराव( D6 °त्प )र, Cc योग° (as in text )

44 T G om 44$^{a}$ (cf. v l 43) —$^{b}$) B3 D3 T1 G4 जय योगे( D3 °गी )श्वरेश्वर —$^{c}$) Ko-2 भूत भव्य जगन्नाथ, S °भवो( G1-3 °व )न्नाथ —$^{d}$) D1 सौरे क्षराक्षर, D2 सौम्य जगत्पते, D6 सौम्यात्मज प्रभो, T1 G4 सर्वात्मकात्मभू, G1-3 सौम्यात्मकात्मज, Ca °त्मज (as in text) Cc d cite सौम्यात्मजात्मज·

45 $^{a}$) K4 B4 Dn2 D4 7 8 असख्येयगुणाधार, B1-3 °गुणज्ञेय, Da Dn1 D5 °गुणोज्ञेय, G3 असख्येयगुणाजेय Cc cites [अ]ज्ञेय (for [अ]जेय) —$^{b}$) D1 सर्वलोकसमुद्भव, D3 S (except M4) सर्वलोकपरायण Cc cites सर्व° (as in text) —$^{c}$) D6 सुदुश्चार, M2 सुदुर्वार; Cd सदु·पारे; Ca c सुदुष्पार (as in text). —$^{d}$) Ko-2 D1 3 6 जय शार्ङ्ग( D1 शख )गदाधर

46 $^{a}$) K3 4 B Da Dn D4 5 7 8 जय सर्वगुणोपेत —$^{b}$) D3 विश्वमूर्ति D1 जयाव्यय (for निरामय) Cc as in text — Ś1 reads 46$^{cd}$ twice —$^{c}$) Ś1 (second time) महेश्वर, Cc विश्वेश्वर (as in text) —$^{d}$) B3 4 Da Dn1 D6 जय लोकात्मतत्पर, D2 जय लोकानुकारक

47 $^{a}$) D3 महोरग वराहोद्य, T1 G4 °रगशयानाद्य, G1-3 °वराभोग, Cv °वराहाय, Cc as in text Ca cites महोरग, Cd °रग —$^{b}$) T1 G1. 4 हरे (G1 °रि·) शेष; G2 3 शय शेष, Ca c d हरिकेश (as in text) D3 जयोविभो (for विभो जय) —$^{c}$) G1 भूम्यावास, G3 भृत्यावास, G4 दिशीशेश, Ca हरिवास (as in text) Cc d cite °वास· K3 4 B D (except D3 6) T G दिशामीश, M3 5 वशामीश, Cc d विशा° (as in text) —$^{d}$) Ś1 विश्ववास मिताव्यय, Ko 3 4 B Da Dn D3-8 G2 3 विश्ववासामिताव्यय, D1 विश्वावास नमोव्यय, T2 विश्वावासमिता°, G1 विश्वावासामितव्यय, M1 3 5 विश्वा( M3 °श्व )वास सदाव्यय Cc cites विश्ववास·

48 D2 om 48 —$^{a}$) Ś1 व्यक्ताव्यक्तामितिस्थान, Ko Da2 D5 व्यक्ताव्यक्तमितस्थान, D6 व्यक्ताव्यक्तामितास्थाना, T G व्यक्ताव्यक्तस्थितस्थाने, M1 3-5 व्यक्ताव्यक्तास्थित( M5 °ति )स्थान, Ca °मितज्ञान, Cc as in text Cd cites व्यक्त and अमितस्थान —$^{b}$) K3

अनन्त विदितप्रज्ञ नित्यं भूतविभावन ।
कृतकार्य कृतप्रज्ञ धर्मज्ञ विजयाजय ॥ ४९
गुह्यात्मन्सर्वभूतात्मन्स्फुटसंभूतसंभव ।
भूतार्थतत्त्व लोकेश जय भूतविभावन ॥ ५०
आत्मयोने महाभाग कल्पसंक्षेपतत्पर ।
उद्भावन मनोद्भाव जय ब्रह्मजनप्रिय ॥ ५१
निसर्गसर्गाभिरत कामेश परमेश्वर ।
अमृतोद्भव सद्भाव युगाग्ने विजयप्रद ॥ ५२
प्रजापतिपते देव पद्मनाभ महाबल ।
आत्मभूत महाभूत कर्मात्मञ्जय कर्मद ॥ ५३
पादौ तव धरा देवी दिशो बाहुर्दिवं शिरः ।
मूर्तिस्तेऽहं सुराः कायश्चन्द्रादित्यौ च चक्षुषी ॥ ५४ C 6 2956 B 6 65 59 K 6 65 59

---

D1 8 सयत, K4 B Da2 Dn D4 5 7 8 सक्रिय, Da1 शक्त्य (for सेन्द्रिय) Ko-2 यतेंद्रिय समेंद्रिय, M1-3 5 नियतो नियतेंद्रिय — d) D8 सर्वगंभीर, M2 यज्ञगभीर (for जय गम्भीर)

49 a) K4 B D1.3 4 7 विदितब्रह्मन्, Da Dn D2 5 6 8 Cc °ब्रह्म, T G M4 विदितात्मा त्वम्, M1-3 5 °तार्थस्त्वम्, M3 (*inf lin*) विदिताब्रह्म (for विदितप्रज्ञ) — b) K4 B Da Dn D3-5 7 8 Cc नित्य भूतविभावन, S अद्भुतोद्भाव(T G4 °ताद्भुत, G2 °तोद्भव)भावन, M3 (*inf lin*) भूतभावन भावन — D2 om (hapl) 49c–50d — d) Ś1 विजयाय च, Ko-2 °यात्मक, K3 B1 D3 6 M4 °यावह, T G M1.2 °यो जय, Cc विजयाजय (as in text)

50 D2 om 50 (cf. v l 49) — a) K3 D1 गूढात्मन्, D3 S गुणा°, Cc गुह्या° (as in text) K3 4 B1 2 4 D (except D3, D2 om) M1 (*inf lin*) सर्वयोगात्मन्, B3 सर्व सर्वेश, Cd सर्वभूतात्मन् (as in text) — b) K2 सदसभूत°, K3 D1 स्फुट सभू(D1 °भू)तभावन, D6 M1.2 5 °सभूतिसभव, T1 G4 गुणसभूत°, G2 स्फुट सभूत°, Ca as in text Cd cites स्फुट and सभूत — c) K1 2 भूतार्थतत्तु (sic), Dn2 D7 भूतात्मतत्त्व, Ca c d भूतार्थतत्त्व (as in text) D5 योगेश, Ca c d लोकेश (as in text) B1 भूतात्मन्सर्वलोकेश, D1 °र्थलोकतत्त्वज्ञ, D3 भूताद्य लोकतत्त्वेश — d) D1 जटाजूटविभा°, D3 6 जय भूतविनाशन Ca cites भूतविभावन, Cc सत्त्वविभावन°, Cd भूतविभावन (as in text) — After 50, K3 *repeats* 49cd

51 a) Ś1 आत्मयोग, Da1 °योनि, Ca c d आत्म योने (as in text) — b) K1 B2 Da2 Dn D1 4 7 8 कल्पसख्येय तत्पर (D1 °य सत्तम), Da1 D2 5 Cd कल्पसक्षय°, D4 (marg) T1 G2 4 कल्पसयोग°, Cc as in text Ca cites कल्प and सक्षेप — c) Ko-2 B3 तद्भावन, T2 शुद्भावन, M (M4 by corr) मद्भावन; Ca c उद्भावन (as in text) K (K5 om) B D (except D3) M2 3 5 Ca c d मनोभाव, T1 G4 जयोद्भाव, T2 मतोभाव, G1-3 मतोद्भाव — d) Ś1 Ko-2 B1.3 जय ब्रह्मजयप्रिय (B1 °प्रद), D1 जय ब्रह्मञ्जयाजय, D2 जय ब्रह्मजितप्रिय, G2 जय ब्रह्मजनि°

52 a) Ko 2 निसर्गसर्वाभिरव, K3 4 B D Ca c नि(B2 वि)सर्गसर्गनि°, S निसर्गमार्गनि° Cd cites निसर्गानद — b) Ca काम्येश — c) M4 5 अमृतो द्भाव, Ca c °द्भव (as in text) K1 2 सभाव, M2 तद्भाव, Ca c सद्भाव (as in text) — d) K1 2 D6 युगाग्रे, K3 D3 योगाग्नि, K4 B1-3 Da Dn D5 मु(B3 यु)क्तात्मन्, B4 युक्ताग्रे, D1 योगज्ञ, D2 युगांत, D4 7 8 Cc मुक्ताग्ने (D8 Cc °ग्ने), G1-3 M4 युक्ताग्नि (G1 °ग्निर्), T2 युक्ताना, M1 मुक्ताना M2 3 5 युक्ताग्ने (for युगाग्ने) Da1 विजयप्रद, M2 विनयप्रद T1 G4 युगारिविजय प्रभो

53 a) B3 प्रजापते महादेव — b) S महाभुज (M5 °व), Ca महाबल (as in text) — c) Ś1 Ko-2 D2 पद्मभूत, Cc आत्म° (as in text) B1 D1 महा भाग, Cc महाभूत (as in text) — K2 om (hapl) 53d–55a — d) Ś1 D2 कर्तात्मन्, Da1 कामा°, Dn2 D3 6 सत्त्वा°, S धर्मा°; Ca c कर्मा° (as in text) Ś1 कर्म च, K3 4 B2-4 Da1 D2 3 4 (after corr) 8 सर्वद, B1 Da2 Dn D1 4 (be fore corr) 5-7 S सर्वदा (for कर्मद)

54 K3 om 54 (cf v l 53) — a) K3 देव (for देवी) T1 G4 क्षिति पादौ नभो नाभिर्, T2 G1-3 क्षिति पा(G2 प)दोद्भवा देव, M क्षिति (M1 3 °ति) पादोद्भुतो (M2 °ते) देव — b) K (K2 5 om) B1 2 D1 3 6 बाहू (for बाहुर्) Da1 दिव गिर°, D1 नभ शिर, D2 दिशावर (for दिव शिर) S दिग्बाहु द्यौर्महाशिर — c) D3 तेद, G3 तेय (for तेऽह) Ko 1 हरा (Ko °र) कायश्; K3 D2 3 सुराकायश्, D3 शिर कालश् T2 मूर्तिस्ते निर्मलाकाश, Cv as in text Cc cites मूर्ति and अह — d) D5 चद्रादित्यं

C 6 2957
B 6 65 60
K 6 65 60

बलं तपश्च सत्यं च धर्मः कामात्मजः प्रभो ।
तेजोऽग्निः पवनः श्वास आपस्ते स्वेदसंभवाः ॥ ५५
अश्विनौ श्रवणौ नित्यं देवी जिह्वा सरस्वती ।
वेदाः संस्कारनिष्ठा हि त्वयीदं जगदाश्रितम् ॥ ५६
न संख्यां न परीमाणं न तेजो न पराक्रमम् ।
न बलं योगयोगीश जानीमस्ते न संभवम् ॥ ५७
त्वद्भक्तिनिरता देव नियमैस्त्वा समाहिताः ।
अर्चयामः सदा विष्णो परमेशं महेश्वरम् ॥ ५८
ऋषयो देवगन्धर्वा यक्षराक्षसपन्नगाः ।
पिशाचा मानुषाश्चैव मृगपक्षिसरीसृपाः ॥ ५९
एवमादि मया सृष्टं पृथिव्यां त्वत्प्रसादजम् ।
पद्मनाभ विशालाक्ष कृष्ण दुःस्वप्ननाशन ॥ ६०
त्वं गतिः सर्वभूतानां त्वं नेता त्वं जगन्मुखम् ।
त्वत्प्रसादेन देवेश सुखिनो विबुधाः सदा ॥ ६१
पृथिवी निर्भया देव त्वत्प्रसादात्सदाभवत् ।
तस्माद्भव विशालाक्ष यदुवंशविवर्धनः ॥ ६२

---

55 K2 om 55[a] (cf v l 53) — [a]) D6 बल सत्यश्च, Ca बल तपश्च (as in text) Cd cites तप and सत्य — [b]) K0 1 D2 धर्मकामात्मज प्रभो (D2 °ज प्रभु), K2 भूतकर्मात्मज प्रभो, K3 4 B2 4 Da Dn D1 3-8 धर्म(K4 °र्मं)कर्मात्मज तव, B1 कर्म धर्मात्मक तव, B3 धर्मकर्मार्थज तव, T1 G1 3 4 धर्मः कामोद्भव स्तव, T2 धर्मकर्मार्थ एव च, G2 धर्मः कामात्मजस्तव, M धर्मः कर्मा(M4 °र्मकामा)त्मजास्तव ❁ Co कर्म आत्मजः कार्यमित्यर्थः, Cd धर्मरूपस्य कर्मण आत्मजः कार्यम् । ❁ — [c]) Da1 D3 पवनश्वास, D1 पवनोश्वास — [d]) K2 °संभव: Ś1 K0 1 आपस्तेजोंशसंभवा (K1 °व:) Co cites स्वेद° (as in text)

56 [a]) Dn1 (by corr) T1 आश्विनौ T1 G1-3 M4 श्रवणे S देव (for नित्य) — [b]) K0 1 4 M जिह्वा देवी (by transp) D5 देवि जिह्वा सरस्वति — [c]) K1 Da1 वेदा, K3 B3 T2 M4 देवा: (for वेदा) D1 संस्कारविष्टा हि, D2 °हीना हि, D3 स्कधारनिष्ठा हि, D6 संस्कारनिश्चा हि, G1 3 सस्मारनिष्ठा हि, G2 सस्कार निष्ठाभिस्, Co °निष्ठा हि (as in text) — [d]) Ś1 K0-2 त्वयेद, K3 G1 M3 त्वदीय, D4 (before corr) त्वदाप D6 जगदामृतं, S (except G3) जगदास्थितं

57 [a]) K3 असख्यान, K4 B1 2 Da Dn1 D1 2 5 7 न सख्यान, B4 Dn2 D3 4 8 G1 2 M3 न संख्या न (B4 नु); G3 न सख्यात (for न सख्यां न) G2 परीणाम (by metathesis) Ś1 सख्या न परिमाणस्ते, K0-2 B3 सख्या न (K1 °ख्य न, K2 °ख्या न, B3 °ख्यान) परिमाण ते — [b]) Ś1 G1-3 पराक्रम: — [c]) Ś1 यो स्म योगीश, K0-2 चैव योगे च (K0 °गेश), S योगयोगेश, Co योगयोगीश (as in text) — [d]) Co सभवम् (as in text). S विजानीम (G2 3 M1 3-5 °म) परंतप (T2 पर्द तव)

58 [a]) K2 त्वद्भक्त; B4 त्वच्छक्ति — [b]) K1 नियम, B3 निमेषाम्, Co नियमैस् (as in text) K2 4 B D त्वा, K3 च (for त्वा) S नियमस्था: (for नियमैस्त्वा) B1 3 4 Dn2 D4 7 8 समाश्रिता; D2 प्रमोहिता — [c]) Ś1 K1 Dn2 D4 8 अर्चयाम Ś1 महाविष्णो, S सदा विष्णु — [d]) Ś1 K0 2 Dn1 D3 T2 परमेश, Da D6 परमेण, D2 परम त्वा. K0-2 D8 महेश्वर, Co महेश्वरम् (as in text)

59 [a]) K1 °गधर्व — [c]) G3 पिशाच — [d]) Ś1 K1 मृगपक्षवयासि च, K0 2 4 D1-3 6 मृगपक्षि(D6 °क्षी)वयासि च, B3 मृगपक्षसरी°, Da1 मृगपक्षीसरि°, S मृगपक्षिनगास्त(T2 M1-3 5 °गणास्त, G3 °नगा त)था Co cites सरीसृपा (as in text) Cd cites पक्षिणो and वयासि

60 [a]) K0-2 Da1 D2 त्वया (for मया) — [b]) K0-2 Da1 पृथिव्यास K1 Da1 तत् (for त्वत्) D1 T2 प्रसादत:, M5 °दज — D1 transp 60[cd] and 61[ab] — [c]) Ś1 K0-2 D1 2 पद्मगर्भ — [d]) K4 B Da2 Dn2 D5 कृष्ण दु खप्रणा(B3 Da2 Dn2 D5 °ना)शन

61 D1 transp 60[cd] and 61[ab] — [b]) D2 नेता त्व च (for त्वं नेता त्व) Ś1 जगत्सुत, K0 1 °त्सुत, K3 °त्सुख, B1 D2 °द्गुरु, D1 °त्पति°; Co °न्मुखम् (as in text) S तेनेद त्वन्मु(G3 तु मु)खं जगत्. — [c]) D1 त्वत्प्रसादात्सुरश्रेष्ठ — [d]) B2 देवता: (for विबुधा:) Dn1 G1 3 सह (for सदा)

62 [a]) M1-3 5 निश्चला, M3 (inf lin) निर्जिता (for निर्भया) — [b]) Ś1 सदाभव, K0 1 Da Dn1 (before corr) D6 सदा भवेत्, S भविष्यति — K1 om 62[cd] Ś1 K0 2 read 62[cd] after 63 — [c])

धर्मसंस्थापनार्थाय दैतेयानां वधाय च ।
जगतो धारणार्थाय विज्ञाप्यं कुरु मे प्रभो ॥ ६३
यदेतत्परमं गुह्यं त्वत्प्रसादमयं विभो ।
वासुदेव तदेतत्ते मयोद्गीतं यथातथम् ॥ ६४
सृष्ट्वा संकर्षणं देवं स्वयमात्मानमात्मना ।
कृष्ण त्वमात्मनास्राक्षीः प्रद्युम्नं चात्मसंभवम् ॥ ६५
प्रद्युम्नाच्चानिरुद्धं त्वं यं विदुर्विष्णुमव्ययम् ।
अनिरुद्धोऽसृजन्मां वै ब्रह्माणं लोकधारिणम् ॥ ६६
वासुदेवमयः सोऽहं त्वयैवास्मि विनिर्मितः ।
विभज्य भागशोऽऽत्मानं व्रज मानुषतां विभो ॥ ६७
तत्रासुरवधं कृत्वा सर्वलोकसुखाय वै ।
धर्मं स्थाप्य यशः प्राप्य योगं प्राप्स्यसि तत्त्वतः ॥ ६८
त्वां हि ब्रह्मर्षयो लोके देवाश्चामितविक्रम ।
तैस्तैश्च नामभिर्भक्ता गायन्ति परमात्मकम् ॥ ६९

C 6 2971
B 6 65 74
K 6 65 74

Ś1 Ko 2 त्वत्प्रसादाद्, T2 यस्माद्भव (for तस्माद्भव) — d) Ś1 Ko 2 D4 T2 G2 8 M2 5 °विवर्धन; D3 °समुद्भव

63 a) = 6 26 8c K1 °सस्थार्पणार्थाय — D1 om (hapl) 63bc — b) K2 D2 5 दैत्तेयाना, K3 दानवानां, K4 B1 दैत्याना च — c) Ko जगतां Ś1 D2 जगतो धारणार्थं च, K2 °ता धारणार्थं वै, K4 °तोनु ग्रहार्थाय, S °तो रक्षणार्थाय — d) Ś1 Ko–2 वैज्ञप्य, D1 विज्ञप्त, S प्रसाद, Co विज्ञाप्य (as in text) D2 शृणु (for कुरु) G2 हे (for मे) K3 B1 3 4 D (except D2 6) विभो — After 63, Ś1 Ko 2 read 62cd

64 D2 om (hapl) 64ab — a) Ś1 यत्तत्परपद गुह्य, Ko–3 B4 Dn2 D3 4 6 7 8 S यत्तत्परमक गुह्य, B1 तदेतत्परम गुह्य, D1 यत्तत्परतम गुह्य Cc cites यदे तत् and गुह्य (as in text) — b) K4 B Da Dn D4 5 7 8 त्वत्प्रसादादिद, D1 °दान्मया, T2 °दादय B2 4 D4 6 8 प्रभो G1 3 त्वत्प्रसादाद्भविष्यति — c) Ś1 Ko–2 यदेतत्ते, D1 मयैतत्ते, T1 G2 4 मया गीत, G1 3 M4 तदेव तु — d) D1 यथाधीतं, T1 G2 4 कुरु सर्वं, G1 3 M4 मया गीत M1.3 5 यथा तथा Co as in text

65 a) Ko–2 4 G1–3 दृष्ट्वा — c) Ko 2 D2 °त्मन° (for आत्मना) Ko–2 B3 Da1 Dn2 D5 6 साक्षी (for [अ]स्राक्षी) S सृज त्वमा (G3 सृज त्वामा, M1–3 5 सृजेस्त्वमा, M4 असृजत्वा) त्मना कृष्ण (G2 °ष्ण) — d) B2–4 Da Dn1 D4 5 7 8 ह्यात्म° (for चात्म°)

66 a) Ko–2 G2 प्रद्युम्नाश्चानि, B1 D3 6 °म्नादनिरुद्ध (D6 °द्धस), D2 °म्नमनि°, T2 M2 °म्न चानि°, M1 3 °म्नाचानु° Ś1 Ko 3 त्वा, Da1 M4 त, Dn1 (by corr) n2 D4 7 8 तु, D1 वै, D2 T2 M2 च (for त्व) — b) S प्राहुर् (for विदुर्) — c) M1 3 5 अनुरुद्धो G3 बृहत् (for ऽसृजन्) K1 मा वै T1 lacuna, G1–3 साव, G4 साज (for मा वै) — d) Dn1 (before corr) G1. 3 ब्राह्मण Da1 Dn1 D2 °धारण, D1 °कारण

67 a) B4 स्वय, D2 °मय Cv as in text — b) G1 3 त्वय्येवास्मि K1 G3 विनिर्मित — After 67ab, S ins

258* वासुदेवेति त विद्यायेनाहं निर्मित प्रभो ।
तस्माद्याचामि लोकेश चतुरात्मानमात्मना ।

[ (L 1) T G2–4 विद्या (for विद्याद्) T2 G1 M यत्राह (for येनाह) — (L 2) T2 योगेश (for लोकेश) ]

— c) Dn1 विभाज्य, G3 विबभौ B3 4 T2 G1–3 M4 भागमात्मान, D6 हि स्वमा°, D3 (m as in text) द्वादशो, T1 G4 भावमा°, M2 भागशा° — d) K3 4 D6 प्रभो S व्रज (G1 3 ब्रह्म) वै मानुषीं तनु

68 b) D1 °हिताय (for °सुखाय) — c) Da2 D2 5 6 T2 प्राप्य (for स्थाप्य) — d) B1 2 योग प्राप्स्यति, Da Dn1 D6 सयोग प्राप्य Ca cites सयोग

69 a) Ko 1 Da1 त्व हि D6 ब्रह्ममयो Ś1 D3 देवा, Ko 1 3 D1 2 देव, D6 देव (for लोके) S ततो दिशश्च लोकाश्च — b) Ś1 देवश्, D1 विष्णुश्, D3 8 वेदाश् Da1 D6 M2 °विक्रम — c) K3 4 B1 3 D3 5–7 तैस्तैर्हि, K2 D2 तैस्ते स्व, B4 Dn D4 8 तैस्तै स्वै; D1 सर्वैस्तैर्, M2 3 5 शस्तैश्च K4 Da2 Dn1 कर्मभिर् (for नामभिर्) K3 D2 T2 भक्त्या, B1 4 D3 5 6 युक्ता, D1 व्यक्त B2 Da1 तैस्तै स्वकर्मभिर्भक्ता — d) G1 गायत Da D5 परमा (Da1 वरमा, D5 वरगा) र्थकं, G2 °त्मन G3 भात्रयंत परात्मक — After 69, S ins

259* सर्वभूतेश्वर देव योग योगेश्वर प्रभुम् ।

[ T2 सर्वयोगेश्वर M4 सर्व (for योग) T1 G4 विभु, T2 हरिं (for प्रभुम्) ]

C 6 2972
B 6 65 75
K. 6 65 75

स्थिताश्च सर्वे त्वयि भूतसंघाः
कृत्वाश्रयं त्वां वरदं सुबाहो ।
अनादिमध्यान्तमपारयोगं
लोकस्य सेतुं प्रवदन्ति विप्राः ॥ ७०

इति श्रीमहाभारते भीष्मपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

# ६२

भीष्म उवाच ।
ततः स भगवान्देवो लोकानां परमेश्वरः ।
ब्रह्माणं प्रत्युवाचेदं स्निग्धगम्भीरया गिरा ॥ १
विदितं तात योगान्मे सर्वमेतत्तवेप्सितम् ।
तथा तद्भवितेत्युक्त्वा तत्रैवान्तरधीयत ॥ २
ततो देवर्षिगन्धर्वा विस्मयं परमं गताः ।
कौतूहलपराः सर्वे पितामहमथाब्रुवन् ॥ ३
को न्वयं यो भगवता प्रणम्य विनयाद्विभो ।
वाग्भिः स्तुतो वरिष्ठाभिः श्रोतुमिच्छाम तं वयम् ॥ ४
एवमुक्तस्तु भगवान्प्रत्युवाच पितामहः ।
देवब्रह्मर्षिगन्धर्वान्सर्वान्मधुरया गिरा ॥ ५
यत्तत्परं भविष्यं च भवितव्यं च यत्परम् ।

70 D2 om 70 — a) G3 भूते (for सर्वे) G2 °सङ्घा (for °संघा) — b) T1 G4 ज्ञात्वा°; G3 M4 कृता°. Ś1 K0-2 Da1 M2 3 त्वा (for त्वां) — c) Ś1 Da1 M2 °मध्य तम्. Ś1 K0-2 अनतयोनिं; D6 अपारणीय (for °योग) Cd cites अंत Cc cites अपार° Cc d cite योग° — d) D6 T2 हेतु, Cc d cite सेतु (as in text) Ś1 K0-2 विष्णु (for विप्रा)

Colophon om in K5 — *Sub-parvan* Omitting sub-parvan name, Ś1 K (K5 om) Da Dn1 D1-3 5 6 mention only विश्वोपाख्यान, M1 2 पचमेहनि, M4 पचमेह्निके. — *Adhy name* K4 पितामहस्तोत्र, D1 ब्रह्मस्तुति°, T2 वासुदेवप्रशसन, G2 वासुदेवस्तुति, M नारायणस्तुति° — *Adhy no* (figures, words or both) Da2 (*sup lin sec m*) 23, Dn2 T2 M3 4 62, D1 M5 63, T1 G 60, M1 2 61 (as in text) — *Śloka no* Dn 75, D5 62

## 62

1 K5 om 1a–17b (cf v 1 6 59 10) Da1 D5 om the ref — a) Da1 D5 देव° (for देवो) — b) K1 B Da Dn D4-8 लोकानामीश्वरेश्वर°, D1 लोकनाथो जगत्पति — d) K0-2 विश्व° (for स्निग्ध°)

2 K5 om 2 (cf v 1 1) Before 2, G3 ins विष्णु — a) T1 G (G1 damaged) M1-3 तनु, T2 ननु, M4 मम, M5 तं तु (for तात) T1 G (G1 damaged) लोकात्मन्, T2 M योगात्मन्, Cc d योगान्मे (as in text) — b) K3 D2 सर्वमेव (for सर्वमेतत्) S (G1 damaged) सर्वं तु तव चेप्सित — c) G1 3 यथा T G2-4 M4 तद्भवतीत्युक्त्वा

3 K5 om 3 (cf v 1 1). — a) D2 देवा स° (for देवर्षि). — d) S प्रजापतिम् (for पितामहम्)

4 K5 om 4 (cf v 1 1) — a) Ś1 कोन्वयायं; K0 2 कोनु यूय, K1 को न योय, D3 कोय यो Cc cites नु D2 हि भवता (for भगवता) — b) K0-2 G1 3 प्रभो (for विभो) — c) B1 वाग्भिश्चैव (for वाग्भि स्तुतो) T1 G2 4 वरिष्ठो हि — d) D3 स्तोतुम् (for श्रोतुम्) K1 इच्छाव त, B2 Dn1 D6 G1-3 M5 इच्छामि त (B2 तद्), B3 M4 इच्छे(M4 °च्छा)म तद्, T2 इच्छामहे D1 श्रोतुमिच्छाम तत्त्वय

5 K5 om 5 (cf v 1 1) — a) B2 (also as in text) T2 G2 3 M1-3 5 स (for तु) — b) D1 M4 पितामह (for °ह) — c) Ś1 देवान्देवर्षि°, K0-2 देवान्ब्रह्मर्षि°, B2 3 Da Dn1 D5 देवदेवर्षि° — d) D1 उवाच मधुराक्षर

6 K5 om 6 (cf v 1 1) — a) G3 यत्तत्त्वपरं

भूतात्मा यः प्रभुश्चैव ब्रह्म यच्च परं पदम् ॥ ६
तेनास्मि कृतसंवादः प्रसन्नेन सुरर्षभाः ।
जगतोऽनुग्रहार्थाय याचितो मे जगत्पतिः ॥ ७
मानुषं लोकमातिष्ठ वासुदेव इति श्रुतः ।
असुराणां वधार्थाय संभवस्व महीतले ॥ ८
संग्रामे निहता ये ते दैत्यदानवराक्षसाः ।
त इमे नृषु संभूता घोररूपा महाबलाः ॥ ९
तेषां वधार्थं भगवान्नरेण सहितो वशी ।
मानुषीं योनिमास्थाय चरिष्यति महीतले ॥ १०
नरनारायणौ यौ तौ पुराणावृषिसत्तमौ ।
सहितौ मानुषे लोके संभूतावमितद्युती ॥ ११
अजेयौ समरे यत्तौ सहितावमरैरपि ।
मूढास्त्वेतौ न जानन्ति नरनारायणावृषी ॥ १२
तस्याहमात्मजो ब्रह्मा सर्वस्य जगतः पतिः ।

C 6 2985
B 6 66 13
K 6 66 13

(for यत्तत्परं) Cc cites पर (as in text) K8 D8 4 (by corr) T1 G M भविष्यच्च (G2 °श्च), T2 भवश्चैव Cc cites भविष्य (as in text) D2 यत्पर च भविष्यत्वं (marg यत्तत्परात्परतर) — b) K8 D2 भविष्यन्च च, Da Dn D4 6 7 8 Cc भविता यच्च, D8 T1 G4 भवद्भूत च Ca cites भवितव्यात् Dn2 D6 तत्पर, Cc यत्पर (as in text) — c) Ś1 K0-3 Cd भूतात्मन, K4 B1 2 4 D8 6 Cc भूतात्मा च, D2 भूतात्मक (for भूतात्मा य) K0 2 प्रभोश्चैव, K1 प्रभू चैव, B3 परश्चैव, T G2-4 प्रसूश्चैव, M4 प्रसूतिश्च Cc cites प्रभु (as in text) — d) T1 G2-4 ब्रह्मवर्चं (for ब्रह्म यच्च) Cc cites ब्रह्म Ś1 K0 1 परं मत, K2 मतं पद, B4 परस्परं B1. 8 ब्रह्म यत्परम पद

7 K5 om. 7 (cf v l 1) — a) S तेनाह — b) Ś1 K1 सुरर्षभ, D1 सुरोत्तमा — c) K8 D2 °ग्रहार्थं च — Da1 om (hapl) $7^{d}$–$8^{e}$ — d) D8 योचितो S वै (for मे)

8 K5 om. 8 (cf v l. 1) Da1 om $8^{abc}$ (cf v l. 7) — a) Ś1 K0-2 Dn1 T1 G2 4 आतिष्ठद्, Cc आतिष्ठ (as in text) — b) Dn1 D4 (before corr) 7 श्रुति T2 G1 8 M वासुदेवेति विश्रुत — e) D5 आसुराणा — After $8^{c}$, K0 1 ins (L 1 = $8^{b}$)

260* वासुदेव इति श्रुत ।
वासुदेवगृहे साक्षात्

— d) K2 समवश्च

9 K5 om 9 (cf v l 1) T2 om (hapl) 9–10 — a) K8 येन, B8 Da Dn1 D1. 2 5 6 M8-5 ये च, M1. 2 ये वै (for ये ते) T1 G निहता ये च (T1 °ता श्चैव) सग्रामे — c) K0 2 य इमे, D1 ते भूमौ (for त इमे) — d) D1 भयानका, T1 G2 4 भयावहा (for महाबला)

10 K5 T2 om 10 (cf v l 1, 9) — a) Ś1 K0-2 Da1 G1. 8 भगवन्, D8 बलवान् — b) B8 वर्शी (for वशी) — c) K2 मानुषी, M5 मानुष — d) K0 चरिष्यामि, K1 2 Da1 G8 चरिष्यसि, B3 भविष्यति (for चरिष्यति)

11 K5 om 11 (cf v l. 1) — a) K0 यातौ, K2 योनौ, K8 D2 तात, B8 D5 यत्तौ, D1 S [पु]तौ, D6 यौ तु (for यौ तौ) — K0-2 om (hapl) $11^{b}$–$12^{a}$ — b) K8 D2 पुरुषाव् (for पुराणाव्) — M2 om $11^{c}$–$12^{d}$ — Dn2 D4 7 8 transp $11^{cd}$ and $12^{ab}$ — cd) S (M2 om) transp सहितौ and सभूतौ T1 G अमर° (for अमित°)

12 K5 M2 om 12 (cf v l 1, 11) K0-2 om $12^{a}$ (cf v l 11) Dn2 D4 7 8 transp $11^{cd}$ and $12^{ab}$ — a) D1 T1 G2 4 M4 अजय्यौ B Da Dn D4 5 7 8 S (M2 om) हि रणे, D1 च रणे (for समरे) D1 ह्येतौ, D8 यौ तौ (for यत्तौ) — b) B Da Dn1 D4 7 8 समेतैरमरैरपि, Dn2 सहितैरमरैरपि, D2 देवैरपि सवासवै, D5 सर्वदेवमयैरपि — c) Ś1 D1 G1. 8 मूढास्त्वेते, K1 8 D2 M8 5 °स्ते तौ, Da1 G2 °स्त्वेतौ K1 G2 जानाति (for जानन्ति) — T2 (which reads $13^{ab}$ after 23) om (hapl) $12^{d}$ and $13^{c}$–$21^{c}$ — d) D1 इमौ तौ केशवार्जुनौ — After 12, D1 ins

261* जगतश्चाग्रजौ विप्रस्ततो देवौ सुरर्षभा ।

13 K5 om 13 (cf v l 1) T2 reads and T1 G M *repeat* (with v l) $13^{ab}$ after 23 — a) K4 B D (except D1-3 6) S (except T2 M2) यस्य (for तस्य) D8 अग्रज (for आत्मजो) B D (except D1-3) पुत्र (for ब्रह्मा) — b)

C 6 2985
B 6 66 13
K 6 66 13

वासुदेवोऽर्चनीयो वः सर्वलोकमहेश्वरः ॥ १३
तथा मनुष्योऽयमिति कदाचित्सुरसत्तमाः ।
नावज्ञेयो महावीर्यः शङ्खचक्रगदाधरः ॥ १४
एतत्परमकं गुह्यमेतत्परमकं पदम् ।
एतत्परमकं ब्रह्म एतत्परमकं यशः ॥ १५
एतदक्षरमव्यक्तमेतत्तच्छाश्वतं महत् ।
एतत्पुरुषसंज्ञं वै गीयते ज्ञायते न च ॥ १६
एतत्परमकं तेज एतत्परमकं सुखम् ।
एतत्परमकं सत्यं कीर्तितं विश्वकर्मणा ॥ १७
तस्मात्सर्वैः सुरैः सेन्द्रैर्लोकैश्चामितविक्रमः ।
नावज्ञेयो वासुदेवो मानुषोऽयमिति प्रभुः ॥ १८
यश्च मानुषमात्रोऽयमिति ब्रूयात्सुमन्दधीः ।
हृषीकेशमवज्ञानात्तमाहुः पुरुषाधमम् ॥ १९
योगिनं तं महात्मानं प्रविष्टं मानुषीं तनुम् ।
अवमन्येद्वासुदेवं तमाहुस्तामसं जनाः ॥ २०
देवं चराचरात्मानं श्रीवत्साङ्कं सुवर्चसम् ।

D2 पिता, D3 T2 M1, 4 ( the last two second time ) प्रभु° ( for पति° ) — T2 om 13c–21c ( cf v l 12 ) — c ) Dn2 D4 7 8 [ऽ]नुनेयो ( for ऽर्चनीयो ) D1 [ऽ]यं, S ( T2 om ) वै ( for वः )

14 K6 T2 om 14 ( cf v l 1, 13 ) — a ) K0–3 D2 न वो, D1 तस्मान्, S ( T2 om ) न वै ( for तथा ) — c ) Ś1 K0–3 D2 6 S ( T2 om ) Ca अव( K2 G2 °वि )ज्ञेयो ( for नाव° ) Ś1 महावीर°, S ( T2 om ) महाबाहु° — After 14, S ( T2 om ) ins

262* एतत्पुरुषसंज्ञं वै पुराणं रूपमुत्तमम् ।
[ G2 °सजश ( for °सज्ञं वै ) ]

15 K6 T2 om 15 ( cf v l 1, 13 ) K3 B1 D2 om ( hapl ) 15ab — a ) D1 परमिक D1 M4 ब्रह्म ( for गुह्यम् ) — b ) K0–2 मत ( for पदम् ) — D1 om ( hapl. ) 15cd — c ) B1 M4 गुह्यम् ( for ब्रह्म ) — d ) K0–2 त्वेतत् ( for एतत् ). D7 reads from यश° up to परमक in 17b on marg

16 K6 T2 om 16 ( cf v l 1, 13 ) — a ) G1–3 अक्षयम्, C0 अक्षरम् ( as in text ) — b ) K1 D3 6 M एतद्धै, K4 एतच्च ( for एतत्तत् ) Ś1 K0 2 पदं, K1 Dn2 D5 6 मह° ( for महत् ) B Da Dn1 D4 5 7 8 एतच्छाश्वतमेव च, D2 G2 एतच्छाश्वतम महत् — G3 om 16c — c ) K0–2 4 B Da Dn D1 3–8 यत्तत्, D2 महत् ( for एतत् ) Dn2 D7 पुरुषसज्ञो, D4 ( before corr ) 8 परमसज्ञो, D4 ( by corr ) परम संज्ञ Dn2 [ऽ]य ( for वै ) — d ) Ś1 K0–2 धीयते, T1 G M2 हीयते, M3 ( inf lin ) 4 ध्रियते ( for गीयते ) T1 G M4 जायते, M1, 2 3 ( sup lin ) 5 गायते ( for ज्ञायते ) Ś1 K0–2 Dn2 च यत्, M3 ( inf lin ) च ह ( for न च )

17 T2 om 17 ( cf v l 13 ) K5 om 17ab ( cf. v l 1 ) — a ) S ( T2 om ) धाम, C3 तेज ( as in text ) — c ) D2 6 नित्य ( for सत्य ) K5 तत्रा जहु° सत्यकीर्ति° — d ) K5 निर्मित, Da Dn1 D5 काङ्क्षित ( for कीर्तित ) K1 2 Da1 °कर्मण, C3 c d °कर्मणा ( as in text )

18 T2 om 18 ( cf v l 13 ) — a ) K5 D3 6 transp सर्वै and सेन्द्रै° K4 B Da D4 5 7 8 तस्मात्सुरासु( K4 °त्सुरा सु )रैः सर्वैः, D2 °त्सुरेन्द्रैस्सुरैर्, S तस्मात्सेन्द्रैः सुरैः सार्धं — b ) K4 B Da Dn D4 5 7 8 सेन्द्रैश्च ( for लोकैश्च ) K5 M5 °विक्रमा — c ) Ś1 K5 न विज्ञेयो ( for नाव° ) K1 वसुदेवो

19 T2 om 19 ( cf v l. 13 ) — a ) D1 यस्तु ( for यश्च ) — b ) Ś1 प्र, K1 3 4 B D ( except D3 6 ) M3 स ( for सु° ) — c ) B1 T1 G1 4 M2 3 अविज्ञाय, B3 4 G2 3 M1 4 5 अवज्ञाय, Dn1 D4 8 आविज्ञानात् — d ) S ( T2 om ) तमाहुस्तामसात्मक

20 T2 om 20 ( cf. v l 13 ) T1 G om. 20ab — a ) K3 B3 4 D ( except D1 6 ) M1 4 यो योगिन, M2 3 5 ये योगिन ( for योगिन त ) — B3 om ( hapl ) 20b–21a — c ) K0 1 4 Da Dn1 D5 योवमन्येद्, D6 अवमन्याद्, T1 G1 2 4 M1. 3–5 अवमन्यते ( hypermetric ), G3 अवमाते, M2 अमन्यते ( for अवमन्येद् ) — After 20, K0–2 read 23cd

21 T2 om 21abc ( cf v l 13 ) B3 om 21a ( cf v l 20 ) K0–2 om 21a–22b D2 ( sec m ) 4 read 21 on marg — a ) Ś1 देवं यत्तु धरात्मान, K3 D2 3 6 देवं यश्च( D6 °वा य च )तुरात्मान, K5 देवे यस्तुरा° ( sic ), D1 देव यस्तु महात्मानं, S ( T2 om )

पद्मनाभं न जानाति तमाहुस्तामसं जनाः ॥ २१
किरीटकौस्तुभधरं मित्राणामभयंकरम् ।
अवजानन्महात्मानं घोरे तमसि मज्जति ॥ २२
एवं विदित्वा तत्त्वार्थं लोकानामीश्वरेश्वरः ।
वासुदेवो नमस्कार्यः सर्वलोकैः सुरोत्तमाः ॥ २३
एवमुक्त्वा स भगवान्सर्वान्देवगणान्पुरा ।
विसृज्य सर्वलोकात्मा जगाम भवनं स्वकम् ॥ २४
ततो देवाः सगन्धर्वा मुनयोऽप्सरसोऽपि च ।

कथां तां ब्रह्मणा गीतां श्रुत्वा प्रीता दिवं ययुः ॥ २५
एतच्छ्रुतं मया तात ऋषीणां भावितात्मनाम् ।
वासुदेवं कथयतां समवाये पुरातनम् ॥ २६
जामदग्न्यस्य रामस्य मार्कण्डेयस्य धीमतः ।
व्यासनारदयोश्चापि श्रुतं श्रुतविशारद ॥ २७
एतमर्थं च विज्ञाय श्रुत्वा च प्रभुमव्ययम् ।
वासुदेवं महात्मानं लोकानामीश्वरेश्वरम् ॥ २८
यस्यासावात्मजो ब्रह्मा सर्वस्य जगतः पिता ।

C 6 3001
B 6 66 29
K 6 66 29

---

वासुदेवं महात्मान — b) T1 G श्रीवत्साक (G2 °ग) चतुर्भुज — c) K3 B1 Da Dn1 D1-3 . 6 S (T2 om) जानति, K5 जानत Ś1 अवमन्येत्पद्मनाभ — d) Da1 Dn D3 6 बुधा (for जना) D1 तमाहु सात्विक जन, S तानाहुस्तामसान्बुधा (T1 G4 °स्तना, G1-3 °स्तनान्)

22 K0-2 om $22^{ab}$ (cf v l 21) Ś1 om $22^{a}$–$23^{b}$ — a) G2 M5 किरीटी (for किरीट) D6 किरीटकौस्तुभधन — b) D1 भक्तानाम्, M2 विप्राणाम् (for मित्राणाम्). D1 T G M4 अभयप्रद — c) K1 अवजानान्, K5 Da1 अवज्ञात (Da1 °न), G1-3 M1. 2 अवज्ञाय (for अवजानन्) — d) Da2 मज्जते (for मज्जति)

23 Ś1 om $23^{ab}$ (cf v l 22) — a) K0 1 D2 3 G1-3 विदिततत्त्वार्थैर्; K3 °तत्त्वार्थे, B3 °त त्त्वार्थं; D1 °तत्त्वार्था; T G4 M °तत्त्वार्थो — b) D1 ईश्वरेश्वरं — K0-2 read $23^{cd}$ after 20 K5 om $23^{cd}$ — c) G2 महावीर्यो (for नमस्कार्य) D1 स्तुवति वासुदेव ये — d) S लोकै सर्वै (for सर्वलोकै) K3 D2 6 सर्वलोके सुरोत्तम (K3 °कसुरोत्तम), D1 न ते प्रकृतिमानवा — After 23, T2 reads and T1 G M *repeat* (with v l) $13^{ab}$

24 Before 24, K2 Dn1 D4 m 3 G1 ins भीष्म उवाच — a) Ś1 K0 1 4 स एवमुक्त्वा (by transp) — b) K3 5 D1-3 देवानृषिगणान्पुरा (D1 °णास्तथा), K4 S देवान्सर्षिगणान्पुरा, B1 3 4 Da Dn1 D5 7 8 ऋषि (B1 सर्व, B3 सिद्ध, D7 8 सर्षि) देवगणान्पुरा, B2 देवानृषिदेवगणान्पुरा (hypermetric), Dn2 D4 स देवर्षिगणान्पुरा — c) K3 D1 3 6 सर्वभूतात्मा, K5 B Da Dn D2 4 5 7 8 S °भूतानि (for °लोकात्मा) — d) D2 3 G1 भुवन (for भवन)

25 a) K1 सु- (for स-) — b) K3 [ऽ]पि वा; D1 तथा (for ऽपि च) D2 मुनयश्चाप्सरोगणा — c) Ś1 D6 कथ, D1 गाथा (for कथा) Ś1 ब्रह्मणोद्गीत, K0-2 ब्रह्मणोद्गीता, K4 Da D5 ब्रह्मणो गीता — d) K1 D6 पीता (for प्रीता) D1 M4 गता (for ययु).

26 a) B D (except D1-3 6) एव श्रुतं K5 D2 महाराज (for मया तात) — b) S मुनीनां (for ऋषीणा) K1 Da1 भविता° — d) Ś1 सामुदाये, K0-2 समुदाये, Cc समवाये (as in text) Ś1 K0-2 4 5 D1 पुरातने

27 a) D3 6 S रामस्य जामदग्न्यस्य (by transp). — b) Ś1 K0 मार्कंडेयस्य — d) K1 2 श्रुतविशारद, K3 D2 3 S °वतां वर, K5 °विदां वर D1 6 सकाशाद्भरतर्षभ

28 a) K0 2 5 B3 4 D2 6 G1-3 M3 (*inf lin*) 4 Co एतदर्थं (for एतमर्थं) D3 अवज्ञाय, M1 2 3 (*sup lin* as in text) विजानीहि, M5 विजानाति (for च विज्ञाय) — b) K3 D2 3 त (for च) K3 प्रभुर् (for प्रभुम्) Ś1 अच्युत, K0-3 उत्तमं (for अव्ययम्) K5 श्रुत्वा त प्रभुधाव्यय — d) B Da Dn D4 5 7 8 °नामीश्वर प्रभु, M5 °नामीश्वरेश्वर (= $23^{b}$)

29 a) K0-2 तस्यासावात्मजो, K3 4 यस्य सावा°, B Da Dn D5 7 8 यस्य स्यादा°, D4 यस्य चैवा°, M2 यस्य वा आ° Ś1 ब्रह्म (for ब्रह्मा) D1 यस्यायमात्मनो ब्रह्मा — b) K1 पितु (for पिता) — c) Da2 D5 कथ तु, D1 स कथ T G [ऽ]र्च्ये (for ऽयम्) — d) K5 D2 अर्च्ये सेव्यश्च; B1 3 D3 अर्च्ये श्रेष्ठश्च; T G1 4 M सेव्यश्चैवेह, G3 सेव्यश्चैव (for अर्च्यश्चेज्यश्च) Ca c d cite अर्च्य and इज्य T1 G4 दानवैः

C 6 3001
B 6 66 29
K 6 66 29

कथं न वासुदेवोऽयमर्च्यश्चेज्यश्च मानवैः ॥ २९
वारितोऽसि पुरा तात मुनिभिर्वेदपारगैः ।
मा गच्छ संयुगं तेन वासुदेवेन धीमता ।
मा पाण्डवैः सार्धमिति तच्च मोहान्न बुध्यसे ॥ ३०
मन्ये त्वां राक्षसं क्रूरं तथा चासि तमोवृतः ।
यस्माद्द्विषसि गोविन्दं पाण्डवं च धनंजयम् ।
नरनारायणौ देवौ नान्यो द्विष्याद्धि मानवः ॥ ३१
तस्माद्ब्रवीमि ते राजन्नेष वै शाश्वतोऽव्ययः ।
सर्वलोकमयो नित्यः शास्ता धाता धरो ध्रुवः ॥ ३२
लोकान्धारयते यस्त्रींश्चराचरगुरुः प्रभुः ।
योद्धा जयश्च जेता च सर्वप्रकृतिरीश्वरः ॥ ३३
राजन्सत्त्वमयो ह्येष तमोरागविवर्जितः ।
यतः कृष्णस्ततो धर्मो यतो धर्मस्ततो जयः ॥ ३४
तस्य माहात्म्ययोगेन योगेनात्मन एव च ।
धृताः पाण्डुसुता राजञ्जयश्चैषां भविष्यति ॥ ३५
श्रेयोयुक्तां सदा बुद्धिं पाण्डवानां दधाति यः ।

---

(for मानवैः) D1 नार्च्यो नेज्यश्च मानुषैः, G2 सेव्य श्चैवमहानवैः (sic)

30 $^{a}$) Ś1 K0-2 M1 3 (*inf lin* as in text) वारितोपि, B3 आवितोसि, C0 वारितोऽसि (as in text) K3 5 D1-3 6 M2 मया (for पुरा) D1 राजन् (for तात) — $^{b}$) K4 B Da Dn D4 5 7 8 मुनिभिर्भावितात्मभिः — $^{c}$) Da2 सयुगे K0-2 तात (for तेन) S मा गास्त्व विग्रह तेन (T2 °स्त्र वासुदेवेन) — $^{d}$) T2 विग्रह तेन (for वासुदेवेन) K3-5 B D धन्विना (for धीमता) — $^{e}$) Ś1 सारम् (for सार्धम्) K4 B D (except D1-3 6) पाडवै सार्धमिति यत्, S मा तात पाडवै सार्धं — $^{f}$) K3 Dn1 D2 3 6 त्व च, Dn2 D4 7 8 तत्त्व, D1 तन्न (for तच्च)

31 $^{a}$) K6 मन्येत् (for मन्ये) Ś1 K0-2 T2 M4 त्वा, K5 तं (for त्वां) Da1 (*also* as in text) घोर; Dn2 क्रुद्ध, M2 क्रूर (for क्रूर) — $^{b}$) K3 5 D2 6 चापि (for चासि) K3-5 D2 तमोवृत S अथ वा ताम सात्मक — $^{c}$) Dn2 D4 6 8 तस्माद् (for यस्माद्). Ś1 गोविंद (for गोविन्द) D1 तेन त्व द्वेष्टि गोविंद — $^{d}$) K0 2 पाद्भूनां, K1 पहूनां (for पाण्डवं) Ś1 स, D2 6 7 त (for च) — After 31$^{cd}$, T1 G4 *repeat* 28$^{cd}$ — $^{f}$) K3 4 B Da Dn D1-5 7 8 S कोन्यो (for नान्यो) C0 cites अन्यो, Cd अन्ये Ś1 द्विषाद्धि, K0-2 द्विष्टाद्धि, D2 हन्याद्धि, T G4 M द्वेष्टा हि, G1 द्वेष्टीह, G2 द्वेषी ह, G3 द्वेषीव (for द्विष्याद्धि) K6 को हन्याद्वेष्टि मानव, D6 तुल्य देश समावृतौ

32 $^{a}$) K0-2 यस्माद् (for तस्माद्) Ś1 K0 1 त्वा राजन्, K2 3 त्वां राजन्, K5 D2 राजेंद्र, D1 राज स्त्वाम् (for ते राजन्) — $^{b}$) Ś1 उषस°, K0 1 5 D2 एष स, B2 4 Da Dn D4 5 7 8 एषोसौ, D1 ह्यव्ययः (for एष वै) — $^{c}$) Ś1 नित्य, K3 5 D1 देव° (for नित्य°) — $^{d}$) K1 धातरो (sic), K3 D1 T2 M4 धाता वरो, K4 B Da Dn D4 5 7 8 C0 धात्री धरो; K6 धाराचरो, D6 धात्रीहरो (for धाता धरो) D5 ध्रुव M1 ध्रुवो धर° (by transp)

33 $^{a}$) K6 लोक Ś1 तारयते, K0 1 ताप°, K2 चार° (for धार°) D5 यस्मिन् (for यस्त्रींश्) D3 6 S यो धारयति लोकांस्त्रींश् — $^{b}$) K0 °गुरुध्रुव, K1. 2 Da1 °गुरुप्रभु, M2 °गुरु प्रभु° — $^{cd}$) T1 G4 यो धाता (for जेता च) D1 य सदा जायते तात सर्वलोकजनेश्वर°

34 $^{a}$) Ś1 K0 2 सृजन्, C0 राजा (for राजन्) Ś1 K0-2 5 D2 3 6 सर्वमयो, T1 G सत्य ह्य(G2 ह) तो (for सत्त्वमयो). Ś1 ह्येप (for ह्येष) — $^{b}$) B1. 3 D4 (before corr) 7 8 तमोरजोविवर्जित°; B2 4 Da Dn D5-7 तमोरजवि°, D3 M5 ततो रागवि°, T1 G4 कामरागवि°, G1 तमोरोगवि° — $^{d}$) = 5 39 7$^{d}$, 141 33$^{d}$, 146 16$^{d}$ 6 2 14$^{d}$, 21 11$^{d}$, 61 16$^{d}$, etc T2 ततो धर्म प्रजायते

35 $^{a}$) Ś1 K0 1 D5 यस्य (for तस्य) — $^{b}$) K4 B D (except D2) योगेनात्ममयेन च, T1 G M4 °नात्म बलेन च, T2 M1-3 5 °नात्म(T2 °न च)बलेन च C0 cites योगेन and आत्ममयेन — $^{cd}$) Ś1 धृत°, K5 D1 2 वृता (for धृता) D6 G3 जयस्तेषा M1. 2 3 (*inf lin* as in text) 5 धृता पार्था जयश्चैषा भविष्यति नरर्षभ

36 D1 reads 36 twice consecutively — $^{a}$) Ś1 श्रेयोयुक्त (for °युक्ता) Ś1 K0-2 तथा; T1 G2 4 सता (for सदा) D3 शुद्धिं (for बुद्धिं) — $^{b}$) D3 पाडवेभ्यो Ś1 K0-2 करोति, K5 D1 (both times) 2 3 T

बलं चैव रणे नित्यं भयेभ्यश्चैव रक्षति ॥ ३६
स एष शाश्वतो देवः सर्वगुह्यमयः शिवः ।
वासुदेव इति ज्ञेयो यन्मां पृच्छसि भारत ॥ ३७
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ।
सेव्यतेऽभ्यर्च्यते चैव नित्ययुक्तैः स्वकर्मभिः ॥ ३८
द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च ।
सात्वतं विधिमास्थाय गीतः संकर्षणेन यः ॥ ३९
स एष सर्वासुरमर्त्यलोकं
समुद्रकक्ष्यान्तरिताः पुरीश्च ।
युगे युगे मानुषं चैव वासं
पुनः पुनः सृजते वासुदेवः ॥ ४०

C 6 3013
B 6 66 41
K 6 66 41

इति श्रीमहाभारते भीष्मपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

G M3 5 ददाति (for दधाति) K6 D2 S स (for य॰) — c) K4 B Da Dn2 D4 5 चापि (for चैव) G2 [ज]परे (for रणे) — d) K2 D2 रक्ष्यति, T2 वक्ष्यते

37 a) D3 य (for स) Da1 G2 एव (for एष) Ś1 Da1 देव, B3 4 Dn2 D4 8 दिव्य॰ (for देव) — b) Ś1 K0–3 सर्वगुह्यतम॰, B Da Dn D4 5 सर्वभूतमय॰, G2 ॰गुह्यलय॰ D1 हर॰, Cc शिव॰ (as in text) K6 D2 तमोरागविवर्जित॰ (= 34b) — c) B2–4 D (except D1–3 6) प्रोक्तो, S ख्यातो (for ज्ञेयो) — d) D8 यन्मा त्व परिपृच्छसि, S यन्मा (M1 3–5 ॰न्मा) त्व पृष्टवान्विभो (M1 3 4 ॰नसि)

38 Cv cites the entire stanza as in text — b) Ca c d कृतलक्षणै॰ (as in text) G2 शूद्रश्चैव कृतक्षणै॰ — c) K0 2 [ऽ]भ्यर्चिते, D2 चार्च्यते (for ऽभ्यर्च्यते) S अर्चनीयश्च सेव्य(T2 नित्य)श्च — d) D8 नित्य युक्तै॰, M2 नित्ययुक्ते Ś1 K0 2 D8 सुकर्मभि॰, S स्व(G1. 3 सु)कर्मसु

39 T2 om 39 — a) Ś1 युगस्यात (for ॰स्यान्ते) — c) K4 शाश्वत, G2 सात्वतीं, Ca c सात्वत (as in text) D1 वपुर्, G1–3 बुद्धिम्, Ca विधिम् (as in text) — d) K3 6 D2 G1 3 जात, D1 वृत॰ (for गीत) K2 Dn2 सकर्षणो न, G2 सारक्षणेन, M1–4 5 (sup lin) सकर्षणेति, Cc सकर्षणेन (as in text) K2 5 Da1 D2 वै, K3 D1 5 T1 G च, M3 (inf lin) 5 (sup lin) स (for य॰) K0 गीतसकर्षणोनय॰ (sic)

40 a) B2–4 Da1 Dn D2 4 7 8 एव (for एष) Ś1 देवासुर॰, K1. 4 B Da Dn D4 5 7 8 सर्वं सुर॰, K2 सर्वासुरमर्त्यलोके, K3 सर्वान्सुरमर्त्यलोकान्, S सर्वामर(T2 ॰मृत)मर्त्यलोक — b) Ś1 समुद्रकक्ष्यातरित॰, K1 4 B1 ॰कक्ष्यातरिता, K3 B3 4 Dn2 D2 4. 6–8 ॰कक्षांतरिता (Dn2 ॰त); K5 B2 D1 3 ॰कक्षातरिता, Da Dn1 D5 Ca ॰कुक्ष्यतरिता, T G ॰कल्पांतरिता (G1–3 ॰तां) Cc cites कक्षातरिता॰ Ś1 पुरीषु, K1 5 B1 2 D1. 3 5 G1–3 M2 पुरीं च, Da पुरीश्च — c) Ś1 मानुषक च, Da1 मानुषी चैव D7 m लोक K3 युगे युगे मानुष * * वान्स — d) B Da Dn D4 5 7 (m as in text) 8 विश्वकर्मा (for वासुदेव॰)

Colophon — *Sub-parvan* Omitting sub-parvan name, Ś1 K Da Dn1 D2 5 mention only विश्वो(K1 ॰शो)पाख्यान, M4 पचमेह्निके — *Adhy name* K4 Da Dn1 D5 T2 वासुदेवमाहात्म्य, G2 M1 2 वासुदेवमाहात्म्यकथन, M4 वासुदेवस्तुति॰ — *Adhy no* (figures, words or both) Da2 (*sup lin sec m*) 24, Dn2 (*sup lin*) T2 M3 4 63, D1 M5 64, T1 G 61, M1. 2 62 (as in text) — *Śloka no* Dn1 30, Dn2 D5 41

# ६३

C 6 3014
B 6 67 1
K 6 67 1

दुर्योधन उवाच ।

वासुदेवो महद्भूतं सर्वलोकेषु कथ्यते ।
तस्यागमं प्रतिष्ठां च ज्ञातुमिच्छे पितामह ॥ १

भीष्म उवाच ।

वासुदेवो महद्भूतं संभूतं सह दैवतैः ।
न परं पुण्डरीकाक्षाद्दृश्यते भरतर्षभ ।
मार्कण्डेयश्च गोविन्दं कथयत्यद्भुतं महत् ॥ २
सर्वभूतानि भूतात्मा महात्मा पुरुषोत्तमः ।
आपो वायुश्च तेजश्च त्रयमेतदकल्पयत् ॥ ३
स सृष्ट्वा पृथिवीं देवः सर्वलोकेश्वरः प्रभुः ।
अप्सु वै शयनं चक्रे महात्मा पुरुषोत्तमः ।
सर्वतोयमयो देवो योगात्सुष्वाप तत्र ह ॥ ४
मुखतः सोऽग्निमसृजत्प्राणाद्वायुमथापि च ।
सरस्वतीं च वेदांश्च मनसः ससृजेऽच्युतः ॥ ५
एष लोकान्ससर्जादौ देवांश्चर्षिगणैः सह ।
निधनं चैव मृत्युं च प्रजानां प्रभवोऽव्ययः ॥ ६

## 63

1 ${}^{a}$) = $2^a$ $K_4$ B Da Dn $D_{4\ 5\ 7\ 8}$ $T_2$ $M_4$ Cc महाभूत॰ ($Dn_2$ $T_2$ $M_4$ ॰त) — ${}^{b}$) $D_1$ गीयते (for कथ्यते). S सर्वलोकगुरुश्च य॰ ($T_1$ $G_{2\ 4}$ स॰). — ${}^{c}$) $Da_1$ $M_1$ [आ]गम, $M_5$ [आ]गम॰, Ca [आ]गम (as in text) $K_3$ प्रतिष्ठा, Ca c d प्रतिष्ठा (as in text) — ${}^{d}$) S श्रोतुम् (for ज्ञातुम्). $K_4$ ज्ञातुमिच्छामि भारत

2 ${}^{a}$) = $1^a$ $K_{0-2}$ $G_3$ वासुदेव $Dn_1$ $T_2$ महाभूतं, $D_3$ महद्भूत॰, $M_4$ महाभूत॰ — ${}^{b}$) $Ś_1$ उद्भूत; $K_{0-2}$ अद्भुत $K_3$ ॰दैवतं (for दैवतै॰) $K_4$ B Da Dn $D_{4.\ 5.\ 7\ 8}$ सर्वदैवतदैवत, S सभूतमिह दैवत — ${}^{d}$) $D_1$ भरतोत्तम, $G_{1\ 3}$ $M_4$ पुरुषर्षभ. $K_4$ *पर दृश्यते भुवि — After $2^{cd}$, $D_4$ S ins

263* श्रुतं मे तात रामस्य जामदग्न्यस्य जल्पत॰ ।
नारदस्य च देवर्षे॰ कृष्णद्वैपायनस्य च ।
असितो देवलश्चापि वालखिल्यास्तपोधना ।

[ (L 1) $D_4$ $T_2$ कथ्यत॰ (for जल्पत) — (L 3) $T_2$ अतौ देवालयश्चापि (sic) ]

— ${}^{e}$) $Ś_1$ $K_{0\ 1}$ मार्कंडेयश्च $K_{1\ 4}$ B D (except $D_2$) $T_2$ M गोविंदे — ${}^{f}$) S (except $T_2$) कथयत्य॰ $D_3$ $G_{1\ 3}$ मह॰, $T_1$ $G_4$ पर, $G_2$ मम (for महत्)

3 ${}^{a}$) S ॰भूतादि, Cc ॰भूतानि (as in text) — ${}^{b}$) Da $Dn_1$ $D_5$ सत्त्वात्मा (for महात्मा) B $Da_2$ $Dn_1$ $D_{4\ 6\ 7\ 8}$ पुरुषोऽव्यय॰, $D_6$ पुरुषोत्तम Cc cites अव्यय॰ — $G_1$ om (hapl) $3^c$–$4^d$ — ${}^{d}$) Cc cites त्रयीं

4 $G_1$ om $4^{abcd}$ (cf v l 3) — ${}^{a}$) $Ś_1$ स सृष्ट्वा, $K_{3-5}$ $D_2$ $T_2$ स दृष्ट्वा, $B_{1\ 3}$ असृष्ट्वा; $B_{2\ 4}$ Da Dn $D_4$ (also as in text) $_5$ अदृष्ट्वा, $D_3$ ससृजे (for स सृष्ट्वा) $Ś_1$ चैव, S ($G_1$ om) देवीं (for देव॰) — ${}^{b}$) $D_1$ सर्वलोकेश्वरेश्वर — ${}^{d}$) $D_2$ पुरुषोत्तम (for ॰त्तम) — ${}^{e}$) $K_2$ सर्वतेजमयो, $K_4$ B Da Dn $D_{1\ 4-8}$ सर्वतेजोमयो, $D_2$ ॰लोकमयो, S ॰देवमयो- $T_2$ $G_3$ देव (for देवो) — ${}^{f}$) Da Dn $D_5$ योगी, Cc योगात् (as in text) $K_4$ $B_{2-4}$ $Da_2$ यत्र ह, $Da_1$ $Dn_1$ यद्गह॰; $D_1$ तत्र हि, $D_5$ य इह Cc cites यत्र $B_1$ योगात्स्रष्टा बभूव ह, S शयान॰ शयने सुख

5 ${}^{a}$) $Ś_1$ प्रचेता॰ (for मुखत॰) $K_0$ उत्सृजन्; $K_1$ उत्सर्जन् (for असृजत्) — ${}^{b}$) $K_3$ $D_2$ तथापि च; $Dn_2$ $D_{3.\ 4}$ अथासृजत्, $D_1$ तथैव च (for अथापि च) — ${}^{c}$) $Ś_1$ सरस्वती $T_1$ देवांश्च (for वेदांश्च) — ${}^{d}$) $K_{3.\ 5}$ $D_{2\ 6}$ [ऽ]सृजद् (for ससृजे) $K_4$ प्रभु, $K_5$ अव्यय॰ (for ऽच्युत॰) $K_4$ m B Da Dn $D_{4\ 5\ 7\ 8}$ वासुदेवो महामना॰ ($D_5$ ॰त्मना), $D_1$ मनसा सृजतेऽच्युत॰, S वासुदेवो महायशा Cc cites महामनाः

6 ${}^{a}$) B $Da_2$ $Dn_2$ $D_{5\ 7\ 8}$ एव (for एष) $B_4$ लोक (for लोकान्) — ${}^{b}$) $K_{0-2}$ देवान्सर्षि॰; $K_{3\ 5}$ $D_2$ S देवानृषि॰, $B_1$ देवांश्च ऋषि॰ (hypermetric) $D_{1\ 3\ 6}$ देवाश्च ऋषिभि॰ सह — ${}^{c}$) $K_{3.\ 4}$ $B_{1-3}$ $D_3$ विधान, $K_5$ Da $D_{5\ 6}$ Cc निधान, T $G_4$ अमृतं, Ca cp निधन (as in text) $D_2$ चैप (for चैव) $K_{3\ 5}$ $B_4$ $D_{2\ 3.\ 6}$ $T_2$ Ca c मृत्युश् (for मृत्यु) — ${}^{d}$) $Ś_1$ प्रजाश्च, $K_5$ $D_2$ लोकानां (for प्रजाना). $Ś_1$ $K_1$ प्रभवाप्यय॰, $K_{0\ 5}$ S प्रभवाप्ययौ ($K_5$ ॰व्यय॰, $T_2$ $G_1$ $M_5$ ॰व्ययौ) Ca c cite प्रभव॰ and अव्यय

एष धर्मश्च धर्मज्ञो वरदः सर्वकामदः ।
एष कर्ता च कार्यं च पूर्वदेवः स्वयंप्रभुः ॥ ७
भूतं भव्यं भविष्यच्च पूर्वमेतदकल्पयत् ।
उभे संध्ये दिशः खं च नियमं च जनार्दनः ॥ ८
ऋषींश्चैव हि गोविन्दस्तपश्चैवानु कल्पयत् ।
स्रष्टारं जगतश्चापि महात्मा प्रभुरव्ययः ॥ ९
अग्रजं सर्वभूतानां संकर्षणमकल्पयत् ।
शेषं चाकल्पयद्देवमनन्तमिति यं विदुः ॥ १०
यो धारयति भूतानि धरां चेमां सपर्वताम् ।
ध्यानयोगेन विप्राश्च तं वदन्ति महौजसम् ॥ ११
कर्णस्रोतोद्भवं चापि मधुं नाम महासुरम् ।
तमुग्रमुग्रकर्माणमुग्रां बुद्धिं समास्थितम् ।
ब्रह्मणोऽपचितिं कुर्वञ्जघान पुरुषोत्तमः ॥ १२
तस्य तात वधादेव देवदानवमानवाः ।

C 6 3026
B 6 67 16
K 6 67 18

---

7 [a]) K4 B Da Dn D4 6 7 8 धर्मात्मा (for धर्मज्ञो) — [b]) D5 एककर्ता (for एष कर्ता) — [d]) K0 2 स वै देवः; K1 Da1 D4 6 पूर्वदेव, D1 पूर्वदेव, S आदेरादि (G1-3 °दि) (for पूर्वदेवः) K8 प्रभो; D1 M8 (inf lin) 8 सुर (for प्रभुः)

8 [a]) K3 4 B -4 D (except D1-4) भविष्य च — [b]) K4 सर्वम् (for पूर्वम्) D1 सर्वमेवान्वकल्पयत् — K0 1 om (hapl) 8[c]-9[b] K2 om (hapl) 8[c]-10[b] — [c]) K3 4 D2 T1 G M4 दिव (for दिशः) K3 स्व भूर्, B2 स्वदो (for खं च) — [d]) D2 नियमेन, D5 नियमाश्च, G2 निमेष च (for नियमं च)

9 K2 om 9, K0 1 om 9[ab] (cf v 1 8) — [a]) D4 ऋषीणाश्च, M1 2 सप्तर्षीश्च (for ऋषींश्चैव) K4 तु, K5 Da2 Dn D2 4 7 च, D8 om, S [अ]पि (for हि) — [b]) K5 D2 पद्मश्चैव (for तपश्चैव) K2 5 D2 T2 व्यकल्पयत्, K1 Da Dn1 [अ]न्वक°, B2-4 Dn2 D4 7 8 G1-2 M2-4 [अ]प्यक°, B1 D1 3 5 6 M1 2 [अ]स्यक° T1 G4 तपश्चैवमकल्पयत्, Ś1 as in text — [c]) T1 G4 सृष्ट्वापि, T2 G1 3 स्रष्टा यो, G2 स्रष्टा च (for स्रष्टारं) T1 G1 3 4 जगता, G2 जगतं (for जगतश्च) B1-3 4 Da Dn1 प्रजापतिं च स्रष्टारं, B4 Dn2 D4 7 8 प्रजापतिश्च जगतो, M1 2 एष यज्जगतश्चापि, M4 एष यज्जगत वापि — [d]) K4 D2 महात, B Da Dn D4 6 7 8 वरद (for महात्मा) K3 5 D2 8 अव्यय (for अव्ययः) D1 महात्मानमकल्मष

10 K2 om 10[ab] (cf v 1 8) — [a]) K1 अग्रज, K4 B Da Dn D4 6 7 8 अजय्य, D1 अजस्र, T G4 M1 2 अग्रज (for अग्रजं) — After 10[ab], K3 5 D2 T2 (om lines 2-3) ins

264* तस्मान्नारायणो जज्ञे देवदेवः सनातनः ।
नाभौ पद्मं बभूवास्य सर्वलोकस्य संभवः ।
तस्मात्पितामहो जातस्तस्माज्जातास्त्विमाः प्रजाः ।

[(L 3) D2 °ता इमा (for °तास्त्विमा)]

— [a]) Ś1 चाकर्षयद्, K5 D6 वाकल्पयद् — [d]) B1 अनत (for अनन्तम्) K5 D2 T1 G त (for य) T2 महत् (for विदुः) D6 अनत विश्वरूपिण

11 [b]) Ś1 K0-2 T2 M1-3 5 चैव, K4 चैनां (for चेमां) G3 सपर्वता, M4 सपत्तना — [c]) G3 ध्यानयोग च (for °योगेन) K0 विप्रास्य, B8 D1 G1 3 M2 विप्राश्च — [d]) K3 ये, K5 D1 य (for तं) K3 D1 विदति, B D3 6 T1 G4 M4 विदंति (for वदन्ति) Ś1 महौजसा, B3 4 Da Dn D4 5 7 8 महौजस

12 [a]) K2 B3 Da Dn1 D2 3 6 T2 कर्णश्रोतो(D2 T2 °श्रो)द्भव चापि, K3-5 B1 2 4 Dn2 D4 5 7 8 Ca c d °स्रोतो(K5 °श्रोतौ, B2 4 D5 8 Cc °श्रोतो)भव चापि, D1 स्वस्य श्रोत्रोद्भवं चैव — [b]) K0 2 D3 M2 3.5 मधुनाम, K5 B1 मधु चापि, D2 मधु वापि, D6 G3 मधुर्नाम B Da Dn1 D4 5 7 8 महौजसं (for महासुरम्) — Ś1 om 12[cd] — [c]) K5 तमुग्रमुखकर्माणं — [d]) K1 उग्रा प्रति, T1 G M4 उग्रबुद्धिं K3 5 B Dn2 D2 4 8 T1 G M समाश्रित (K5 °त), D6 समास्थित, T2 अवस्थित (for समास्थितम्) — After 12[cd], T1 G4 ins

265* हरन्तं ब्रह्मणो वेदाञ्जघान ब्रह्मणः पिता ।

— [e]) K1 D2 8 G3 ब्रह्मणोपचित, K3 °णापचितिं, T2 ब्राह्मणो°, Ca ब्रह्मणोपचितिं (as in text) Cc d cite अपचितिं B1 Da2 Dn D4-7 यातु, B2-4 D1 3 Ca c d यात, Da1 यांतु, D8 यात, Cdp कुर्वन् (as in text) — [f]) T1 G4 महात्मा (for जघान) D1 परमेश्वर (for पुरुषोत्तमः)

13 [a]) D2 (marg sec m) तावद् (for तात) Ś1 वारदेव, K3 वधाद्देव, B2-4 Da Dn D4 7 8 वधाद्देवा,

C 6 2027
B 6 67 16
K 6 67 15

मधुसूदनमित्याहुर्ऋषयश्च जनार्दनम् ।
वराहश्चैव सिंहश्च त्रिविक्रमगतिः प्रभुः ॥ १३
एष माता पिता चैव सर्वेषां प्राणिनां हरिः ।
परं हि पुण्डरीकाक्षान्न भूतं न भविष्यति ॥ १४
मुखतोऽसृजद्ब्राह्मणान्बाहुभ्यां क्षत्रियांस्तथा ।
वैश्यांश्चाप्यूरुतो राजञ्शूद्रान्पद्भ्यां तथैव च ।
तपसा नियतो देवो निधानं सर्वदेहिनाम् ॥ १५
ब्रह्मभूतममावास्यां पौर्णमास्यां तथैव च ।
योगभूतं परिचरन्केशवं महदाप्नुयात् ॥ १६
केशवः परमं तेजः सर्वलोकपितामहः ।
एवमाहुर्हृषीकेशं मुनयो वै नराधिप ॥ १७
एवमेनं विजानीहि आचार्यं पितरं गुरुम् ।
कृष्णो यस्य प्रसीदेत लोकास्तेनाक्षया जिताः ॥ १८
यश्चैवैनं भयस्थाने केशवं शरणं व्रजेत् ।

---

T2 वधादेके (for वधादेव) D1 कर्मणा तेन त देव — $^{b}$) Ko 2 M3 देवदानवमानुषा°, K1 °माधवा°, B Da Dn D4 7 8 ऋषिदानवमानवा (B3 °नुषा) — $^{c}$) K3 मधुसूदन (for °सूदनम्) D1 G1 इत्याहू, D6 8 G2 3 M3 5 इत्याहु (for इत्याहुर्) — $^{d}$) K5 जनार्दन° (for °नम्) — $^{e}$) T2 वाराहश्चैव T1 G M वा( G3 M4 व )राह ना( G2 M4 न )रसिंह च — $^{f}$) D3 M1, 2 त्रिविक्रम इति, T1 G M3-5 °ममिति T1 G4 M प्रभु

14 $^{a}$) M3 धाता (for माता) T1 G M1 2 4 5 एष धाता विधाता च — $^{b}$) S (except T2) प्रभु° (for हरि°) — $^{c}$) Ko-2 हरिं (for पर) M2 पुण्डरीकाक्षो — $^{d}$) D3 T1 G2 4 भूतो (for भूत) K5 च (for न)

15 Cf Ṛgveda 10 90 12 — $^{a}$) Ko-2 मुखतो ह्यसृजद्वि( Ko °न्वि )प्रान्; K3 5 Da1 Dn1 D2 3 6 मुखत° सो( D6 °तोऽय )सृजद्विप्रान्, K4 B Da2 Dn2 D4 5 7 8 मुखतोजनयद्विप्रान्, D1 ब्राह्मणान्मुखत° सृष्ट्वा, T1 G M असृजन्मुखतो विप्रान् ( T1 वीरान् ), T2 मुखतो ब्राह्मणान्सृष्ट्वा, text as in Ś1 only — $^{b}$) K1 2 क्षत्रिय तथा; D6 °यानघ (for °यास्तथा) D1 बाह्वोर्जा तांश्च क्षत्रिया° — $^{c}$) Ś1 K1, 2 4 B Da Dn2 D3, 5-8 वैश्याश्चाप्युरुतो, K3 वैश्यांश्चाप्युरतो, K5 °श्यांश्च पुरतो, D1 °श्याश्च ऊरुतो G1 राजा (for राजन्) — $^{d}$) K4 transp शूद्रान् and पद्भ्या Ś1 पद्भ्यस्, B Da Dn D4 5 7 8 पादास् ( for पद्भ्यां ) D1 शूद्रांश्चैव तु पादयो , D3 6 शूद्रान्वै पादतस्तथा — After 15$^{cd}$, T1 G4 M read (for the first time) 17$^{c}$-18$^{b}$ ( T1 G4 M4, only 17$^{cd}$), *repeating* the same in their proper places — G1-3 om 15$^{e}$-17$^{b}$ — $^{e}$) Ś1 T G4 M1 3-5 नियत (for नियतो) Ś1 Ko-2 S (G1-3 om) देव (for देवो) — $^{f}$) Ś1 K3 5 D1-3 6 निधन, Ko 4 B4 Da Dn D4 5 7 8 विधानं, T1 G4 M ईशान, T2 निदान ( for निधान )

16 G1-3 om 16 (cf v 1 15) — $^{a}$) Dn2 D7 ब्रह्मभूताम् (for °भूतम्) Ko ब्रह्मभूतममावस्या; D1 ब्रह्म तच सदा प्राहुर्, Ca c v as in text — $^{b}$) D1 दर्शपूर्णे, D2 3 पूर्णमास्या, Ca c v पौर्ण° (as in text) T1 G4 च सत्तम (for तथैव च) — $^{c}$) Dn2 D8 योगभूता, Ca c °भूत (as in text) Da1 Dn1 D5 परिभवेत्, Da2 °भवन् (for °चरन्) — $^{d}$) Ś1 केशवो (for केशव)

17 G1-3 om 17$^{ab}$ (cf v 1 15) — $^{a}$) Ko 2 T1 G4 M2 5 केदाव (for केशव) — $^{b}$) Ko 1 T1 G4 M2 °लोकपितामह, B Da Dn D4 5 7 8 °भूतजगत्पति Cc cites भूत and जगत् — T1 G4 M read (for the first time) 17$^{cd}$ after 15$^{cd}$ — $^{c}$) Ś1 Ko 1 M3, 5 (the latter two first time) एतम्, K4 एनम् (for एवम्) — $^{d}$) K3, 5 D2 मुनयो वेदपारगा°, D1 मुनय° शंसितव्रता°, S (except T2) मुनयस्तु जना( G3 नरा )- धिप

18 For sequence in M1-3 5, cf v 1 15 — $^{a}$) Ś1 एतमेव, Ko 1 T2 एतमेव, K3 4 B2 Da Dn1 D3 5-7 M4 एवमेत; B1 3 एवमेतद्, B4 एवमेव (for एवमेन). Ś1 Ko 1, 3-5 B D (except D3, 6) T2 विजानी याद् (for °नीहि) — $^{d}$) D1 लोकास्तेनार्जिता सदा, D6 लोकास्तेन जिताक्षया

19 $^{a}$) K3 यथैव तं, D2 3 M4 यश्च (D3 °श्चे) वैन, T1 G यश्चैन वै, T2 यश्च चैव — $^{c}$) D3 तदा (for सदा) Ś1 Ko-2 4 D1 M1 3 5 पठेत् (for पठञ्) K3 ह्येव, D1 चैव, D3 चेमं, T2 लोके (for चेद) K5 सदा वरपते देव, D2 सदा नरपते देव, T1 G M4 अध्याय शृणुयाच्चैन — $^{d}$) Dn2 सु (for स) Ko-2 4 T2 भवेत्सुखी (by transp), K5 सुखी नर°, T G M4 भवेद्भुवि (for सुखी भवेत्)

सदा नरः पठंश्चेदं स्वस्तिमान्स सुखी भवेत् ॥ १९
ये च कृष्णं प्रपद्यन्ते ते न मुह्यन्ति मानवाः ।
भये महति ये मग्नाः पाति नित्यं जनार्दनः ॥ २०
एतद्युधिष्ठिरो ज्ञात्वा याथातथ्येन भारत ।
सर्वात्मना महात्मानं केशवं जगदीश्वरम् ।
प्रपन्नः शरणं राजन्योगानामीश्वरं प्रभुम् ॥ २१

इति श्रीमहाभारते भीष्मपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

# ६४

भीष्म उवाच ।
शृणु चेदं महाराज ब्रह्मभूतस्तवं मम ।
ब्रह्मर्षिभिश्च देवैश्च यः पुरा कथितो भुवि ॥ १
साध्यानामपि देवानां देवदेवेश्वरः प्रभुः ।
लोकभावनभावज्ञ इति त्वां नारदोऽब्रवीत् ।
भूतं भव्यं भविष्यं च मार्कण्डेयोऽभ्युवाच ह ॥ २
यज्ञानां चैव यज्ञं त्वां तपश्च तपसामपि ।
देवानामपि देवं च त्वामाह भगवान्भृगुः ।

O om
B 6 68 4
K 6 68 4

20 a) K4 येन, G2 एव (for ये च) — b) Da1 Dn1 D4-8 S (except T2) transp ते and न T1 G2 4 पाण्डवा (for मानवा) K D2 न मुह्यति च मानवा — c) K3 क्षये (for भये) K0-2 यो मग्नान्, K3 4 D1 2 T2 मग्नानां, B Da Dn D3-8 T1 G1 2 4 M मग्नाश्च, G3 मानाश्च (sic) (for ये मग्ना) — d) K3.4 6 m D2 T2 त्राता, K6 शान्ता, B Da1 Dn D1.4-8 G1-3 M त्राति (for पाति) T1 G4 नित्य त्राति (for पाति नित्य)

21 a) K3 ततो, K4 6 B D1 Dn D2 6 7 8 एव, D2 4 6 म त (for एतद्) K0-2 भूत्वा; M2 राजा (for ज्ञात्वा) — b) Ś1 K0-2 Da1 T2 M3 यथा तथ्ये(K1 2 °थ्ये)न, K3 6 D2 T1 G यथा तत्त्वेन — c) K3 6 D2 S (except T2) सर्वात्मान (for °त्मना) Ś1 K1.2 T2 महादेव, K4 B D (except D1-3 6) महाभाग (for °त्मान) — d) K4 योगाना प्रभुमीश्वर, K6 D3 (sup lin) केशव शरण गत (K6 परं), D2 (orig) केशवस्य परस्पर, T1 G4 केशव जगतीपतिं — K3 D2 om. (? hapl) 21ef — e) D1 प्रयात शरण राजा — f) Ś1 D1 योगिन, K0-2 योगीश, K4 केशव, M1.6 योगीनाम्, M2 3 योगिनाम् Ś1 K0-2 पृथिवीश्वर (Ś1 °र), K4 D1 जगदीश्वर, D3 6 प्रभुमी(D6 °री)श्वर (for ईश्वर प्रभुम्)

Colophon — *Sub-parvan* Omitting sub-parvan name, Ś1 K D1-3.6 mention only विश्वोपाख्यान, M4 पचमेह्निके — *Adhy name* K4 Da Dn1 D. T2 वासुदेवमाहात्म्य (Da1 °मात्मे [sic]), D1 भीष्मदुर्योधनसवाद, G1 3 वासुदेवप्रतिष्ठाकथन, G2 वासुदेवकथन, M1 वासुदेवकथनमाहात्म्य, M2 वासुदेवमाहात्म्यकथन, M4 भगवत्स्तुति — *Adhy no* (figures, words or both) Da2 (*sup lin sec m*) 25, Dn2 T2 M3 4 64, D1 M. 65, T1 G 62, M1.2 63 (as in text) — *Śloka no* Dn1 23, Dn2 D5 24

## 64

1 M2 om the ref — a) K3 Dn1 चेम, Da1 चेद, D6 देच, T2 चैव (for चेद्) T1 G M स्तव वै ब्रह्मसयुक्त — b) K0 ब्रह्मभूत, K2 4 B Da Dn D1 5-7 8 T2 C0 ब्रह्मभूत, K3.5 D2 6 °प्रोक्त (for °भूत). K3 5 D2 6 महद् (for मम) T1 G M शृणु कृष्णस्य भारत — c) K2 देवश्च (for देवैश्च) D2 ब्रह्मक्षत्रिय वा वैश्यैर्, S (except T2) ऋषिभिर्देवताभिश्च

2 a) D2 माध्यानाम्, C0 साध्यानाम् (as in text) Cv साध्यानामपि देहाना — b) K3 5 D2 अपि सर्वेश्वर प्रभु, D5 S देवदेवेश्वर प्रभुं — c) D6 °भावेन (for °भावन) S °भावज्ञ (T2 °ज्ञो) C0 cites भावज्ञ — d) Ś1 K0 1 G1 3 M4 इति त्वा, T G2 4 M1-3 5 विदित्वा (for इति त्वा) — e) B3 भूत- K0 3 5 D2 3 G1-3 M भविष्यश्च (for भविष्य च) — f) Ś1 K2 मार्कंडेयो D1 ह्युवाच (for ऽभ्युवाच)

3 a) B4 Dn2 D4 7 8 transp यज्ञाना and यज्ञ

वीर्यश्लाघी नरश्रेष्ठस्तान्दृष्ट्वा समुपस्थितान् ॥ १५
साध्विदं कथ्यते वीरा यदेवं मतिरद्य वः ।
युध्यध्वं सहिता यत्ता निहनिष्यामि वो रणे ॥ १६
एवमुक्ता महेष्वासास्ते वीराः क्षिप्रकारिणः ।
महता शरवर्षेण अभ्यवर्षन्नरिंदमम् ॥ १७
अपराह्णे महाराज संग्रामस्तुमुलोऽभवत् ।
एकस्य च बहूनां च समेतानां रणाजिरे ॥ १८
तमेकं रथिनां श्रेष्ठं शरवर्षैरवाकिरन् ।
प्रावृषीव महाशैलं सिषिचुर्जलदा नृप ॥ १९
तैस्तु मुक्ताञ्शरौघांस्तान्यमदण्डाशनिप्रभान् ।
असंप्राप्तानसंप्राप्तांश्चिच्छेदाशु महारथः ॥ २०
तत्राद्भुतमपश्याम सौमदत्तेः पराक्रमम् ।
यदेको बहुभिर्युद्धे समसज्जदभीतवत् ॥ २१
विसृज्य शरवृष्टिं तां दश राजन्महारथाः ।
परिवार्य महाबाहुं निहन्तुमुपचक्रमुः ॥ २२
सौमदत्तिस्ततः क्रुद्धस्तेषां चापानि भारत ।

C 6 3261
B 6 74 24
K 6 74 24

---

श्लाघी, B2 Da Dn1 D5 S (T2 om ) तानुवाच (for वीर्यश्लाघी ) D3 नरश्रेष्ट, T1 G नरश्रेष्टान् — $^{d}$) B2 Da Dn1 D5 S (T2 om.) दृष्ट्वा वै (for तान्दृष्ट्वा) B1 3. 4 D (except D2 6 8) M4 समवस्थितान्, B2 समरे स्थितान् (for समुप°)

16 T2 om $16^{ab}$ (cf v l 14) — $^{a}$) D1 साधु वै, D5 साध्वेद, M1 8 6 साध्वीद D1 कथित (for कथ्यते) — $^{b}$) Ko-2 यदिद, K3-5 B Da2 Dn D2-8 M2 यद्येव, Da1 यद्येव (for यदेव) Ś1 परिणद्य व°, Ko-2 परिनद्य वै, D1 मतिरव्यया, D3 प्रहरेद्य वै, D6 मतिराववं — $^{c}$) M4 समदा (for सहिता) K3 5 D1 2 वीरा, D8 यस्नान् (for यत्ता) — $^{d}$) Ko 1 न हनिष्यामि, K3 निहनिष्याम Ko-3 5 D2 वै (for वो)

17 $^{a}$) S एवमुक्त्वा महेष्वासस् (T2 °ष्वासास्) — $^{b}$) S तान्वीरान (for ते वीरा) K3 5 D2 6 क्षिप्रका क्षिण°, T2 G1-3 विप्रकारिण (for क्षिप्र°) D1 वीरा क्षिप्रप्रहारिण. — $^{d}$) Ko-3 D6 ह्यभ्य(Ko 2 °भि) वर्षन्, K4 D3 अभ्यधावन्, B2 Da Dn1 D5 प्रत्य वर्षन्, M4 अत्यवर्षन् (for अभ्यवर्षन्) B Da2 Dn D4 5 7 8 अरिंदमा, D6 °टम, S °दम

18 $^{a}$) K2 3 5 Da1 Dn1 D2 5 6 8 अपराह्ने, D3 7 S सोपराह्णे (D3 M3 5 °ह्ने) — $^{b}$) K3 5 Da1 D2 3 तुमलो — $^{c}$) T1 G2 4 तु (for the first च) — $^{d}$) Ko ममीतानां Da1 M5 रणेजिरे

19 $^{a}$) Da1 तमेका Ś1 K1 Da1 श्रेष्ट, D1 वीर, T1 G2 4 श्रेष्टा — $^{b}$) K3 5 B D S शरैस्ते (Da1 °रस्ते, Da2 Dn1 D5 °रास्ते, Dn2 T G1. 3 4 °रैस्तै) समवाकिरन् — $^{c}$) Ko 1 प्रवृशी(Ko °पी)व, D5 प्रवर्षि च, D8 प्रावृपी च, G3 प्रावर्षीव (for प्रावृषीव) K3-5 B Da Dn D2-8 यथा मेरु, D1 S महामेरु (for °शैल) — $^{d}$) Ś1 जलौघे, K3 5 D2 6 वृष्टिभिर्, T2 मुचतो, G3 सिसिचुर् (for सिषिचुर्) T2 G2 जलदो B1 2 इव, D1 भृश, S यथा (for नृप)

20 $^{a}$) K1 2 तैस्तु मुक्ता, D2 तैर्मुक्तान् (submetric), T2 तैर्विमुक्तान्, M2 तै प्रयुक्तान् (for तैस्तु मुक्तान्) K4 B2 3 D3 शरान्वोरान् (for शरौघास्तान्) — $^{b}$) Ś1 Ko-2 यमदण्डाशनिस्वनान्, K3 °शनिप्रपान्, K4 यमदडसमप्रभान्, M मडलाशानिसप्रभान् — $^{c}$) B D (except D2 3 6) असप्राप्तानसप्राप्तश्, T2 सप्राप्तान्सत्व सपन्नाश्, M1-3 5 स (M2 सु) सप्राप्तानसप्राप्ताश्, M4 असप्राप्तान्स सप्राप्ताश् — $^{d}$) Ś1 Ko-2 4 स महारथ (Ko °था), K3 सुमहाबल°, K5 D1. 2 6 सुमहारथ (K5 °था), D3 [आ]शु महानल°, M5 [आ]शु महारथा

21 Ko om (hapl) $21^{a}$–$22^{b}$ — $^{a}$) K3 Da1 [अ]द्भुतम् K3 Dn2 D2 3 T2 G2 3 M1. 4 अपश्याम — $^{b}$) Ś1 D5 T2 G1 3 M2 सोमदत्ते, K1 सौदत्ते (sic), K2 Da1 सोमदत्त, T1 G4 सौमदत्ति°, G2 सोमदत्ति — $^{c}$) D6 यद्येको Ś1 K1 4 सार्धं (for युद्धे) — $^{d}$) K2 समम्मर्जद्, S समाम्मज्जद् K1 अभीरुवत् (for अभीत°) K5 समसज्जत भीतवत्, D6 समस्तजनभीतवत्

22 Ko om $22^{ab}$ (cf v l 21) — $^{a}$) K2 सर वृष्टिं, M (except M4) शरवृष्टीस् Dn2 ते, M (except M4) ता (for ता) — $^{b}$) Dn1 (marg) वीरा (for राजन्) B2 Da D5 महाबला (Da1 °ल°), G2 °रथान् — $^{c}$) Da1 D3 G2 महाबाहु (sic) — $^{d}$) K2 निहर्तुम्, D1 नियतुम् (for निहन्तुम्) K3 उप क्रमु (sic), G2 °चक्रमे

23 $^{a}$) Ś1 K3 5 Da1 D3 5 G2 सोमदत्तिस्, D3 सौमदत्विस्, G1 3 सोमदत्तस् Ś1 Ko-2 तु सक्रुद्धस् (Ś1 °द्धास्), Da1 तत क्रुद्धास् — $^{c}$) Ko-2 आच्छिद्य, Da1 विच्छेद Ś1 K D2 6 समरे राजन्, D1 निशितै-

C 6 3262
B 6 74 24
K 6 74 24

चिच्छेद दशभिर्बाणैर्निमेषेण महारथः ॥ २३
अथैषां छिन्नधनुषां भल्लैः संनतपर्वभिः ।
चिच्छेद समरे राजञ्शिरांसि निशितैः शरैः ।
ते हता न्यपतन्भूमौ वज्रभग्ना इव द्रुमाः ॥ २४
तान्दृष्ट्वा निहतान्वीरान्रणे पुत्रान्महाबलान् ।
वार्ष्णेयो विनदन्राजन्भूरिश्रवसमभ्ययात् ॥ २५
रथं रथेन समरे पीडयित्वा महाबलौ ।
तावन्योन्यस्य समरे निहत्य रथवाजिनः ।
विरथावभिवल्गन्तौ समेयातां महारथौ ॥ २६
प्रगृहीतमहाखड्गौ तौ चर्मवरधारिणौ ।
शुशुभाते नरव्याघ्रौ युद्धाय समवस्थितौ ॥ २७
ततः सात्यकिमभ्येत्य निस्त्रिंशवरधारिणम् ।
भीमसेनस्त्वरन्राजन्रथमारोपयत्तदा ॥ २८
तवापि तनयो राजन्भूरिश्रवसमाहवे ।
आरोपयद्रथं तूर्णं पश्यतां सर्वधन्विनाम् ॥ २९
तस्मिंस्तथा वर्तमाने रणे भीष्मं महारथम् ।
अयोधयन्त संरब्धाः पाण्डवा भरतर्षभ ॥ ३०
लोहितायति चादित्ये त्वरमाणो धनंजयः ।

---

स्तीक्ष्णैर्, D8 S दशभिर्भल्लैर् (for दशभिर्बाणैर्) — Ko–2 om (hapl) $23^{d}$–$24^{c}$ — $^{d}$) Ś1 युध्यमानो, K3–5 D2 6 युध्यमानो (for निमेषेण) K4 D1 S महाबलः, K5 °रथै (for °रथ).

24 Ko–2 om $24^{abc}$ (cf v l 23) — $^{a}$) D1 तथैषा, D8 तथैषा; D5 यथैषा, M3 5 अथैनान् (for अथैषां) M3 5 छिन्नधनुष° — $^{b}$) K4 D8 S शरैः (for भल्लैः) — After $24^{ab}$, K3 *repeats* $23^{c}$–$24^{b}$ — $^{c}$) D1 निशितैः (for समरे) — $^{d}$) B Da Dn D3–5 7 8 S भरतर्षभ (Da1 G2 4 °भ), D1 जटिलानि च (for निशितैः शरैः) Ko–2 चिच्छेद विविधैः शरैः — $^{e}$) D2 ते ततो, T1 G हतास्ते (by transp) Ś1 न्यपतान्, Ko 2 3 Dn1 D2, 6 T2 न्यपतद् D8 राजन् (for भूमौ) K5 ततो न्यभ्यपतद्भूमौ, D1 हतानि चापतन्भूमौ — $^{f}$) K5 विद्धा भग्ना, B1 Da Dn D5 8 वज्ररुग्णा (B1 °ग्ना, D8 °ग्ला), T1 G वज्रभिन्ना (for °भग्ना). K3–5 D2 transp इव and द्रुमाः

25 $^{a}$) K1 तां (for तान्) K2 निहितान् Ś1 Ko–2 B1 Dn1 D8 वीरो, D1 भूमौ (for वीरान्) — $^{b}$) K1 पुत्रा K1 om (hapl) from बलान् up to महा in $26^{b}$ Ś1 K4 महारथान्, K3 D8 महाबलान्, D1 तथौरसान् (for महाबलान्) — $^{c}$) K2 व्यनदन्, K3 D6 विनदद्, K5 हि तदा, D1 तु नदन्, D2 निनदन्, T G1 3 4 M [S]भ्यपतद्, G2 ह्यभ्यपतद् (for विनदन्) D1 वीरो (for राजन्) — $^{d}$) K2 Da Dn D4 5 8 अभ्यगात्, S आहवे (for अभ्ययात्)

26 K1 om up to महा in $26^{b}$ (cf v l 25) B1 om (hapl) $26^{bc}$ — $^{b}$) Ś1 महाबलः, D8 °बल S पीडयन्सौमदत्तिनः (G1 3 °न्सोमदत्तिन, T2 °न्सोमदत्तिना) — K3 om $26^{cdef}$ — $^{c}$) K1 ताम् (for ताव्) D8 अन्योन्य हि, M (except M4) °न्य च (for °न्यस्य) — $^{e}$) D2 विरथाम् (for विरथाव्). K2 अभिवल्लुतौ, Da Dn1 D5 अतिवल्गतौ, D1 एव वल्गतौ, D6 अभिविग्लतौ, D8 अविभल्गतौ (for अभिवल्गन्तौ) T2 रथावभिभवतौ तौ — $^{f}$) Ko समीयातां K5 D2 6 T G महाबलौ (for °रथौ)

27 $^{a}$) D5 °महापक्षौ — After $27^{a}$, B1 *repeats* $26^{d}$–$27^{a}$ — $^{b}$) Ko 1 चर्मवसुधारिणौ, K5 वर्मवरधारिणौ — $^{c}$) K1 नरव्याघ्रो, T1 G4 °व्याघ्र — $^{d}$) Da1 समवस्थिते, D1 S समुपस्थितौ (for समव°) — After 27, S ins

292* असह्यमसियुद्धाय भूरिश्रवसमाहवे ।
मत्वा वृकोदरस्तूर्णमभिप्लुत्य महारथः ।
[(L 2) G1 3 अभिसृत्य महाबलः ]

28 $^{ab}$) K2 त्र्यस्त्रिंश°, D6 निस्तृंश° (for निस्त्रिंश°) S ततस्तु सात्यकिं राजन्सनिस्त्रिंश महारथं — $^{c}$) B Dn2 D8 तु तं राजन्, D1 तु बलवान् (for त्वरन्राजन्) S त्वरमाणो रणे भीमो — Ś1 om (hapl) $28^{d}$–$29^{a}$ — $^{d}$) Ko–2 S रथमारोपयत्स्वकं (G4 °यन्स्वक)

29 Ś1 om $29^{a}$ (cf v l 28) — $^{a}$) S तथैव तव पुत्रोपि — $^{b}$) D1 खड्गचर्मधरो युधि — $^{c}$) D1 रथश्रेष्ठ (for रथं तूर्णं) — $^{d}$) G3 सर्वधन्वनां D1 भूरिश्रवसमाहवे (= $29^{b}$)

30 $^{a}$) Ś1 Ko तदा (for तथा) — $^{b}$) M (except M4) महारथा T2 रणे भीष्ममुखा रथाः. — $^{c}$) Ś1 D2 7 आयोधयत, K2 अयोधयन्न, T2 °यन्त — $^{d}$) T2 पाण्डवैर् (for °वा) D1 युद्धदुर्मदाः (for भरतर्षभ)

पञ्चविंशतिसाहस्रान्निजघान महारथान् ॥ ३१
ते हि दुर्योधनादिष्टास्तदा पार्थनिबर्हणे ।
संप्राप्यैव गता नाशं शलभा इव पावकम् ॥ ३२
ततो मत्स्याः केकयाश्च धनुर्वेदविशारदाः ।
परिवव्रुस्तदा पार्थं सहपुत्रं महारथम् ॥ ३३
एतस्मिन्नेव काले तु सूर्येऽस्तमुपगच्छति ।
सर्वेषामेव सैन्यानां प्रमोहः समजायत ॥ ३४

अवहारं ततश्चक्रे पिता देवव्रतस्तव ।
संध्याकाले महाराज सैन्यानां श्रान्तवाहनः ॥ ३५
पाण्डवानां कुरूणां च परस्परसमागमे ।
ते सेने भृशसंविग्ने ययतुः स्वं निवेशनम् ॥ ३६
ततः स्वशिबिरं गत्वा न्यविशंस्तत्र भारत ।
पाण्डवाः सृञ्जयैः सार्धं कुरवश्च यथाविधि ॥ ३७ C 6 3276 B 6 74 39 K 6 74 40

इति श्रीमहाभारते भीष्मपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥

---

31 $^{a}$) G2 M2 लोहितायदि, Cc °यति (as in text) D2 आदित्ये (for चादित्ये) — $^{b}$) Ś1 स्वरमानो — $^{c}$) K1 पंचत्रिंशतसाहस्रान्, D3 पचविंशति सहस्रान्, T G4 °साहस्र — $^{d}$) D1 आजघान

32 $^{a}$) B3 [s]पि, T2 तु (for हि) — $^{b}$) Ś1 S (except M1. 2) तथा (for तदा) D1 तदा पार्थं महारथा — $^{c}$) B Da Dn D6 8 असप्राप्यैव (Da2 °व), D1 असप्राप्य; T1 G प्राप्यैव ते, T2 अवाप्यैव — $^{d}$) B2-4 Da Dn D5 7 8 पावके

33 $^{a}$) T1 G4 मात्स्या K3 5 Da Dn D2-4 6-8 कैकया(D3 °या)श्च, D1 5 स(D5 च)कैकेया — $^{b}$) Da1 °विशारद, G3 °विद्या वर — $^{c}$) T1 G2 4 पर्यद्रवन् (for परिवव्रुस्) K3 5 B2-4 D (except D1. 8) S रणे (for तदा) — $^{d}$) K0 सहस्र स्म, K2 सहपुत्रा, T1 G महपुत्रैर् K0-2 महारथा

34 $^{a}$) K1 एकस्मिन्नेव K3-5 B2-4 Da Dn D2 4-6 7 (m as in text) 8 जगामास्तमथादित्यो, B1 जगामास्तमथा**, D1 जगामास्त तदादित्यो, S अस्त गते तथा(G3 यथा, M1-3 5 तदा)दित्ये — $^{b}$) K3 D2 6 रजोमेघे समुत्थिते, K4 B Da Dn D4 5 7 8 रजोमेघै (Da1 °घ-) स्समुत्थितै, K5 रजसो वै समुत्थित, D1 बभूवुस्तिमिता दिश, S तुमुले (T1 °लं) सकुले भृश Cc cites रजोमेघै — $^{c}$) K0-3 5 D1-3 6 सर्वेषा चैव (for °षामेव) — $^{d}$) K1 Da1 D6 प्रमोह, D1 समोह K5 B D (Dn1 marg) समपद्यत (B2 °ते) (for समजायत)

35 Dn1 om 35 — $^{a}$) B1 अवहारस्, D2 °हारस, S (except M3) अपहार Cd cites अवहार B1 तथा (for ततश्) — $^{c}$) D3 सध्याकाले — $^{d}$) K1 शातवाहना, D1 श्रातवाहिना, T2 °वाहन K0 3 सैन्या सश्रातवाहना

36 $^{a}$) K4 transp पाडवाना and कुरूणां — $^{b}$) D6 °समागम — $^{c}$) K4 सेने ते (by transp) Ś1 K0 1 भयसविग्ने, Da1 भृशसविज्ञे, D1 भयसविष्टे, T1 G4 भृशसत्रस्ते, T2 G1-3 M °संतप्ते Cc cites °सविग्ने (as in text) — $^{d}$) Ś1 ययतु, D1 गच्छत, G2 3 ययतु K1 D1 G3 M1 2 5 स्व, T2 सं (for स्व)

37 $^{a}$) S1 स्व, S ते (for स्व) M2 हत्वा (for गत्वा) — $^{b}$) K2 न्यविश, K3 5 D2 6 न्यवसस् (for न्यवि°) — After $37^{ab}$, K5 *repeats* $36^{a}$–$37^{b}$ — $^{c}$) K2 शृजयै, Da1 सृजयै, D6 सजयै (for सृञ्जयै) — $^{d}$) K1 2 Da1 कुरवश्च

*Colophon* — *Sub-parvan* Omitting sub-parvan name, Ś1 K D2 6 mention only पचमयुद्धदिवस, B2 T2 M पचमाह्निक, B3 पंचमदिवससग्रामाह्निक, Da Dn1 D4 8 पचमदिनयुद्ध, Dn2 D5 पचमदिवसयुद्ध, D1 3 (*sup lin sec m*) पचमदिवस; T1 G पचमापहार K2 4 B3 Da2 Dn2 D4 S cont समाप्त — *Adhy name* K4 सात्यकिभूरिश्रवोयुद्ध, T2 G2 सात्यकिसुतवध, M1-3 5 सेनाप(M3 °व)हार — *Adhy no* (figures, words or both) Da2 (*sup lin sec m*) 32, Dn2 (*sup lin*) T2 M3 4 71, D1 73, T1 G2-4 69, G1 (wrongly) 169, M1 2 70 (as in text), M5 72 — *Śloka no* Dn1 38, Dn2 D5 39

# ७१

C 6 3277
B 6 75 1
K 6 75 1

संजय उवाच ।
विहृत्य च ततो राजन्सहिताः कुरुपाण्डवाः ।
व्यतीतायां तु शर्वर्यां पुनर्युद्धाय निर्ययुः ॥ १
तत्र शब्दो महानासीत्तव तेषां च भारत ।
युज्यतां रथमुख्यानां कल्प्यतां चैव दन्तिनाम् ॥ २
संनह्यतां पदातीनां हयानां चैव भारत ।
शङ्खदुन्दुभिनादश्च तुमुलः सर्वतोऽभवत् ॥ ३
ततो युधिष्ठिरो राजा धृष्टद्युम्नमभाषत ।
व्यूहं व्यूह महाबाहो मकरं शत्रुतापनम् ॥ ४
एवमुक्तस्तु पार्थेन धृष्टद्युम्नो महारथः ।
व्यादिदेश महाराज रथिनो रथिनां वरः ॥ ५
शिरोऽभूद्द्रुपदस्तस्य पाण्डवश्च धनंजयः ।
चक्षुषी सहदेवश्च नकुलश्च महारथः ।
तुण्डमासीन्महाराज भीमसेनो महाबलः ॥ ६
सौभद्रो द्रौपदेयाश्च राक्षसश्च घटोत्कचः ।
सात्यकिर्धर्मराजश्च व्यूहग्रीवां समास्थिताः ॥ ७
पृष्ठमासीन्महाराज विराटो वाहिनीपतिः ।
धृष्टद्युम्नेन सहितो महत्या सेनया वृतः ॥ ८

---

## 71

1 M5 om the ref — a) K3 5 D2 6 विश्राम्य च, K4 B3 विकृत्यै तु, B1 2 4 विकृत्य ते, D8 ते विहृत्य, D8 हृत्य ते तु (for विहृत्य च) D1 S तु, Da Dn D4 5 7 Cd ते (for च) K4 B4 तथा (for ततो) — c) Da Dn D2 च (for तु) T1 G M1-3 5 त्रियामायां (for तु शर्वर्यां) T2 M4 ततो रात्र्यां व्यतीताया — d) M2 ततो (for पुनर्)

2 a) K3-5 B D (except D1 3) T1 G M4 तत (for तत्र). — M2 om (hapl) $2^{c}$–$3^{b}$ — c) M1 (sup lin) 3 5 युध्यता (for युज्यता) K0 1 रथ मेघाना (for °मुख्यानां). — d) K0 2 3 B3 Da1 Dn1 D1 2 4 (before corr) 5 6 Ca c d कल्पता, K1 6 कलिता (sic), B4 कप्यतां (for कल्प्यता). B Da Dn D4 5 7 8 चापि (for चैव)

3 M2 om $3^{ab}$ (cf v l 2) — a) K1 संनद्धता, D6 सनह्यता, Co संनह्यता (as in text) — b) K1 चेव — c) K0 2 Da D5 शख (Da1 °खं) दुदुभिनादाश्च; Dn2 D4 7 8 °निर्घोषास, D8 °निर्नादस; D6 T2 M °नादैश्च — d) Ś1 K0-2 B2-4 Da2 Dn D4 7 8 तुमुला, K5 D8 6 तुमल°, Da1 D5 तुमला° Ś1 K0 B Da Dn D5 सर्वतोभवन्; K2 सर्वतोभवान् (sic); T1 G2 4 सर्वगोभवत्

4 a) D7 राजन् — c) B1 व्यूहि व्यूहं; B3 D2 3 व्यूह व्यूहं (by transp) S व्यूह व्यूहस्व (T1 °स्य) पाचाल — d) K5 मकर Ś1 K0-2 D. M2 शत्रुतापन (M2 °न), K5 D1 2 6 T2 M4 °नाशन; D3 °कर्शन

5 b) Da1 M2 महारथा — K0 1 om (hapl) $5^{c}$–$6^{f}$, D8 om (hapl) $5^{e}$–$6^{d}$ — c) D5 महाराज; S यथान्याय (for महाराज). — d) M2 व्यूहितु (for रथिनो)

6 K0 1 om 6, D3 om $6^{abcd}$ (cf v l 5). — a) Da1 Dn1 D6 8 G2 3 M3 5 शिरोभू (sic). G2 तत्र (for तस्य) — b) Da1 पांडवाश्च — c) D5 सिंहदेवश्च (for सह°) — e) Ś1 K4 5 B3 तुड[]; D3 तुडस (for तुण्डम्) D3 तस्मिन् (for आसीन्). T2 M महाबाहुर् (for महाराज) — f) Ś1 महारथः (for °बल°)

7 ab) Ś1 द्रौपदेयश्च and राक्षसाश्च — c) D3 सात्यकि; G3 सात्यकी (for °किर्) — d) Ś1 Da1 व्यूहग्रीवा; K0 हयग्रीवा, K5 गृढग्रीवा Ś1 K3 5 B1 3 4 D1 2 3 (marg sec m as in text) 6 समास्थितौ, K0 T1 G1 3 4 M2 समाश्रिता°, T2 M1 3-5 °श्रितौ; G2 °श्रितः (for °स्थिता) K4 ग्रीवाया समवस्थितौ

8 K0 om (hapl) $8^{a}$–$9^{b}$ — a) Ś1 सृष्ट, Da1 दृष्टम् (for पृष्ठम्) K5 D2 शतानीको (for महाराज) — After $8^{a}$, T1 *repeats* (hapl) $6^{f}$ and cancels it by enclosing it in parantheses — D2 om (hapl) $8^{b}$–$10^{c}$, K5 om $8^{bc}$ — c) Da1 M (except M4) सहिता T1 G धृष्टद्युम्नो महाराज — d) M1 3 वृता°

केकया भ्रातरः पञ्च वामं पार्श्वं समाश्रिताः ।
धृष्टकेतुर्नरव्याघ्रः करकर्षश्च वीर्यवान् ।
दक्षिणं पक्षमाश्रित्य स्थिता व्यूहस्य रक्षणे ॥ ९
पादयोस्तु महाराज स्थितः श्रीमान्महारथः ।
कुन्तिभोजः शतानीको महत्या सेनया वृतः ॥ १०
शिखण्डी तु महेष्वासः सोमकैः संवृतो बली ।
इरावांश्च ततः पुच्छे मकरस्य व्यवस्थितौ ॥ ११
एवमेतन्महाव्यूहं व्यूह्य भारत पाण्डवाः ।
सूर्योदये महाराज पुनर्युद्धाय दंशिताः ॥ १२
कौरवानभ्ययुस्तूर्णं हस्त्यश्वरथपत्तिभिः ।
समुच्छ्रितैर्ध्वजैश्चित्रैः शस्त्रैश्च विमलैः शितैः ॥ १३
व्यूहं दृष्ट्वा तु तत्सैन्यं पिता देवव्रतस्तव ।
क्रौञ्चेन महता राजन्प्रत्यव्यूहत वाहिनीम् ॥ १४
तस्य तुण्डे महेष्वासो भारद्वाजो व्यरोचत ।
अश्वत्थामा कृपश्चैव चक्षुरास्तां नरेश्वर ॥ १५
कृतवर्मा तु सहितः काम्बोजारट्टबाह्लिकैः । C 6 3293 B 6 75 17 K 6 75 17

9 D2 om 9, Ko om $9^{ab}$ (cf v 1 8), K5 G1 3 om (hapl) 9–10 — $^a$) K2 3 B Da Dn D1 3–8 कैके( Da1 Dn1 D3 °क )या, M4 केकय Ś1 भ्रातरा° — $^b$) K2 B2–4 वामपक्ष, K3 4 B1 T G2 4 वामपार्श्वं, Da Dn D4 ‿ 7 8 वाम पक्ष, D3 6 वाम (D3 °म )पार्श्व K4 T2 अपाश्रिता°, D1 T1 G2 4 M उपा° (for समा°) — T2 om $9^c$–$11^d$ — $^c$) D5 धूमकेतुर, T1 धृष्टकेतु (for °केतुर्) Ś1 K2 3 M5 नरव्याघ्र, D1 महेश्वास°, T1 G4 महावीर्य, G2 महा व्याघ्र° — $^d$) K4 B Da Dn D4 5 7 8 चेकितानश्च, T1 G2 4 कनकर्षश्च — $^e$) Da1 पश्चिम्, D1 पार्श्वम (for पक्षम्) — $^f$) K4 D7 T1 G4 स्थितौ, D1 M4 स्थितो, G2 स्थित B2 Dn2 T1 दक्षिणे (for रक्षणे) K8 D6 स्थिता व्यूहविचारणे

10 K5 T2 G1 3 om 10 (cf v 1 9) D2 om $10^{abc}$ (cf v 1 8) T1 G2 4 M om $10^{ab}$ — $^a$) Ś1 च (for तु) K8 D6 महेष्वास° (for महाराज) — D6 om (hapl) $10^b$–$11^a$ — $^b$) D1 श्रीमन् K4 महा बल° (for °रथ°) — $^c$) K3 B3 Da1 D5 8 कुंतीभोज° — $^d$) M1 (*inf lin* as in text) 3 8 5 वृतौ, M4 वृता (for वृत )

11 T2 om 11 (cf v 1 9) D6 om $11^a$ (cf v 1 10) — $^a$) M2 शिखंडिस Ś1 Ko–2 4 T1 G च (for तु) Ś1 Ko–2 महाराज, D2 महेष्वासौ (for महेष्वास ) — K2 om (hapl) $11^b$–$12^c$ — $^b$) Ś1 Ko 1 सहितो (for संवृतो) K8 5 Da Dn1 D2 5 6 वशी (for बली) — $^c$) Ś1 K5 D2 तु (for च) B Da Dn1 D8 S (T2 om) नृप°; D5 वय° (for तत°) D1 8 पृष्ठे (for पुच्छे) — $^d$) K8 5 B8 D2 6 S (T2 om) व्यवस्थित° Ko 1 मकरव्यूह मन्वितौ

12 K2 om $12^{abc}$ (cf v 1 11) — $^a$) K8 4 B Da Dn D2–4 6–8 एत, D5 एव (for एतन्) — $^b$) D8 व्यूह, Ca व्यूह्य (as in text) — $^d$) K1 दसितौ, D4 निर्ययु°, S (except T2) दसिता° (for दंशिता) Ko युद्धाय पुनर्दसितौ (sic), K2 युयुधायनं दसिता (sic)

13 $^a$) T2 कौरव्यान् — $^b$) Ko–2 °रथपत्तय — $^c$) K2 समुच्छ्रिते, K5 Da1 °श्रितैर्, G2 तमुच्छ्रि-तैर् K2 B1 2 4 Da2 Dn D2 4 7 8 T1 G1 2 4 M1–3 ‿ छत्रै, D6 (m as in text) तीक्ष्णै° (for चित्रै) T2 M4 समुच्छ्रितध्वजछत्रै (M4 °जैश्छत्रै°) — $^d$) D6 विविधै° (for विमलै°) K8 तथा, Dn2 स्थितै, D5 शतै°, D6 शरै, G2 चितै (for शितै)

14 $^a$) K1 व्यूह, K4 B1 2 Da1 Dn1 D6 व्यूढ (for व्यूह) K8 D6 च (for तु) S व्यूहित (T2 व्यूह त) दृश्य तत्सैन्य — $^c$) K1 क्रौंचत (sic), K8 क्रौचेन, Da1 कोंचेन (sic) — $^d$) Ś1 M5 प्रत्यव्यूह्यत, T G प्रतिव्यूह( G8 °ह )त Da1 वाहिनी

15 $^a$) K1 तुंडी, Da1 तुग, G1–3 M1 3 5 तुंडो (for तुण्डे) — $^b$) Ko 1 भरद्वाजो Ko–2 व्यदृश्यत, B3 [S]प्यरोचत, Da1 D5 [S]प्यरो°; Dn2 D4 7 8 [S]भ्य-वर्तत (for व्यरोचत) — $^d$) Ś1 K3 5 D1–3 6 चक्षु-रासीन्, Da1 चक्षुपास्ता (sic), Da2 Dn1 चक्षु-प्यास्तां, D6 चक्षुपास्ता Ko–2 Da1 नरेश्वर, S जनेश्वर (G8 °र°)

16 $^a$) K8 D6 च (for तु) D2 चेदियुक्त° (for तु सहित°) K5 कृतवर्मा चेदिसहित° (hypermetric) — $^b$) Ś1 Ko कामोजारट्टवाह्लिकै°, K1 काभोजारथ°, K2 5 कावोजारद्र°, K4 B Da2 Dn D4 7 8 कावोजवर°, Da1 D5 कावोजटर°, D1 कावोजवाह्लिकै° सह, S कांबो-

C 6 3293
B 6 75 17
K 6 75 17

शिरस्यासीन्नरश्रेष्ठः श्रेष्ठः सर्वधनुष्मताम् ॥ १६
ग्रीवायां शूरसेनस्तु तव पुत्रश्च मारिष ।
दुर्योधनो महाराज राजभिर्बहुभिर्वृतः ॥ १७
प्राग्ज्योतिषस्तु सहितः मद्रसौवीरकेकयैः ।
उरस्यभून्नरश्रेष्ठ महत्या सेनया वृतः ॥ १८
स्वसेनया च सहितः सुशर्मा प्रस्थलाधिपः ।
वामं पक्षं समाश्रित्य दंशितः समवस्थितः ॥ १९
तुषारा यवनाश्चैव शकाश्च सह चूचुपैः ।
दक्षिणं पक्षमाश्रित्य स्थिता व्यूहस्य भारत ॥ २०
श्रुतायुश्च शतायुश्च सौमदत्तिश्च मारिष ।
व्यूहस्य जघने तस्थू रक्षमाणाः परस्परम् ॥ २१
ततो युद्धाय संजग्मुः पाण्डवाः कौरवैः सह ।
सूर्योदये महाराज ततो युद्धमभून्महत् ॥ २२
प्रतीयू रथिनो नागान्नागाश्च रथिनो ययुः ।
हयारोहा हयारोहान्रथिनश्चापि सादिनः ॥ २३
सारथिं च रथी राजन्कुञ्जरांश्च महारणे ।

जैरथ वाह्लि( G3 वाह्ली°, M4 वाह्लि )कै° — c ) K3 5 Dn1 D4 6 8 S शिरश्चा( G2 °स्त्वा )सीन् ( for शिर स्यासीन् ) K3 Da1 D1 T1 G1 2 4 M ( except M1 ) नरश्रेष्ठ, K5 महाराज — d ) K1 Da1 om ( hapl ) श्रेष्ठ°

17 Da Dn1 D5 om 17^ab — a ) Ś1 D1 T1 G2 4 M2 शूरसेनाश्च, K3 सूरसेनस्तु, K4 T2 G1 3 M1 3-5 शूरसेनश्च, D2 °सेनास्तु, D3 सूरसेनाश्च — b ) K4 D3 T1 G4 पुत्राश्च, B1 2 4 पुत्रस्तु, D1 पुत्रस्य K3 5 B Dn2 D2 4 6-8 S भारत ( for मारिष ) — After 17^ab, K3 D6 read 21^ab, *repeating* it in its proper place — d ) B2 मातृभिर्, D6 राजर्षि° ( for राजभिर् ) K4 सेनाभिर्बहुधा वृत°

18 Ko 1 om ( hapl ) 18 — a ) K3 5 प्राग्ज्यो तिपश्च, D2 °तिपैश्च K5 सहितौ S प्राग्ज्योतिषो भग दत्तो — b ) K2 3 5 B2-4 D म( D3 मा )द्रसौवीर कैकयै° ( Da1 °य° ), G2 °केकया° — c ) G1 3 वक्षस्य भून् ( for उरस्यभून् ) Ś1 D1 महाराज, D6 T1 G2 4 नरश्रेष्ठो — After 18, S ins

293* पृष्ठे चास्तां महेष्वासावावन्त्यौ सपदानुगौ ।

[ G1 3 पुत्रास्तव ( for पृष्ठे चास्तां ) M1 3 5 नरश्रेष्ठौ ( for महेष्वासौ ) ]

19 a ) Ko 2 स्वसेनायाश्च, B1 3 सुसेनया च T2 तु ( for च ) D1 व्यवसित° ( for च सहित° ) — b ) Ś1 Ko 1 त्रिगर्त° ( for सुशर्मा ) K5 D2 प्रस्थलापति°, D2 च स्थलाधिप, T2 G2 पृतनाधिप° ( for प्रस्थला° ) Co cites प्रस्थल — c ) K3 D2 T2 वाम ( for वामं ) D1 उपाश्रित्य ( for समा° ) — d ) Ko 1 S दसित°, Da1 दशित ( for दंशित ) Ś1 दंशिता समवस्थिता

20 a ) Ś1 तुखरा, Ko खुरारा, K1 तुस्वारा, K2 तुसारा, D3 7 तुखारा ( D8 °र ), T1 G3 4 तुषार ( for तुषारा ) K3 5 D2 6 यवना( D6 °न )श्चापि — b ) K2 शकाश्च, D2 8 शकैश्च, D3 6 सकाश्च, T2 सहाश्च ( for शकाश्च ) K2 छूलकै, K3 D6 कैकयै°, K4 चूचकै°, K5 D2 यूयपै°, B1 2 4 Da2 Dn2 D4 7 8 चूलिकै°, B3 वाह्लिकै°, Da1 D5 भूलिकै°, Dn1 चूलकै°, D1 M4 5 चूचुकै°, D3 चूडपै, M1 चूचुव ( *sic* ), M2 यूथपा ( for चूचुपै° ) — d ) B1 4 Da Dn1 D5 दशिता ( for भारत )

21 Ś1 K2 om ( ? hapl ) 21^ab K3 D6 read ( for the first time ) 21^ab after 17^ab — a ) K1 श्रुतायश्च, G2 श्वतायुश्च — b ) K3 5 Da1 D5 G1 2 सोमदत्तिश्च, D3 सौमदतिश्च Ko 1 4 D1 T2 भारत, D3 वीर्यवान् ( for मारिष ) — c ) Ś1 जघन, Co जघने ( as in text ) Ś1 तस्य, K1 2 तस्थु, K3 D6 M1 3 5 तस्थौ ( for तस्थू ) — d ) K1 D6 रक्षमाणा, K2 3 रक्षमाण°, B3 D3 T2 रक्ष्यमाणा°

22 a ) D3 S ससक्ता ( for संजग्मु ) — b ) S कौरवा° पाण्डवै सह — c ) Da1 सूर्योदयो — d ) K4 B2-4 Da Dn D4 5 6 ( m as in text ) 7 8 ततो युद्ध मवर्तत, S प्रावर्तत जनक्षय° ( M2 जनेश्वर° )

23 a ) Ś1 K3 Da1 D3 6 8 प्रतीयु, S जग्मुश्च Ko 2 4 5 Dn1 D4 7 8 T2 M4 नागा, D5 नाना ( for नागान् ) — b ) K2 4 5 Da2 Dn2 D4 7 8 T2 G1 नागांश्च, M1 रथांश्च ( for नागाश्च ) — c ) K3 B1 D2 3 6 हयारोहान्, T1 G2 4 अश्वारोहा ( for हयारोहा ) K3 B1 D3 रथारोहा, D2 हयारोहा, D6 नरारोहान्, D3 हयाश्रोहा, S गजारोहान् ( T2 °हा ) ( for हयारोहान् ) — d ) B2 3 Da1 Dn1 D5 चैव ( for चापि ) D1 दतिन° ( for सादिन )

24 G3 om ( hapl ) 24 — a ) K3-5 B Da Dn

हस्त्यारोहा रथारोहान्रथिनश्चापि सादिनः ॥ २४
रथिनः पत्तिभिः सार्धं सादिनश्चापि पत्तिभिः ।
अन्योन्यं समरे राजन्प्रत्यधावन्नमर्षिताः ॥ २५
भीमसेनार्जुनयमैर्गुप्ता चान्यैर्महारथैः ।
शुशुभे पाण्डवी सेना नक्षत्रैरिव शर्वरी ॥ २६
तथा भीष्मकृपद्रोणशल्यदुर्योधनादिभिः ।
तवापि विबभौ सेना ग्रहैर्द्यौरिव संवृता ॥ २७
भीमसेनस्तु कौन्तेयो द्रोणं दृष्ट्वा पराक्रमी ।
अभ्ययाज्जवनैरश्वैर्भारद्वाजस्य वाहिनीम् ॥ २८
द्रोणस्तु समरे क्रुद्धो भीमं नवभिरायसैः ।
विव्याध समरे राजन्मर्माण्युद्दिश्य वीर्यवान् ॥ २९
दृढाहतस्ततो भीमो भारद्वाजस्य संयुगे ।
सारथिं प्रेषयामास यमस्य सदनं प्रति ॥ ३०
स संगृह्य स्वयं वाहान्भारद्वाजः प्रतापवान् ।
व्यधमत्पाण्डवीं सेनां तूलराशिमिवानलः ॥ ३१
ते वध्यमाना द्रोणेन भीष्मेण च नरोत्तम ।
सृञ्जयाः केकयैः सार्धं पलायनपराभवन् ॥ ३२
तथैव तावकं सैन्यं भीमार्जुनपरिक्षतम् ।

C 6 3310
B 6 75 34
K 6 75 34

D2–8 M1 2–5 सादिनश्च (for सारथिं च) K3 5 D2 3 6 महाराज, K4 B1 Da1 रथा राजन्, B3 रथींश्राजन्, Da2 D4 5 7 रथाश्राजन्, Dn2 D4 (*also* as in text) 8 हयाश्राजन्; M1 3–5 नरा राजन् (for रथी राजन्) D1 सारथिश्च रथिं राजन्, T G1 2 4 M2 सादिनो रथिनो राजन् — Da1 om (hapl) 24b–25c —[b]) Ko–2 Da2 Dn1 D1 T1 G1. 4 M2 कुञ्जराश्च, K5 D2 रथिनश्च S (G3 om) विशां पते (for महारणे) —[c]) K3–5 B1–3 Da2 D2 4–8 G1 M1 हस्त्यारोहान्, Dn2 हयारोहान् (for हस्त्यारोहा) Ś1 T1 गजारोहा, K3–5 D2 हयारोहा; B1–3 Dn2 D4 8 रथा राजन्, B4 Da2 D5 7 रथाश्राजन्, D1 M3 5 गजारोहान्, D3 6 T2 G1. 2 4 M2 4 हयारोहान् (for रथारोहान्) Dn1 हस्त्यारोहास्तथा राजन् —[d]) K4 चैव (for चापि) Ko–2 गजिनश्चापि सादिन (K2 पत्तिभि), K3 5 रथिन सादिनस्तथा

25 Da1 om 25abc (cf v l 24) K2 om 25ab —[a]) S सादिन (T2 पत्तय) (for रथिन) Ko सादिभि, K1 सादिन, T2 पत्तिन (for पत्तिभि) —[b]) M2 सादिभिश् (for सादिनश्) T2 M2 पत्तय (for पत्तिभि) —[d]) D6 प्रत्यधावन्सहर्षिता, G2 प्रत्ययामन्नमर्षिता

26 [a]) Da1 °यमौ (for °यमैर्) K5 भीमसेनार्जुना यामैस् —[b]) Ko D4 8 गुप्ताश्, K3 5 D2 6 तथा, Da1 गुप्तौ, Da2 D5 गुप्तैश्, G3 नृपैश् (for गुप्ता) D2 चान्ये —[c]) Dn2 D4 7 8 शोभते (for शुशुभे) D2 पाण्डवा —[d]) Ko–2 चन्द्रमा, Dn2 शर्वरि (for शर्वरी)

27 [a]) T2 G1–3 ततो (for तथा) D6 ततो भीष्म कृपद्रोण, T1 G4 भीष्मद्रोणकृपद्रौणि- (T1 °णि) —[b]) K1 °दुर्योधनादिभ्य —[c]) K4 B1 T1 G च यमौ (for विबभौ) D6 सैन्य (for सेना) —[d]) Da1 ग्रहे Da1 D6 सवृता D1 ग्रहैर्ज्योतिष्मती वृता

28 [a]) B2 M2 सक्रुद्धो, Da1 कौंतेय —[b]) K6 पराक्रम, D1 महारथ (for पराक्रमी) —[c]) K2 अभ्य या, D1 अश्वको (for अभ्ययाज्) —[d]) M2 वाहिनी

29 Ś1 om (? hapl) 29 —[a]) B4 च (for तु) —[b]) D1 दृष्ट्वा तु (for नवभिर्) D1 रायसै (sic), T2 आशुगै (for आयसै) —[c]) S त्वरितो (for समरे) K3. 5 Dn2 D2 7 विव्याध समरश्लावी —[d]) K3 मर्माण्युच्छिद्य, M1–3 5 म (M2 ध) र्माण्यादिश्य Ko 1 वाहिनीं, S भारत (for वीर्यवान्)

30 [a]) Ko–2 B3 D1 T2 दृढहस्तस्, M दृढ हस्तस् (for दृढाहतस्) T2 G1. 3 M (except M4) तथा, T1 G2 4 तदा (for ततो) —[b]) Dn1 (before corr as in text) n2 D4 8 भारद्वाजेन B2 Da2 Dn1 D5 चाहवे (for संयुगे)

31 [a]) D1 G2 संगृह्य स (by transp), M4 स नियम्य —[b]) Da1 भारद्वाज —[c]) K2 व्यभ्रमत्, D3 6 ददाह (for व्यधमत्) D1 पाडवानीक (for पाण्डवीं सेना) —[d]) K1 मूल-, K2 जल (for तूल) K1 D2 M4 [अ]निल (for [अ]नल)

32 [ab]) Ś1 ते बाध्यमाना भीमेन (for [a]) Ko–2 B1 D1 S transp द्रोणेन and भीष्मेण D1 भरतोत्तम (for च नरोत्तम) Ś1 K3–5 नरोत्तमा, Ko–2 नराधिप, S महात्मना (for नरोत्तम) —[c]) Ś1 Ko–2 4 D1 केकया, D6 सजया, T2 सृजय Ś1 सजयै, Ko–2 4 D1 सृजयै, K3 5 Da Dn D2–8 कैकयै (for केकयै) —[d]) K1 D8 °पराभवत्, D6 °पराजय

C 6 3310
B 6 75 34
K 6 75 34

मुह्यते तत्र तत्रैव समदेव वराङ्गना ॥ ३३
अभिद्येतां ततो व्यूहौ तस्मिन्वीरवरक्षये ।
आसीद्व्यतिकरो घोरस्तव तेषां च भारत ॥ ३४
तदद्भुतमपश्याम तावकानां परैः सह ।
एकायनगताः सर्वे यदयुध्यन्त भारत ॥ ३५
प्रतिसंवार्य चास्त्राणि तेऽन्योन्यस्य विशां पते ।
युयुधुः पाण्डवाश्चैव कौरवाश्च महारथाः ॥ ३६

इति श्रीमहाभारते भीष्मपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

# ७२

धृतराष्ट्र उवाच ।
एवं बहुगुणं सैन्यमेवं बहुविधं परम् ।
व्यूढमेवं यथाशास्त्रममोघं चैव संजय ॥ १
पुष्टमस्माकमत्यन्तमभिकामं च नः सदा ।

---

33 $^a$) Ko–3 S तथैव तावकी सेना — $^b$) Ko–2 M (except M2) भीमार्जुनपरिक्षता, K3 °क्षिता, K5 Da1 Dn1 (before corr) D1 °क्षित, T G भीमसेनपरिक्षता (G2 °रीक्षिता, G3 °रिक्षिता) — $^c$) B1–3 Da Dn1 D5 T2 M4 मुमोह (for मुह्यते) K2 तवैव (for तत्रैव)

34 $^a$) Ś1 अभिद्यता, D6 अभिप्रेता, T1 अभिद्येता (for अभिद्येतां) B3 तदा (for ततो) T1 G4 M4 महाव्यूहौ, G1–3 महारौद्रे (for ततो व्यूहौ) T2 अ भज्यत महारौद्रे, M1–3, 5 अभ्युद्यतमहावीर्ये (M3 sup lin °रौद्रे) — $^b$) Ś1 Ko–2, 4 D1 तस्मिन्वीरसमागमे, B3 तस्मिन्वरवरक्षये — $^c$) G2 असीद्वितिकरो घोरस् (sic)

35 $^a$) K3 Da1 तदद्भुतम्, D6 S तत्राद्भुतम् K3 D2, 3, 6 T2 G3 M1, 3, 5 अपश्यामस् — $^b$) Da Dn1 D5 एकायनपरा°, T2 एकायन गता°, Ca c as in text — $^d$) K3 अवध्यत, D3 अमुह्यंत (for अयुध्यन्त) S सयुगे (for भारत)

36 $^a$) K3 M5 प्रतिसहार्य, K4 B Da Dn D1, 4, 5, 7, 8 °सधाय, D6 अतिसवार्य, T1 G4 प्रतिसविध्य (for °संवार्य) — $^b$) B3 ततोन्यस्य, T1 G2–4 अन्यो न्यस्य (for तेऽन्यो°) G1, 3 विशेषत° (for विशा पते) — $^d$) D6 कौरवैश्च, S कुरवश्च (for कौरवाश्च) K3, 5 Dn2 D2 G3 M5 महाबला, B Da Dn1 D1, 5 महाहवे, D3, 6 T G1, 3, 4 M1–4 विशा पते, D4, 7, 8 महामृधे (for °रथा)

Colophon om in Ś1 — *Sub-parvan* Omitting sub-parvan name, Ko–2 B3 D2 mention only पष्ठयुद्धदिवसे, K4 T2 G2 पष्ठेह्नि, M4 पष्ठेह्निके — *Adhy name* K4 Da Dn1 D5 व्यूहरचना, T2 G2 M3–5 व्यूहकरण — *Adhy no* (figures, words or both) Da2 (sup lin sec m) 33, Dn2 T2 M3, 4 72, D1 74, T1 G 70, M1, 2 71 (as in text), M5 73 — *Śloka no* Dn2 D5 37

## 72

1 $^a$) K1, 2 D1 S (except M4) बहुविध (K1 °ध), D2 °गण, Ca °गुण (as in text) — $^b$) K3 तया, K5 D2 पुरा, D8 वर, S नरं (G2 नर°) (for परम्) — $^c$) Ś1 Ko–2 D6 T2 G1, 3 व्यूहमेव (Ko, 2 °व), B3 D5 व्यूढमेव, B4 Dn2 व्यूढमेतद्, D1 व्यूह्य चैव, D4, 7, 8 व्यूहमेतद् S यथान्यायम् (for °शास्त्रम्)

2 $^a$) K1 युष्टम्, K4 हृष्टम्, B Da Dn D4, 7, 8 तुष्टम् (B1 °ष्टिम्) (for पुष्टम्) K3 पृष्टमस्माक मत्यतम्, D1 S जु(D1 द)ष्टमस्माभिरत्यतम् (M4 °रत्य र्थम्) — $^b$) Ko–2 इति काम, K5 अभीकाम, S अभिराम, Ca c °काम (as in text) K3, 5 D2 मे (for न) D1 अतिकाम च सर्वदा — $^c$) K1 बहुम्, B1 प्रक्रम्, Da Dn1 D5 प्राज्ञम्, Ca प्रज्ञम् (for प्रह्वम्) D1 बहुमेधसमुत्पन्न, S प्रहृष्ट व्यसना( T G1–3 °नो )पेत — $^d$) K1 परस्ता, K2 पुरसा, Da1 Dn1 D3, 8 M5 पुरस्ता (for पुरस्ताद्) Ko, 2 B3 M4 दृढ° (for दृष्ट°)

प्रद्युम्नव्यसनोपेतं पुरस्ताद्दृष्टविक्रमम् ॥ २
नातिवृद्धमबालं च न कृशं न च पीवरम् ।
लघुवृत्तायतप्रायं सारगात्रमनामयम् ॥ ३
आत्तसंनाहशस्त्रं च बहुशस्त्रपरिग्रहम् ।
असियुद्धे नियुद्धे च गदायुद्धे च कोविदम् ॥ ४
प्रासर्ष्टितोमरेष्वाजौ परिघेष्वायसेषु च ।
भिण्डिपालेषु शक्तीषु मुसलेषु च सर्वशः ॥ ५
कम्पनेषु च चापेषु कणपेषु च सर्वशः ।
क्षेपणीषु च चित्रासु मुष्टियुद्धेषु कोविदम् ॥ ६
अपरोक्षं च विद्यासु व्यायामेषु कृतश्रमम् ।
शस्त्रग्रहणविद्यासु सर्वासु परिनिष्ठितम् ॥ ७
आरोहे पर्यवस्कन्दे सरणे सान्तरप्लुते ।
सम्यक्प्रहरणे याने व्यपयाने च कोविदम् ॥ ८
नागाश्वरथयानेषु बहुशः सुपरीक्षितम् ।

C 6 3320
B 6 76 9
K 6 76 9

---

3 a) D1 च बाल च, T1 G1 3 4 नबाल च, G2 नातिबाल (for अबाल च) — b) M2 transp न and च — c) K0-2 D1 °यतप्राम, K7 लघुवत्ता तयायाम (sic), K5 D4 लघुहस्त(K5 °स्त)जितप्राय, Da° °वृत्तायतभुजं, D. °वृत्तायतप्राज्ञ, T2 °वृत्तायतहय, G1 7 लघ्ववृद्धनरप्रायं Ca (on a mended portion of the page, s. m.) as in text Cc cites लघु, वृत्त, आयत and प्राय, Cd लघुवृत्त and आयत° — d) K3 सार गात्रमनोमय, K4 B1 2 सारमात्रमनामय, D1 सारयोध°, D3 सरयोध° (sic), D. सीगरोत्र° (sic), D6 सार गाध°, S सागराकारमव्यय; Cc d as in text

4 a) K4 B Da Dn1 D. °मपत्र, D3 6 °कवच, G2 3 M4 आर्त्तमनाहशस्त्र च Cc cites आत्तमनाह — b) G2 बाहुशस्त्र° — c) K2 असियुद्ध, K4 रथयुद्धे, B2 असियुद्ध K2 नियुद्धत्वे; K4 प्रयुद्धे च, Cc d नियुद्धे च (as in text) — d) K0 गदायुद्धेन, K4 असियुद्धे च, T1 G2 4 शस्त्रयुद्धे च (for गदायुद्धे च) S सजय, Cc कोविदम् (as in text)

5 Ś1 om (hapl) 5-6, K0 1 om 5a-7b — a) K2 प्रासर्ष्टितोमरेमाजौ, K3 °तोमरेष्वाम, B3 °तोमरैराजौ, D1 प्रासासितोमरेष्वाजौ, D2 प्रासर्ष्टितोमर शर°, D5 प्रासृष्टितोमरेष्वाजौ, G प्रासेष्टितोमरेष्वाजौ Cd cites प्रास and ऋष्टि — b) K4 T2 °ष्वायुधेषु, T1 G °ष्वायतेषु — c) K2 भिंडपालेषु, K3 भीडिमालेषु, K4 . B Da2 Dn D1 4 7 भिंडिपालेषु, Da1 D2 3 5 6 भिंडिमालेषु B3 शक्तिश्च, Da1 D. शक्तिषु, T1 G M2 शस्त्रेषु, T2 शूलेषु (for शक्तीषु) — d) K2-4 B D1 Dn1 D2 3 . 6 8 मुश( B3 °प )लेषु, Dn2 तुमुलेषु

6 Ś1 K0 1 om 6 (cf v 1 5), K5 Dn2 D1 5 om (hapl) 6ab — a) T G कर्पणेषु, M1-3 5 कण येषु, M4 कर्पणेषु (for कम्पनेषु) — b) K2 मुद्गरेषु, K3 कणत्वेषु, B2 बल्पेषु, B3 T1 G करणेषु, D2 कृपणेषु, D3 6 T2 M4 कणयेषु, M1-3 5 कर्पणेषु, Cd कणपेषु (as in text) K3 4 D2 6 M1-3 5 च सजय, D. च सजया (for च सर्वश) — c) K3 4 B Da Dn D2 3 5 7 क्षेपणीयेषु, T1 G2 4 क्षेपणीयासु (for क्षेपणीषु च) D1 6 T2 G1 3 M वि (for च) K2-4 B Da Dn D2 4 5 7 8 चित्रेषु (for चित्रासु) Cc cites क्षेपणेषु — d) K4 D3 T2 मुष्टियुद्धे च, K5 मुक्ति युद्धेषु K2 B Da Dn D4 5 7 8 च क्षम, K3 5 D1 2 चाक्षय, G1 3 कोविद° (for कोविदम्) Cc cites क्षम

7 K0 1 om 7ab (cf. v 1 5) — a) T2 परोक्ष विद्याविद्यासु Cc d cite अपरोक्ष (as in text) — b) Ś1 K3-. B Da2 D1 2 5 7 व्यायामे च, Da1 व्यायामेव (for °मेषु) Cc cites व्यायामे D2 कृता श्रम — c) Ś1 K0-2 4 T G अस्त्रग्रहण°, Da1 शस्त्रा गृहण°, D5 6 असुग्रहण°, D5 शास्त्रगृहीण° — d) B1 सर्वेषु (for सर्वासु) D1 परिनिश्रित

8 a) K2 D1 Ca पर्यवस्कधे, Cd प्रत्यवस्कन्दे, Cc पर्यवस्कन्दे (as in text) — b) K0 1 शरणे, K2 शरेण, D2 सगणे, D6 शराणां, Ca c d सरणे (as in text) K1 सातरश्रुते, D1 सागरप्लुवे, D3 6 शात रप्लुते, T1 G M सोत्तरप्लुवे, Cd सलेवप्लुवे, Cc सान्तर° (as in text) T2 सरणोत्तरणे प्लुते — c) T2 सद्य (for सम्यक्) K3 5 प्रग्रहणे (for प्रहरणे) D6 सम्य ग्वयरथामेव — d) K3 5 D2 सस्थाने चैव, D6 यथा दाने च, Cc d व्यपयाने च (as in text) K3 T2 कोविद°

9 b) K1 सुपरीचत, K3 Da1 D5 सुपरिक्षित (Da1 °त), S परिनिष्ठित — c) K1 परीक्षा, D5 परिक्ष्य S1 K0 2 D6 यथान्यायम, D1 यथाशक्त्या — d) Da1 चेतनेन, D2 3 वेतने च, D6 चेतने च, T1 वेदनेन, Cd वेतनेन (as in text) Dn2 [उ]पपादिते, M4 °पादित°, M5 °पादिता D6 वेतनोपरिपादित (sic), Cc as in text

C 6 3321
B 6 76 9
K 6 76 9

परीक्ष्य च यथान्यायं वेतनेनोपपादितम् ॥ ९
न गोष्ठ्या नोपचारेण न च वन्धुनिमित्ततः ।
न सौहृदबलैश्चापि नाकुलीनपरिग्रहैः ॥ १०
समृद्धजनमार्यं च तुष्टसत्कृतबान्धवम् ।
कृतोपकारभूयिष्ठं यशस्वि च मनस्वि च ॥ ११
सजयैश्च नरैर्मुख्यैर्बहुशो मुख्यकर्मभिः ।
लोकपालोपमैस्तात पालितं लोकविश्रुतैः ॥ १२
बहुभिः क्षत्रियैर्गुप्तं पृथिव्यां लोकसंमतैः ।
असमानभिगतैः कामात्सबलैः सपदानुगैः ॥ १३
महोदधिमिवापूर्णमापगाभिः समन्ततः ।
अपक्षैः पक्षसंकाशैः रथैर्नागैश्च संवृतम् ॥ १४
नानायोधजलं भीमं वाहनोर्मितरङ्गिणम् ।
क्षेपण्यसिगदाशक्तिशरप्राससमाकुलम् ॥ १५
ध्वजभूषणसंबाधं रत्नपट्टेन संचितम् ।

---

10 ^a) K1 4 B D (except D2 3 6) S नोपकारेण, Ca सोपचारेण; Cd नोप° (as in text) Cc cites उपकारेण — ^b) Da Dn D4 (before corr) 5 8 न सबधनिमित्तत; D1 न च बुध्या निमि°, D6 न च वर्त्ते निमि°; D7 न सबधिनिमि° Ca c cite सबन्ध°, Cd न बधुनिमित्तत — ^c) K3 5 B Da1 Dn1 D1, 2 न सौहृदबलैर्वापि, K4 Da2 Dn2 D4 5 7 8 Ca, c d न सोहृदबलेनापि, T1 G4 न सौहार्दाद्बलात्कारैर्, T2 M न सौहृदबलात्कारैर्, G1 3 न सौहार्दबलाहारैर्, G2 न सौहार्दान्न चाकारैर् — ^d) Ko Da1 Dn1 D4-8 न कुलीन°, K1 2 न कुलेन परिग्रहैः, B1 Da2 नाकुलीन परिग्रहम् (Da2 °हे), D1 S न कुलैर्न परिग्रहैः Cc cites कुलीनपरिग्रहैः

11 ^a) Ś1 तु (for च) Ko 2 समृद्धबलमार्यं च, K1 °बलमाया च; K3 °जनमार्यं च, K5 D2 °जनमा (K5 °ना)र्यं च, D6 °जनमार्यश्च, T1 G कुलीनमाढ्य (G1 3 °यं) वीर च, T2 कुलीनमाढ्यमार्यं च, M कुलीनजनमार्यं च (M4 °मायुश्च) Ca c d cite आर्यं — ^b) D1 6 T G1 2 4 तुष्ट (for तुष्ट) Ś1 तुष्टिशतृत बांधव° (sic), K3 5 तुष्टसबधिबांधवं, K4 तुष्टिमत्कृत°, D2 तुष्टिमत्कृत°, M4 तुष्टसज्जन° — ^c) D5 कृत्योपकार° — ^d) Ca d cite मनस्वी, Cc °स्वि D1 सुमनस्वि (for च मनस्वि)

12 ^a) Ko 1 सजलैश्च, K2 B Da Dn D4 5 7 8 सजवैः, K3 स्वजनैः, D3 6 सहृतैः, T1 G अजयैः, M1 2 3 (inf lin as in text) 4 5 सज्जनैः (for सजयैः) B1-3 Da Dn1 D5 हयैर्, B4 बलैर्, D3 6 T1 G M जनैर् (for नरैर्) K5 D2 स्वजनैः सुनरैर्मुख्यैर्, D1 सहजैश्च गुणैर्युक्त, T2 प्रस्तुन स्वजनैर्मुख्यैर् — ^b) B4 बहुभिर् (for बहुशो) K3 5 B1 D2 दृष्टकर्मभिः, D1 कृतलक्षण, D3 6 मुख्यलक्षण (for °कर्मभि) — ^c) Ś1 गुप्ता, Ko 1 भुक्त, K2 तात, S तत्र (for तात) — Ś1 Ko 1 om (hapl) 12^d–13^a — ^d) K2 लोकविसुत्तैः (sic), Da1 °विश्रुते, D1 °विश्रुतैः

13 Ś1 Ko 1 om 13^a (cf v 1 12), D2 6 om (hapl) 13^ab — ^a) D1 क्षत्रियैर्बहुभिर् (by transp); G3 महाभि क्षत्रिभिर् K4 गुप्त (for गुप्तं) — ^b) K3 Dn2 D5 लोकसमितैः, D1 °विश्रुतैः, T1 G शूर सत्तमैः; T2 M शूरसमतैः — ^c) After असमा, K1 repeats 11^cd G4 असमाद् (for असमान्) K4 5 T2 M अभिगत; B3 अपि गतैः, D2 अभिगम, T1 G3 4 अभि हित; G1 अभिमत, G2 अभिमतान् (for अभिगतैः) Ś1 D1 कामैः, Ko-2 काम, K5 G1-3 कामान्; T2 सौम्य, Cc कामात् (as in text) — ^d) K4 सपदैः, D6 सबालैः, S स (G4 स्व) बल (for सबलैः) S सपदा (G1 °यला) नुग, Cc सपदानुगैः (as in text)

14 ^b) D1 अत्रासक्त (for आपगाभिः) — ^c) B1 3 4 Dn D1 3 4 6-8 Ca पक्षिसकाशैः Da D5 Ca अपक्षैः पक्षसकाशैः, S अपक्ष (G3 °क्ष) गिरिसकाशैः Cc cites पक्षिसदृशैः, Cd पक्षिसदृशैः — ^d) K1 2 Da1 नागश्च K3 सभृत, K4 संकुल, D4 सवृत°, D5 सवृतौ

15 ^a) Ś1 नानायोधबल, Ko-2 T1 G4 °युधबलैर्; D2 T2 M1 2 °योधबलैर्, D7 °योधजन, G1-3 °यूथ बलैर्, M3 5 °यौधबलैर्, M4 °यौधगणैर् Ś1 भीम, Ko-2 D2 भीमैर्, D6 भीम (for भीम) — ^b) Ko-2 वाहि (K1 °ह) नोर्मितरंगिमद्, K5 वाहिनोर्मि तरंगिण, D1 वाजिभिर्मि तरंगिण, T1 G वाहनोर्मितरंगित — ^c) Da1 D5 क्षप (D6 °य) ण्यसि, T G M4 क्षेप णासि — ^d) K2 Dn2 D4 8 शरप्रासैः, D6 -शरप्राश- (for -शरप्रास)

16 ^a) D1 बहुभूषणसंनद्ध, D3 ध्वजरूपेण सबाध — ^b) K1 रत्नपट्टधनसचित, K3 °पट्टेन सचितैः; K4 B1 3 Da2 Dn D1 4 5 7 8 °पट्टसुसचित, K5 D2 रत्न (K5 °क्त) पट्टनसनिभैः, B2 °पट्टसमाचित, B4 °पट्टसु सवृत, Da1 °पादसुसचित, D3, 6 °पत्रसमाचित, S °कुट्टिमभूपित, Cc रत्नपट्टैः सुसचित, Cd रत्नपट्टैः सम°

वाहनैः परिसर्पद्भिर्वायुवेगविकम्पितम् ॥ १६
अपारमिव गर्जन्तं सागरप्रतिमं महत् ।
द्रोणभीष्माभिसंगुप्तं गुप्तं च कृतवर्मणा ॥ १७
कृपदुःशासनाभ्यां च जयद्रथमुखैस्तथा ।
भगदत्तविकर्णाभ्यां द्रौणिसौबलबाह्लिकैः ॥ १८
गुप्तं प्रवीरैर्लोकस्य सारवद्भिर्महात्मभिः ।
यदहन्यत संग्रामे दिष्टमेतत्पुरातनम् ॥ १९
नैतादृशं समुद्योगं दृष्टवन्तोऽथ मानुषाः ।
ऋषयो वा महाभागाः पुराणा भुवि संजय ॥ २०
ईदृशो हि बलौघस्तु युक्तः शस्त्रास्त्रसंपदा ।
वध्यते यत्र संग्रामे किमन्यद्भागधेयतः ॥ २१
विपरीतमिदं सर्वं प्रतिभाति स्म संजय ।
यत्रेदृशं बलं घोरं नातरद्युधि पाण्डवान् ॥ २२
अथ वा पाण्डवार्थाय देवास्तत्र समागताः ।
युध्यन्ते मामकं सैन्यं यदवध्यन्त संजय ॥ २३
उक्तो हि विदुरेणेह हितं पथ्यं च संजय ।
न च गृह्णाति तन्मन्दः पुत्रो दुर्योधनो मम ॥ २४
तस्य मन्ये मतिः पूर्वं सर्वज्ञस्य महात्मनः ।

C 6 3335
B 6 76 25
K 6 76 25

---

न्वित — c) Da1 D- वाहने (for °नै) B1. 2 4 Da Dn D1 3–6 S परिधावद्भिर् (for °सर्पद्भिर्) K3 B3 D2 7 परिधावद्भिरश्वैश्च — d) Ś1 वायुवेगमकंपित, Ko 2 B2 3 Da Dn1 D5 T G M4 Cc °विकल्पित (G2 °क), K1 °विकल्पत,

17 a) Da1 D3 गर्जंत — b) D1 बल (for महत्) — c) Da1 D1 S द्रोणभीष्मादिभिर्गुप्त — d) D1 तथा (for गुप्त) Da1 क्षतकर्मण (for कृतवर्मणा)

18 a) D- कृप (for कृप) — b) K1 जयजय मुखैस् T2 तदा (for तथा) — d) Ś1 द्रौणिसौवीर बाह्लिकैः, D3 6 द्रौणि(D6 द्रोण)सौबलकेकयैः, D5 द्रौणि सुबलबाह्लिकैः, D7 G2 द्रौण(G2 °णी)सौबलबाह्लिकैः

19 a) Da1 प्रवीरे, D5 प्रविरैर्, D6 प्रवीर K6 गुप्तप्रवरैर्लोकस्य — b) Ś1 Ko–2 मानवद्भिर्, Cc सार° (as in text) D1 (m as in text) S महा रथैः (for °त्मभिः) — c) Ko यद्दहन्यंत D1 2 6 S सैन्य मे (for संग्रामे) K6 D2 यदन्यद(K5 °म)पि संग्रामे — d) K4 दृष्टम्; Dn2 दैवम्, D3 दिष्ट्यम्, Ca c d दिष्टम् (as in text) K6 दिष्टमत्त (for दिष्ट मेतत्) Ko–3 B2 4 Dn2 D1–4 6–8 T G M1 2 4 Ca मत्र (for एतत्) S परायण, Ca पुरातनम् (as in text)

20 a) D1 अनुद्योग (for समुद्योग) K6 नैतादृशं सम घोर — b) Ś1 दृष्टावतो, K3 5 D2 दृष्टपूर्वा, G1 दृढवंतो (for दृष्टवन्तो) K3 5 B1 D2 हि, D8 [ऽ]त्र (for ऽथ) D2 सामुख्या (m °नुषा) (for मानुषा) Da1 दृष्टवानथ मानुष, T2 दृष्टवतोभिमानुष (sic) — c) K3 Da Dn3 D5 महाभागा — d) Ś1 प्ररणा, K6 पुराणे, B1 Da1 पुराण (for पुराणा)

21 Ko om (hapl) 21a–22b — a) K1 [ऽ]य, K2 4 B Da Dn D4 6 7 8 [ऽ]पि, D6 ह (for हि) — Da1 om 21bcd — b) Dn2 मुक्त, T2 युक्त (for युक्त) K2 B1 3 4 D1 7 8 शास्त्रार्थसंपदा, K4 शास्त्रास्त्र°, Dn2 T1 G4 शस्त्रार्थ° (for शस्त्रास्त्र°) K5 D2 सयुक्त शस्त्रसंपदा — c) Ś1 वध्यते, D1 बाध्यते, D6 पन्यते (for वध्यते) K5 यस्य (for यत्र)

22 Ko om 22ab (cf v l 21) — b) K3 5 B1 D1 2 हि; T1 G4 स्म (for स्म) K1 G2 संजय — D2 om (hapl) 22c–24b — c) T2 यदीदृश, G2 यत्रैदृश (for यत्रेदृश) — d) K3 5 पाडवो हत वान्रणे, T G नावधीद्युधि पाडवान्

23 D2 om 23 (cf v l 22) — a) K6 पाडवा र्थाय नियत — b) Ko 2 सर्वे (for तत्र) T2 तु संगता (for समागता) — c) K5 युध्यता, D6 युध्यान्स, S युध्येयुर् (T2 युद्धे तु) — d) K3–5 D3 8 यथा वध्यति, B3 4 Da Dn D4 (before corr) 5 यथा वध्यति, D1 तेन वध्यति, D4 7 8 यथावध्यत, T G यदहन्यत (for यदवध्यन्त) B1 2 यथा संजय वध्यते, M यथाहन्यत संयुगे

24 D2 om 24ab (cf v l 22) — a) Ś1 युक्त हि, D1 उक्तश्च, S (except M4) उक्तोपि (for उक्तो हि) Ś1 विदुरेणोक्त, Ko °णैव K1 °रेणैप, K2 °रेणेप, K3–5 D3 T G1–3 M4 °रेणाहं, B1 °रेणेहं, D1 °रेणासौ, M1–3 5 °रेणाथ — b) K5 नित्य (for हित) T G M2 युक्त, M1 3 5 तथ्य (for पथ्य) K2 B Da Dn D4 6 7 8 T2 M नित्यश, T1 G भारत (for संजय) D1 धीमता सत्यवादिना — c) K3–5 D2 7 च जग्राह, D6 8 जग्राह च (for च गृह्णाति) S नाश्रृणो चैव (T2 M °श्चापि) तन्मद

C 6 3335
B 6 76 25
K 6 76 25

आसीद्यथागतं तात येन दृष्टमिदं पुरा ॥ २५
अथ वा भाव्यमेवं हि संजयैतेन सर्वथा ।
पुरा धात्रा यथा सृष्टं तत्तथा न तदन्यथा ॥ २६

इति श्रीमहाभारते भीष्मपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

# ७३

संजय उवाच ।
आत्मदोषात्त्वया राजन्प्राप्तं व्यसनमीदृशम् ।
न हि दुर्योधनस्तानि पश्यते भरतर्षभ ।
यानि त्वं दृष्टवान्राजन्धर्मसंकरकारिते ॥ १
तव दोषात्पुरा वृत्तं द्यूतमेतद्विशां पते ।
तव दोषेण युद्धं च प्रवृत्तं सह पाण्डवैः ।
त्वमेवाद्य फलं भुङ्क्ष्व कृत्वा किल्बिषमात्मना ॥ २
आत्मना हि कृतं कर्म आत्मनैवोपभुज्यते ।

---

25 a) Ko 1 तत्त्वे ( for मन्ये ) Da1 Dn1 D7 मतिं, Dn2 मत, Ca.c मति ( as in text ) K5 D3 तस्यामात्य( K5 °स्य मान्य )मति पूर्वं, D8 तस्य मन्यामहे पूर्वं; D6 तस्य मान्यमतीपूर्वं, T1 G तथ्य ( T1 G4 °थ्या ) मन्ये मतिं ( G1 3 °त ) तस्य, T2 M3 ( inf lin ) तथ्या ( T2 °थ्यं ) मन्ये मतिं पूर्वं ( T2 °र्वां ), M अवमत्य मतिं पूर्वं ( M1 4 °र्वां ) — b) D5 ब्रह्मज्ञस्य, M विदुरस्य ( M3 sup lin सजयस्य ) ( for सर्वज्ञस्य ) D1 सर्वज्ञस्येव सजय — c) Ś1 यथागमस्तेन, Ko 1 °गमस्थेन, K5 D2 °मत तात, M1 3–5 °गम तत्र ( M4 तात ) ( for °गत तात ) T1 G4 आसीत्तथा गत तथ्य, G3 आसीद्यथोक्त गदतो, M2 आविद्यतागम तत्र Ca c cite यथागत, आसीत्, Cd यथागम

26 a) Ko 1 ग्राह्यम्, T2 भाग्यम्, Cc भाव्यम् ( as in text ) K3 एवाद्य, K5 एवाह, Da1 एव हि, D6 एनं हि ( for एव हि ) — b) Ś1 सजय तेन ( for संजयैतेन ) K4 सर्वदा, D1 सर्वश — c) K5 धात्र्या, Da1 ध्यात्वा ( for धात्रा ) Ko–3 सृष्ट, B1 2 T G1 3 4 M2 4 दिष्ट, Da Dn1 D5 [उ]द्दिष्ट, G2 दृष्ट ( for सृष्ट ) — d) Ko transp तत् and तथा K5 नौ ( for न ) Ś1 तन्नन्यथा ( sic ), K4 B नैतदन्य°, Da Dn1 D5 न तु नान्य° ( for न तदन्य° ) K1 तथा तनपदन्यथा, K2 तथा तन्नेदमन्यथा, M तथा तन्न तदन्यथा

Colophon om in Ś1 — *Sub-parvan* Omitting sub-parvan name, Ko–2 D2 mention only षष्ठ युद्धदिवसे, K4 पष्ठेह्नि, M4 षष्ठेह्निके — *Adhy name* K4 T2 धृतराष्ट्रानुताप ( T2 °शय ), Da Dn1 D6 धृतराष्ट्रवाक्य, G2 M1 2 3 ( sup lin ) धार्त( M1–3 धृत )राष्ट्रसेनावर्णन — *Adhy no* ( figures, words or both ) Da2 ( marg sec m ) 34, Dn2 T1 G 71, D1 75, T2 M3 4 73, M1 2 72 ( as in text ), M5 74 — *Śloka no* Dn D5 26

## 73

1 a) K1 2 Da1 आत्मदोषा, K3 आत्मदोषास्, K5 D2 आत्मनैव, G2 आत्मदोषस् B4 महाराज, M तथा राजन् — c) B3 Dn1 D1 3 ( before corr ) T G तात, Cc तानि ( as in text ) — d) B2 Da Dn1 D5 ददर्श, D2 ( before corr ) पश्यतो ( for पश्यते ) D1 भरतोत्तम — e) T1 G यदिद ( for यानि त्व ) K5 घृष्टवान्, Da2 धृष्टवान्, S पश्यसे ( G1 3 °ते ), Cd दृष्टवान् ( as in text ) — f) K2 4 5 धर्मशकर°, B2 3 धर्मसकरकालिते, Dn D4 3 °कानि ते, D1 वर्ण सकरकारिते, D3 धर्मसंकरकानि वै, D7 °कानिव, S °सकर( G1 3 °सरक्ष )कारणात्, Cc d as in text

2 a) K2 परा ( for पुरा ) — b) B3 युद्धम् ( for द्यूतम् ) B1 एव ( for एतद् ) — c) D1 वै युद्ध, D5 युद्ध तत्, S युद्ध हि — d) Ko–2 प्रवृद्ध, Da1 प्रवर्त B1 Da2 D5 transp सह and पाण्डवै — e) K2 तमेवादि, D1 अते चाद्य ( for त्वमेवाद्य ) — f) D1 3 6 कृत्त ( for कृत्वा ) B1 4 Dn1 ( before corr ) D1 3 4 7 T1 G1 3 4 M1 2 4 आत्मन ( for आत्मना )

इह वा प्रेत्य वा राजंस्त्वया प्राप्तं यथातथम् ॥ ३
तस्माद्राजन्स्थिरो भूत्वा प्राप्येदं व्यसनं महत् ।
शृणु युद्धं यथावृत्तं शंसतो मम मारिष ॥ ४
भीमसेनस्तु निशितैर्बाणैर्भित्त्वा महाचमूम् ।
आससाद ततो वीरः सर्वान्दुर्योधनानुजान् ॥ ५
दुःशासनं दुर्विषहं दुःसहं दुर्मदं जयम् ।
जयत्सेनं विकर्णं च चित्रसेनं सुदर्शनम् ॥ ६
चारुचित्रं सुवर्माणं दुष्कर्णं कर्णमेव च ।
एतानन्यांश्च सुबहून्समीपस्थान्महारथान् ॥ ७
धार्तराष्ट्रान्सुसंक्रुद्धान्दृष्ट्वा भीमो महाबलः ।
भीष्मेण समरे गुप्तां प्रविवेश महाचमूम् ॥ ८
अथाह्वयन्त तेऽन्योन्यमयं प्राप्तो वृकोदरः ।
जीवग्राहं निगृह्णीमो वयमेनं नराधिपाः ॥ ९
स तैः परिवृतः पार्थो भ्रातृभिः कृतनिश्चयैः ।
प्रजासंहरणे सूर्यः क्रूरैरिव महाग्रहैः ॥ १०
संप्राप्य मध्यं व्यूहस्य न भीः पाण्डवमाविशत् ।

C 6 3348
B 6 77 12
K 6 77 12

---

G2 कृतं यत्वानत्वमात्मन (sic)

3 $^{a}$) K5 D2 सर्वेण हि, B Da Dn D4 5 7 8 आत्मनैव, D6 आत्मनो हि, T2 द्रोहेन हि — $^{b}$) K0–2 T1 G ह्यात्मनैवोप, D1 आत्मनैव हि; D5 °नै वाय — $^{d}$) T1 G2 4 तव, T2 M3. 4 तत्त्वा, G1 3 तत्तु, M1 2 तत्त्वा, M5 तस्त्वा (for त्वया). K3 6 D2 6 यथा तथा, B2 Da Dn1 D5 सुदारुण

4 $^{b}$) K3 प्राप्स्येद, G1–3 M1 3 5 प्राप्यैव (for प्राप्येद) D3 व्यजन — $^{c}$) D1 T2 शृणु वृत्त यथा युद्ध — $^{d}$) D1 वदतो, M1–3 5 गदतो (for शंसतो) K3 6 D2 मे नराधिप, S मम भारत

5 $^{a}$) K0 1 3 B D (except D1) सु, K2 स (for तु) — $^{b}$) G3 भाणैर् Ś1 K0 हत्वा (for भित्त्वा) K2 महाचमू, D1 महारथान्, T2 यथा चमू — $^{c}$) K3 G1 रणे, D1 3 T2 तथा, M1. 3–5 तदा, M2 महा (for ततो) K3–5 D1 2 6 T G वीरान् (for वीर) — $^{d}$) K5 Da1 D2 3 (marg sec m as in text) 5 6 T1 G °नानुगान्.

6 $^{a}$) Da2 D5 दुर्विसहं — $^{b}$) B3 दुर्मुख, D1 दुर्मिह, S दुष्पह (for दुःसहं) B3 दुःसह, D3 दुर्मुख, T2 G1–3 M दुर्जयं (for दुर्मद) — After $6^{ab}$, K1 reads $4^{a}$–$5^{c}$ in parenthesis — $^{c}$) K4 B Da2 Dn2 D1 4 5 8 जयसेन (for जयत्सेनं)

7 $^{a}$) Ś1 चारुमित्र, D6 चारुचित्र (for °चित्र) K3 T2 M1–3 5 सुदामाण, D1. 8 सुधर्माण (for सुवर्माण) — $^{b}$) K3 दुतहं, K5 D2 दुःसह, B2 सुकर्ण, Da1 दुकार्ण, D1 6 दु कर्ण, D5 दुष्कर (for दुष्कर्ण) — $^{c}$) K2 एतानन्याश्च, K3 °श्चान्याश्च, B1. 3 D1–3 6 S एतां (D6 °ता) श्चान्याश्च — $^{d}$) K4 T1 G महाबलान् (for °रथान्)

8 $^{a}$) K0 2 4 सुसरब्धान्, K3 5 D1 2 T1 G2 4 °क्रुद्धो, D3 स संक्रुद्धान् (for सुस°) — $^{b}$) D1 भीमसेनो (for दृष्ट्वा भीमो) K3 वृकोदर; K5 D2 महारथ (for महाबल) — $^{c}$) B1 भीमेण (for भीष्मेण) D1 3 गुप्तान् (for गुप्ता)

9 K4 reads $9^{ab}$ twice consecutively — $^{a}$) K3 5 D2 तथाह्वयत (K3 °ति), K4 (second time) अथांगयंत, D1 अथाह्वयतस, M1–3 5 समाह्वयत (for अथाह्वयन्त) D6 आह्वयत ततोन्योन्यम्, T1 G समाह्वयस्तथान्योन्यम्, T2 M4 समाहूय (T2 तमाह्वय) ततोन्योन्यम् — $^{b}$) K4 (second time) असं (for अय) G3 यं प्राप्तोय वृकोदर — For $9^{ab}$, K4 (first time) B Da Dn D4 5 7 8 subst

294* अथालोक्य प्रविष्ट तमूचुस्ते सर्व एव तु ।

[K4 तु (for तम्), and तमूचु (for ऊचुस्ते) B3 हि (for तु)]

— $^{c}$) Ś1 Ca जीवग्रह, G2 जीवग्रीवां, Cc °ग्राह (as in text) D6 च गृह्णीमो, M4 निगृह्णामो D1 जीवग्राहेण गृह्णामो — $^{d}$) Ś1 लयमेन, K2 B3 4 Da1 Dn D4 6 वयमेत (K2 Da1 Dn1 °मेतन्), D5 वरमेतं, T G वयमेकं (for वयमेन) D5 नराधिप, T2 °धम

10 $^{a}$) Da1 D5 पार्श्वे (for पार्थो) — $^{b}$) K0 1 सहनिश्चयै, T1 G4 कृतनिश्चय — $^{c}$) K0 पुरा सहरणे, K1 युवा संह°, K2 पुरा सह°, K3 D6 प्रजहास रणे, Da1 D5 प्रजा (Da1 °ज्ञा) सहरणा — $^{d}$) K0–2 क्रुद्धैर् (for क्रूरैर्) K0 1 महारथै (for °ग्रहै)

11 $^{a}$) K1 वप्राप्य (sic), D6 सप्राप्त (for संप्राप्य) D5 मध्ये; G2 मध्यम (hypermetric) (for मध्य) K3 B3 D2 T1 G सैन्यस्य (for व्यूहस्य) B1 संप्राप्य व्यूहमध्यस्य, Da1 °प्य मध्यसुपहस्य (sic) — $^{b}$) D6 तं भी, T1 G तेपि (for न भी) G आविशन् — $^{d}$)

C. 6 3348
B 6 77 12
K 6 77 12

यथा देवासुरे युद्धे महेन्द्रः प्राप्य दानवान् ॥ ११
ततः शतसहस्राणि रथिनां सर्वशः प्रभो ।
छादयानं शरैर्घोरैस्तमेकमनुवव्रिरे ॥ १२
स तेषां प्रवरान्योधान्हस्त्यश्वरथसादिनः ।
जघान समरे शूरो धार्तराष्ट्रानचिन्तयन् ॥ १३
तेषां व्यवसितं ज्ञात्वा भीमसेनो जिघृक्षताम् ।
समस्तानां वधे राजन्मतिं चक्रे महामनाः ॥ १४
ततो रथं समुत्सृज्य गदामादाय पाण्डवः ।
जघान धार्तराष्ट्राणां तं बलौघमहार्णवम् ॥ १५
भीमसेने प्रविष्टे तु धृष्टद्युम्नोऽपि पार्षतः ।
द्रोणमुत्सृज्य तरसा प्रययौ यत्र सौबलः ॥ १६
विदार्य महतीं सेनां तावकानां नरर्षभः ।

---

K1 सहेंद्र , K3–5 B Da Dn D2 5 7 T1 G2–4 M1 (*sup lin*) महेंद्र T2 [अ]वाप्य (for प्राप्य) K3 4 D2 T1 G दानवा॰, K5 M1 (*sup lin*) दानव॰, D3 दानवीन्, M2 दानव

12 a) K3 D2 तथा; K5 यथा (for तत) T1 G M3 शरसहस्राणि, M4 शतसहस्राणां (for ॰स्राणि) — b) D1 3 6 रथाना, G2 रथीनां Ś1 K0 1 वर्गश॰, K2 गर्वस॰, B1 बहुश॰, D3 6 सर्वत॰ (for सर्वश॰) B2–4 Da Dn D4 5 7 8 सर्वशस्त्रिणां, D1 सर्वतोदिश, S च महात्मनां (for सर्वशः प्रभो) — c) Ś1 K3 5 T1 G M4 छादयाना , B1 छादया*; B2 3 Da2 Dn1 D5 उद्यतास्त्रै॰, B4 Dn2 D4 7 8 उद्यतानि, Da1 damaged, D1 छादयत॰, D2 3 6 छादयान॰ (for छादयान) B3 परैर् (for शरैर्) K3 5 तीव्रैस्, B2 योधैस्, D2 तीक्ष्णैस् (for घोरैस्) — d) Da Dn1 D1 5 तमेवम् (for तमेकम्) K2 अनुवाजिरे, K3 5 D2 S परिवव्रिरे; D1 अनुजग्मिरे, C0 अनुवव्रिरे (as in text) D6 तावकास्तानुवव्रिरे

13 a) K2 एतेषां (for स तेषां) K4 वाहान्, T2 युधान् (for योधान्) — b) K0–2 हस्त्यश्वरथसादिभि॰; K3 5 D2 हस्त्यश्वरथवाजिन , D1 ॰रथयोधिन — c) K0 जघार (*sic*), B2 जगाम (for जघान) K3 शूरान्, T1 G भीमो, M4 वीरो (for शूरो) — d) D6 नर्चितयन्, D3 M4 अर्चितयत्, C0 अचिन्तयन् (as in text)

14 a) K2 विवसित (for व्यव॰) — b) Ś1 K0 2 4 D3 6 महाबल॰ S जिघांसता (for जिघृक्षताम्) — c) Da1 वध (for वधे) — d) Ś1 महारथ॰, K2 T1 M4 महात्मना (T1 ॰ना॰), B Da Dn D4 5 7 8 महाबल॰ (for महामना )

15 K0 1 om (? hapl) 15–16 — b) K4 वीर्यवान् (for पाण्डव॰) — Ś1 om $15^{b}$–$16^{c}$ — After $15^{ab}$, D4 (marg *sec m*) S ins .

295* उवाच सारथिं भीम स्थीयतामिति भारत ।
यावदेनान्हनिष्यामि धार्तराष्ट्रान्सहानुगान् ।
इत्युक्त्वा भीमसेनस्तु प्रविश्य महतीं चमूम् ।

[ (L 1) M1–4 इह (for इति) — (L 2) D4 T2 M1–3 एतान् (for एनान्) M महानुजान् (M4 समागतान्) ]

— d) D1 3 6 S तद् (for त) B3 M4 बलौघ (for बलौघ॰) B3 महाबल॰ (for ॰महार्णवम्) — After 15, D4 S ins

296* गदया भीमसेनेन ताडिता वारणोत्तमा॰ ।
भिन्नकुम्भा महाकाया भिन्नपृष्ठास्तथैव च ।
भिन्नगात्रा सहारोहा॰ शेरते पर्वता इव ।
रथाश्च भग्नास्तिलश॰ सयोधा शतशो रणे ।
अश्वाश्च सादिनश्चैव पादातै॰ सह भारत । [5]
तत्राद्भुतमपश्याम भीमसेनस्य विक्रमम् ।
यदेक॰ समरे राजन्बहुभि॰ समयोधयत् ।
अन्तकाले प्रजा॰ सर्वा दण्डपाणिरिवान्तक॰ ।

[ (L 2) M1–3 5 छिन्न॰ (for भिन्न॰) — (L 3) D4 G1–3 सहारोहै॰, M4 हतारोहा॰ (for सहा॰) — (L 5) T2 पदातै , M1–3 पादाता॰ (for पादातै ) — (L 6) M1 3 4 अपश्यामो — (L 7) M1 3 यदेक ]

16 K0 1 om 16, Ś1 om $16^{abc}$ (cf v l 15) — a) M1 3 5 [ऽ]पि (for तु) D1 प्रविष्टे भीमसेने तु — b) K2 [ऽ]पि पार्श्वत॰, D1 3 6 महारथ॰ (for ऽपि पार्षत॰) — c) Da1 D5 द्रौणिम् S समरे (for तरसा) — d) D3 6 पाण्डव॰ (for सौबल॰) Ś1 सहसा प्रययौ तत॰, S ययौ येन (T1 G4 येन याति, T2 M2 ययौ यत्र) वृकोदर॰

17 a) K0 2 विव्याध, K1 विधाप (*sic*), K4 विवार्य, K5 B1 3 4 D (except D1) निवार्य, B2 जघान (for विदार्य) T2 M4 transp महतीं and सेनां

आससाद रथं शून्यं भीमसेनस्य संयुगे ॥ १७
दृष्ट्वा विशोकं समरे भीमसेनस्य सारथिम् ।
धृष्टद्युम्नो महाराज दुर्मना गतचेतनः ॥ १८
अपृच्छद्बाष्पसंरुद्धो निस्वना वाचमीरयन् ।
मम प्राणैः प्रियतमः क्व भीम इति दुःखितः ॥ १९
विशोकस्तमुवाचेदं धृष्टद्युम्नं कृताञ्जलिः ।
संस्थाप्य मामिह बली पाण्डवेयः प्रतापवान् ॥ २०
प्रविष्टो धार्तराष्ट्राणामेतद्बलमहार्णवम् ।
मामुक्त्वा पुरुषव्याघ्र प्रीतियुक्तमिदं वचः ॥ २१

प्रतिपालय मां सूत नियम्याश्वान्मुहूर्तकम् ।
यावदेतान्निहन्म्याशु य इमे मद्वधोद्यताः ॥ २२
ततो दृष्ट्वा गदाहस्तं प्रधावन्तं महाबलम् ।
सर्वेषामेव सैन्यानां संघर्षः समजायत ॥ २३
तस्मिंस्तु तुमुले युद्धे वर्तमाने भयानके ।
भित्त्वा राजन्महाव्यूहं प्रविवेश सखा तव ॥ २४
विशोकस्य वचः श्रुत्वा धृष्टद्युम्नोऽपि पार्षतः ।
प्रत्युवाच ततः सूतं रणमध्ये महाबलः ॥ २५
न हि मे विद्यते सूत जीवितेऽद्य प्रयोजनम् । C 6 3163 B 6 77 27 K 6 77 32]

— b) K0-3 Da2 D. T2 G2 3 M3-. नरर्षभ; D3 6 महारथ (for नरर्षभ) — c) M2 आरुरोह (for आससाद) B D (except D1-3 6) T1 G तूर्णं (for शून्यं) — After 17, D1 ins

297* रथं च शून्यं संप्रेक्ष्य भीमं प्रति विचेतनः ।

18 D1 om (hapl) 18 — b) K1 om (hapl) from थिम् up to मीर in 19b — d) T1 G2 4 हत चेतन (for गत°)

19 K1 om up to मीर in 19b (cf v l 18) — a) Dn2 आपृच्छद्, T1 G4 अब्रवीद् (for अपृच्छद्) Ś1 K0 2 °संपूर्णो, K3 °संरुद्धां, K4 °संपन्नो, D8 (inf lin as in text) °संयुक्तो, T2 M4 °संक्रुद्धो, M1-3 . °सदिग्धो (for °संरुद्धो) — b) Ś1 निःस्वन, K2. 4 B Da Dn D1-3 नि(or नि)श्वसन्, D1 विविक्ते, S गद्गदा (M1-3 5 °दो) (for निस्वना) — c) Ś1 K1 समप्राणैः, T1 G2 4 मम प्राणात् (for मम प्राणैः) Ś1 K D1 2 6 प्रियतर (for °तम) — d) G3 भीमस्त्विति (for भीम इति) Ś1 K0-2 विश्रुत, D1 सारथिं, D5 दूषित (for दुःखित)

20 b) K3 कृताञ्जली, Da1 °जलि, M2 °जलिं — c) K1 वहे (corrupt), G4 बलि, M2 गदी — d) K3 5 D2 पराक्रमी (for प्रतापवान्) K4 पाडव सुप्रतापवान्, B Da Dn D4 5 7 8 पाडव सु(Da1 D5 स)महाबल, S भीमसेनो महाबल

21 a) K0 2 प्रवृष्टो; K3 प्रविश्ये — b) K3 पुन, K4 B Da Dn D4 5 7 8 एको, S (except T2 M4) एत (for एतद्) — c) K1 4 B D2 3 6 T2 G1 पुरुष व्याघ्र.

22 a) Ś1 K2 T2 मा (for मां) — c) T2 M4 °देनान् K3-. B Da Dn D2 4 5 7 8 निहन्म्य(Da1 D. °न्म)ह, D1 हनिष्यामि, G1 नियम्याशु, G3 M2 निह(M2 °ह)त्याशु — d) Ś1 य एते (for य इमे) K2 मद्विषो, G1 मद्वधोद्यता (sic) D1 सदा दैवेन नोदितान् — After 22, S ins

298* अभ्यधावद्गदापाणिर्मद्बल स महाबल ।
[M1-3 5 सु- (for म)]

23 M1 3-5 om (hapl) 23ab — ab) D1 त दृष्ट्वा तु (for ततो दृष्ट्वा) K3 5 D2 transp गदाहस्त and प्रधावन्त T2 G M2 सहाय ते (for गदाहस्त) M2 om 23b-24c — d) K3-. B Da Dn D3-5 7 8 Cc सहर्ष, D2 सघर्ष, D6 सघट्ट, Cd सघर्ष (as in text)

24 M2 om 24abc (cf v l 23) — a) K1 3 4 B D (except D2 3) सु (for तु) Some MSS तुमुले — b) K4 B2 4 Da Dn1 D1 4 5 7 8 महाभये, Dn2 महारये (for भयानके) — c) K2 महाबाहू, D3 महद्व्यूह — d) Ś1 सखा तथा, K3-. D2 3 6 वृकोदर, D6 इवातव (sic)

25 b) Ś1 K4 च पार्षत, K0 2 महामना, K1 महारथ, K3 . D2 7 [ऽ]थ पार्षत — c) M4 तूर्णं (for सूत) — d) Da1 रणे भीष्म (for रणमध्ये) K2 B2 महाबल, Da1 D5 °बल

26 Before 26, D6 ins धृष्टद्युम्न उवाच — a) K3 B D जीवितेनापि, T1 G विद्यते किंचि(G2 कश्चि)न्, T2 M जीवत (T2 °वित, M3 5 °वित) किंचिद् (for विद्यते सूत) K5 पृष्ठायनगते भीमे — b) K3 B D

C 6 3646
B 6 87 2
K 6 87 2

निर्गच्छमानयोः संख्ये सागरप्रतिमो महान् ॥ २
ततो दुर्योधनो राजा चित्रसेनो विविंशतिः ।
भीष्मश्च रथिनां श्रेष्ठो भारद्वाजश्च वै द्विजः ॥ ३
एकीभूताः सुसंयत्ताः कौरवाणां महाचमूः ।
व्यूहाय विदधू राजन्पाण्डवान्प्रति दंशिताः ॥ ४
भीष्मः कृत्वा महाव्यूहं पिता तव विशां पते ।
सागरप्रतिमं घोरं वाहनोर्मितरङ्गिणम् ॥ ५
अग्रतः सर्वसैन्यानां भीष्मः शांतनवो ययौ ।
मालवैर्दाक्षिणात्यैश्च आवन्त्यैश्च समन्वितः ॥ ६
ततोऽनन्तरमेवासीद्भारद्वाजः प्रतापवान् ।
पुलिन्दैः पारदैश्चैव तथा क्षुद्रकमालवैः ॥ ७
द्रोणादनन्तरं यत्तो भगदत्तः प्रतापवान् ।
मागधैश्च कलिङ्गैश्च पिशाचैश्च विशां पते ॥ ८
प्राग्ज्योतिपादनु नृपः कौसल्योऽथ बृहद्बलः ।

Dn2 D8 सुख प्राप्ता, D1 सुख प्राप्य; D4 (before corr) 7 8 सुखप्राप्ता, G2 सुखसुख, M1 4 सुख सुप्त्वा Ś1 D1 T2 M4 जनेश्वर°, Dn2 °श्वर — $^{c}$) K1 कुरवा, K2 Da1 कुरव K4 पांडवा सर्वे, Da Dn1 D5 पांडवेया(Da1 °य)श्च (for पाण्डवाश्चैव)

2 $^{b}$) Ś1 K0–2 B1 3 4 D (except D1 2) सैन्ययोर् (for सेनयोर्) K8 D4 T1 G1 2 (*also* as in text) 4 M नृप (M2 नृप°), D6 तत (for अपि) — $^{c}$) K8 B1 Da2 Dn1 D2 5 8 निर्गच्छतो(K8 °च्छत्यो, D2 °च्छत्यो)स्तदा (for निर्गच्छमानयो°) D1 G1–3 M2 5 सत्ये — $^{d}$) Ś1 सागरप्रतिमौ, B2 सशिर प्रतिमो (sic) T2 G2 3 M यथा सागरयोरिव

3 $^{a}$) M1 2 तथा (for ततो) — $^{b}$) K0–2 D2 विशां पति, D5 8 विशां पते (for विविंशति) M1 चित्रसेनविविंशती — K6 om 3$^{cd}$ — $^{d}$) D6 (m as in text) भारद्वाजस्य, G1 भरद्वाजश्च B4 D7 8 स वै, D1 तथा (for च वै). D1 3 नृप, D5 द्विज (for द्विज) K0–2 भारद्वाजश्च वीर्यवान्

4 $^{a}$) K1 एके भूता, G3 एकीभूत K0–2 D2 स्वय यत्ता, D6 सुसयाता (for सुसयत्ता) D1 एते चान्ये च सयत्ता — $^{b}$) K0–3 B1 2 4 Da Dn D1 4–6 8 महारथा, K4 B3 D2 3 7 T G3 4 M1 2 4 °चमू (for °चमू) — $^{c}$) K0–2 व्यूहा(K0 °ह)न्वै, D1 व्यूह वै, C0 व्यूहाय (as in text) K6 D2 व्यदधू, D4 निदधू (for विदधू) Ś1 व्यूहाय विदधे राजन्, D8 (marg *sec m*) व्यूहान्परिदधू राजन् — $^{d}$) K0–2 D7 T2 M1–3 5 दसिता, T1 G1–3 M4 दसितान्

5 B2 transp 5$^{ab}$ and 5$^{cd}$ — $^{a}$) D1 8 तु त (for महा) D4 (marg *sec m* by corr) S ऊर्मि(T2 G1–3 M4 orig कूर्म)व्यूह तत कृत्वा — $^{b}$) D1 S पिता देवव्रतस्तव — $^{d}$) B1 3 वाहनौर्मि K0 2 तरगित, K6 तरंगिण

6 $^{a}$) K4 मुखत (for अग्रत) — $^{c}$) B2 मासुरैर, S (mostly) माळवैर् — $^{d}$) K5 D5 8 अवंत्यैश्च T1 G M4 समावृत° (M4 °ता); T2 महाग्रत, M1–3. 5 तथा वृत° (for समन्वित)

7 $^{a}$) K3 नेतानतरम्, S तदन° (for ततोऽनन्तरम्) — $^{c}$) Ś1 चिकुंठै°, K0 2 विकुंटै°, K1 D3 विकुंठै°, K3 5 D2 कुणिंदै°, B1 Da1 Dn1 D8 कुलिंदै°, D1 विकुंदै°, S (mostly) पुलिंदैर् (for पुलिन्दै°) D2 पारिदैश्, T1 G1 4 M8 दर्दरैश्, G2 3 दुर्दरैश्, M1. 2 4 5 द(M2 दु)रदैश् (for पारदैश्) D (except D1–3 6) M (except M4) चापि (for चैव) — $^{d}$) K5 क्षुद्रव्य, D3 रुद्रक (for क्षुद्रक) D8 S (mostly) -माळवै°

8 $^{a}$) K4 B2 Dn1 (by corr) D4 7 8 M1 2 5 द्रोणादनतरो T1 G4 युद्धे, T2 शक्तो (for यत्तो) — $^{c}$) K2 Da1 Dn1 D4 मगधैश्च (for मागधैश्च) K5 D2 कुलिंदैश्च, T1 G4 विशालैश्च (for कलिङ्गैश्च) B1 मागधैश्चैव कालिंगै° — After 8$^{c}$, T2 *repeats* (with v l) 6$^{d}$ and 7$^{a}$ — $^{d}$) K5 विशाश्चैव, D1 नाम लिंगैर्, T1 G विशालैश्च, T2 मात्रेयश्च (for पिशाचैश्च)

9 D1 om 9$^{a}$–10$^{b}$ — $^{a}$) Ś1 K0–2 4 भगदत्तादनु (for प्राग्ज्योतिपादनु) K5 G3 नृप, D3 नृप, M2 नृपा (for नृप°) T2 प्राग्ज्योतिपश्च नृपति° — $^{b}$) K2 कौसल्योथ, K3 5 Da1 Dn1 D2 3 6–8 कौशल्यो (D3 °ल्या)थ, Da2 D5 T1 G कौसलोय D8 बृह-च्छ्रवा (*sup lin* °द्रथ°) (for बृहद्बल°) — $^{c}$) Ś1 मेकलं, K0–2 चेलकैस्, T1 G1 3 4 M2 4 मेखलैस्, T2 G2 M1 3 5 मेघलैस् (for मेकलैस्) Ś1 त्रैपुरैश्चैव, K3–5 B1–3 Da1 Dn1 D2 5 T1 G त्रिपुरै°, Dn2 D3 त्रैपुर°, D6 च कुरिंदैश्च, Bom ed कुरुविन्दैश्च (for

मेकलैस्त्रैपुरैश्चैव चिच्छिलैश्च समन्वितः ॥ ९
बृहद्बलात्ततः शूरास्त्रिगर्तः प्रस्थलाधिपः ।
काम्बोजैर्बहुभिः सार्धं यवनैश्च सहस्रशः ॥ १०
द्रौणिस्तु रभसः शूरस्त्रिगर्तादनु भारत ।
प्रययौ सिंहनादेन नादयानो धरातलम् ॥ ११
तथा सर्वेण सैन्येन राजा दुर्योधनस्तदा ।
द्रोणेरनन्तरं प्रायात्सोदर्यैः परिवारितः ॥ १२
दुर्योधनादनु कृपस्ततः शारद्वतो ययौ ।
एवमेष महाव्यूहः प्रययौ सागरोपमः ॥ १३
रेजुस्तत्र पताकाश्च श्वेतच्छत्राणि चाभिभो ।
अङ्गदान्यथ चित्राणि महार्हाणि धनूंषि च ॥ १४
तं तु दृष्ट्वा महाव्यूहं तावकानां महारथः ।
युधिष्ठिरोऽब्रवीत्तूर्णं पार्षतं पृतनापतिम् ॥ १५
पश्य व्यूहं महेष्वास निर्मितं सागरोपमम् ।
प्रतिव्यूहं त्वमपि हि कुरु पार्षत माचिरम् ॥ १६
ततः स पार्षतः शूरो व्यूहं चक्रे सुदारुणम् ।
शृङ्गाटकं महाराज परव्यूहविनाशनम् ॥ १७
शृङ्गेभ्यो भीमसेनश्च सात्यकिश्च महारथः ।
रथैरनेकसाहस्रैस्तथा हयपदातिभिः ॥ १८
नाभ्यामभून्नरश्रेष्ठः श्वेताश्वो वानरध्वजः ।

C 6 3665
B 6 87 19
K 6 87 19

---

त्रैपुरैश्चैव ) — $^{d}$ ) Ś1 चिच्छिरैश्च, K3 S बर्बरै° ( T1 शबरै° ), K4 Da Dn1 D5 पुंड्रकै°, K6 मयति°, B चित्रकै°, Dn2 D7 8 चिचुकै°, D2 सयतै°, D3 चिविरै , D4 चुचुकै°, D6 त्रिच्छिलै° ( for चिच्छिलैश्च ) B. S ममतत ( for समन्वित° )

10 D1 om $10^{ab}$ ( cf v 1 9 ) D2 ( sec m ) reads 10 in marg — $^{a}$ ) Ś1 K. B2 4 Dn2 D2 3 बृहद्बलस्तत शूरस्, K2 °लसुत शरस्, K4 °लादतरतस्, Da Dn1 D5 7 °लादनु ततस्, D6 °लादुत्तरतस्, S °लादनु नृपस् ( for °लात्तत शूरस् ) — Ś1 om $10^{b}$ — $^{b}$ ) Ko-3 Dn2 D3 7 8 Cv त्रैगर्त° ( for त्रिगर्त° ) Cv प्रच्छलाधिप — $^{c}$ ) Ko 1 काम्भोजैर् K1 सार्धैर् ( for सार्धं ) — $^{d}$ ) Dn2 D4 7 8 प्रवरैश् ( for यवनैश् ) Ko-2 ममतत°, K3 5 D2 समन्वित ( for सहस्रश° )

11 D2 ( sec m ) reads $11^{ab}$ in marg — $^{a}$ ) Ko द्रौणिश्च, K1 4 B D1 4 द्रोणिस्तु, K2 द्रोणिश्च, Da1 द्रोणि सु ( for द्रौणिस्तु ) Ko-2 रथिना श्रेष्ठस्, K3 मत्तं शूरस्, D1 रमम शूरस्, T2 रभस क्रूरस् — $^{b}$ ) Ś1 K4 त्रिगर्तादिच ( K4 °थ ), B1-3 त्रैगर्तादनु, B4 Dn2 D7 8 त्रिगर्तानतु — K6 D2 om $11^{cd}$ — $^{d}$ ) Ś1 नाधयानो ( sic ), Ko-2 छाद° ( for नाद° ) S नमस्तल ( for धरा° )

12 $^{a}$ ) D2 सर्वाणि सैन्यानि, G3 सैन्येन सर्वेण ( by transp ) — $^{b}$ ) Ko-2 तत ( for तदा ) — $^{c}$ ) K2 D4 5 द्रोणेर्, K6 द्रौणिश्च, D2 द्रौणेश्च G3 अनतर M1-3 5 राजा ( for प्रायात् ) — $^{d}$ ) K1 2 5 D2 4 सौदर्यै; Da Dn D1 3 5 7 8 S सोदरै ( for सोदर्यैं )

13 $^{ab}$ ) K1. 2 5 Da1 transp तत and कृप S ययौ ( for तत ), and युधि ( for ययौ ) — $^{c}$ ) D2 एवमेषा, T1 G एवमेव Ś1 महाव्यूहा , T2 G2 °व्यूह — $^{d}$ ) G2 सागरोपम

14 $^{a}$ ) Da1 रेजुस्तव, T2 रेजुचित्र M1 3 5 पताकानि — $^{b}$ ) Ko चाविभो°, K2 3 D2 चाविभो, K4 B Da Dn D3-5 7 8 चा ( B3 वै ) विभो, D6 तत्र वै, T1 G भारत, T2 साभिभो ( for चाभिभो ) — $^{c}$ ) K4 B Dn1 [अ]त्र ( for [अ]थ ) S शुभ्राणि ( for चित्राणि ) D2 अगदानि विचित्राणि — $^{d}$ ) Dn2 D4 7 8 तोमराणि ( for महार्हाणि ) T1 G महांति ( for धनूंषि ) B3 4 धनूंषि तोमराणि च

15 $^{a}$ ) Ś1 Ko-2 त च ( for त तु ) K3 तथा व्यूह — $^{b}$ ) Ś1 Ko-2 महारथा°, T1 G °बल ( for °रथ° ) — $^{c}$ ) Ś1 K5 6 राजन्, D6 राजा ( for तूर्णं ) — $^{d}$ ) K1 पार्पित ( for पार्षतं )

16 $^{b}$ ) T2 विहित ( for निर्मित ) — $^{c}$ ) D2 प्रतिव्यूह Ko-2 त्वमपि वै, K4 B2 3 Da2 Dn1 त्वमप्यत्र; B4 Dn2 D4 6-8 त्वमपि मे, Da1 D5 त्वमप्यन्य, T G M4 रणे शूर, M1-3 5 महाबाहो ( for त्वमपि हि ) — $^{d}$ ) B D सत्वर ( for माचिरम् ) S कुरु क्षिप्र महारथ ( T2 M2 °थ , M1 °र्थं )

17 $^{a}$ ) Da D1 5 M तु ( for स ) Bom ed क्रूरो ( for शूरो ) — $^{c}$ ) Ca शृगारक Da Dn1 D5 महाव्यूह ( for °राज ) Cv as in text — $^{d}$ ) Da1 महा ( for पर ) Dn2 D6 परव्यूहविनाशक, S तव व्यूहविदारण

18 $^{a}$ ) K3 5 D2 शृगेषु, K4 B Da Dn D1. 3-8 Ca शृगाभ्या, T1 G1 4 शृगोभूद्, T2 G2 3 M शृंगेभूद् ( for शृङ्गेभ्यो ) — K2 om ( hapl ) $18^{c}$–$21^{b}$. — $^{d}$ ) Ś1 तयाह च, Ko 1 तथा हस्ति ( for तथा हय ).

C 6 3935 B 6 87 19 K 6 87 19

मध्ये युधिष्ठिरो राजा माद्रीपुत्रौ च पाण्डवौ ॥ १९
अथेतरे महेष्वासाः सहसैन्या नराधिपाः ।
व्यूहं तं पूरयामासुर्व्यूहशास्त्रविशारदाः ॥ २०
अभिमन्युस्ततः पश्चाद्विराटश्च महारथः ।
द्रौपदेयाश्च संहृष्टा राक्षसश्च घटोत्कचः ॥ २१
एवमेतं महाव्यूहं व्यूह्य भारत पाण्डवाः ।
अतिष्ठन्समरे शूरा योद्धुकामा जयैषिणः ॥ २२
भेरीशब्दाश्च तुमुला विमिश्राः शङ्खनिस्वनैः ।
क्ष्वेडितास्फोटितोत्कुष्टैः सुभीमाः सर्वतोदिशम् ॥ २३
ततः शूराः समासाद्य समरे ते परस्परम् ।
नेत्रैरनिमिषै राजन्नवैक्षन्त प्रकोपिताः ॥ २४
मनोभिस्ते मनुष्येन्द्र पूर्वं योधाः परस्परम् ।
युद्धाय समवर्तन्त समाहूयेतरेतरम् ॥ २५
ततः प्रववृते युद्धं घोररूपं भयावहम् ।
तावकानां परेषां च निघ्नतामितरेतरम् ॥ २६
नाराचा निशिताः संख्ये संपतन्ति स्म भारत ।

---

19 K2 om 19 (cf v l 18) — a) K1 3–5 Da Dn1 D1–3 5–7 T2 ताभ्याम्, T1 G नाभाव् (for नाभ्याम्) D2 6 वभौ, M1–3 5 आसीन् (for अभून्) Ś1 K4 D1 नृपश्रेष्ठ (D1 °ष्ट), Ko 1 8 Da1 S (except T2) नरश्रेष्ट, D8 नरव्याघ्र (for नरश्रेष्ठ°) — b) D1 m नृपताश्वो (hypermetric) B Da Dn D3–5 7 8 श्वेताश्व कृष्णसारथि — After $19^{ab}$, G2 reads $21^{cd}$ and $20^{ab}$, *repeating* them in their proper places — After 19, D1 reads $21^{cd}$

20 K2 om 20 (cf v l 18) T G M2 transp 20 and 21 — a) B Dn2 D4 7 8 G1 3 तथेतरे, Da1 Dn1 D5 अथेतरा, D1 तथापरे, D8 अथांतरे, Bom ed अथोत्तरे — b) Ś1 सहसैन्य, T1 G M4 सर्व सैन्यैर्, T2 सर्वसैन्य (for सहसैन्या) B2–4 Dn2 D4 7 8 महारथा, D2 T2 नराधिप (T2 °प), G1 3 जनाधिपा G2 (first time) सिताश्वो वानरध्वज (cf $19^{b}$) — c) Ś1 तु, D3 तत् (for त) T2 पूजया°, M1–3 व्यूहया° (for पूरया°) — d) K4 युद्ध° (for व्यूह°)

21 K2 om $21^{ab}$ (cf v l 18) T G M2 transp 20 and 21 — b) Da1 Dn1 D5 M1–3 5 महाबल (for °रथ) D1 विराटो वाहिनीपति°, G2 इरावाश्च महारथ — D1 reads $21^{cd}$ after 19 — c) Da Dn1 D5 समुद्धा (for संहृष्टा)

22 a) Ś1 Ko 1 B3 D4 D5 T2 G2 M1 3 5 एवमेतन — b) Ś1 K2 3 व्यूह (for व्यूह्य) D1 व्यूहित पार्श्वैर्नृपा — c) M1 योधा (for शूरा) — d) Ko–2 D4 Dn1 D युद्ध (for योद्धु°)

23 a) B3 T1 G1 भेरीशब्दैश्च K3 5 Da1 D2 5 6 तुमला, B2 D तुमुलैः, T G2 4 विपुला (for तुमुला) — b) K2 विमिश्रै D4 Dn1 D5 M2 मिश्रिता; D8 विमिश्र°, T1 विमिश्र Some MSS °नि:स्वनै — c) T2 G2 3 M क्ष्वेळिता (for क्ष्वेडिता) Ś1 क्ष्वेडिता स्फोटितोत्कुष्टो, Ko 2 °स्फोटितोत्कुष्टा°, K3 D5 8 °स्फोटितोत्कुष्टै°, B2 D2 °स्फोटितोत्कुष्टै, Da1 क्ष्वेडिता-स्फोडितोकुष्टौ, D1 क्ष्वेडितास्फोटितोप्यश्चै, T G2 3 (int lin) 4 M2 °स्फोटितोद्घुष्टै°, G1 क्ष्वेळितास्फोट-तो** Ca cites क्ष्वेडित, Cd आस्फोटित, and उत्कुष्ट — d) Ś1 सुभीमै, K3 सभीमा, K5 सुभीम°, B3 4 D8 नादिता, S तुमुला (for सुभीमा) Cc cites भीम° B1 सततो- (for सर्वतो) K3 5 B2–4 Dn2 D1–4 6–8 T1 G1 4 M4 दिश°, B1 Da Dn1 D5 [ऽ]भवत् (for दिशम्)

24 Ś1 om $24^{ab}$ — a) T1 G तत्र (for तत°) D3 शूरान् (for शूरा°) — K1 om (hapl) $24^{c}$–$25^{d}$, K5 M2 om (? hapl) $24^{cd}$ K2 *repeats* (with v l) $24^{cd}$ after $25^{ab}$ — c) Ko 2 नेत्रैरनेकै राजानो — d) Ś1 Da2 D6 अवैक्षत°, Ko 2 ह्यवै (Ko °वे) क्षत, K2 (second time) न वीक्षत, K3 D2 समाजग्मु, Dn2 अवेक्षत, D3 अवेक्ष्यंत, D6 आवैक्षत, S (M2 om) प्रेक्षाचक्रु (for अवैक्षन्त) K3 4 B1 2 4 Da Dn D2 4–8 S (M2 om) परस्पर, B3 नराधिपा°, D2 रणाजिरे (for प्रकोपिता)

25 K1 om 25 (cf v l 24) — a) B D (except D1–3) नामभिस् (for मनोभिस्) B2 3 तु (for ते) — b) K3 D2 3 पूर्व, B1–3 सर्वे, D3 पूर्वे, S युद्ध (for पूर्वं) G1 M यौधा° S प्रचक्रिरे (for परस्परम्) — After $25^{ab}$, K2 *repeats* $24^{cd}$ — cd) S पुनराहूय तेन्योन्य शरीरैरपि (M3 5 °रेव, M1 °रभि) चक्रिरे (G1 M2 4 चक्रतु)

26 a) Da1 D5 प्रवर्तते (for प्रववृते) — b) T2 क्रूर° (for घोर°) B D (except D2 3 6) M2 भयानक, T G M1 2–5 सुदारुण (for भयावहम्)

व्यात्ताननाः भयकरा उरगा इव संघशः ॥ २७
निष्पेतुर्विमलाः शक्त्यस्तैलधौताः सुतेजनाः ।
अम्बुदेभ्यो यथा राजन्भ्राजमानाः शतह्रदाः ॥ २८
गदाश्च विमलैः पट्टैः पिनद्धाः स्वर्णभूषिताः ।
पतन्त्यस्तत्र दृश्यन्ते गिरिशृङ्गोपमाः शुभाः ।
निस्त्रिंशाश्च व्यराजन्त विमलाम्बरसंनिभाः ॥ २९
आर्षभाणि च चर्माणि शतचन्द्राणि भारत ।
अशोभन्त रणे राजन्पतमानानि सर्वशः ॥ ३०

तेऽन्योन्यं समरे सेने युध्यमाने नराधिप ।
अशोभेतां यथा दैत्यदेवसेने समुद्यते ।
अभ्यद्रवन्त समरे तेऽन्योन्यं वै समन्ततः ॥ ३१
रथास्तु रथिभिस्तूर्णं प्रेषिताः परमाहवे ।
युगैर्युगानि संश्लिष्य युयुधुः पार्थिवर्षभाः ॥ ३२
दन्तिनां युध्यमानानां संघर्षात्पावकोऽभवत् ।
दन्तेषु भरतश्रेष्ठ सधूमः सर्वतोदिशम् ॥ ३३
प्रासैरभिहताः केचिद्गजयोधाः समन्ततः ।

C 6 3881
B 6 87 35
K 6 87 34

27 a) G2 8 M8 नाराच (for °चा) T1 G निह (G4 °हि)ता (for निशिता) T2 G1 8 M सखे, G2 सवे (for सत्ये) — c) Ś1 D3 T2 भयाकारा, D4 भयकारा; D8 भयकरम् — d) Ś1 D5 तुरगा, K2 उरगा, G8 उदरा (for उरगा) B D (except D1-3 6) सर्वश (for सघश)

28 K1 om. 28a–29b, D1 om 28ab — a) K2 5 Da Dn1 D7 5 6 निपेतुर् Ko शक्तास्, K2 शक्ता, K8 शक्त्या, K5 D2 शश्वत (for शक्त्यस्) — b) D2 तैलधूता K8 5 D2 6 S महाप्रभा, B Da Dn D4. 5 7 8 समतत, D8 सुनिर्मला (for सुतेजना) — c) K6 अबुजेभ्यो T G2 4 M1 (sup lin) महाराज (for यथा राजन्) — d) M1. 2 5 राज° (for भ्राज°)

29 K1 om 29ab (cf v 1 28) — a) K8 D8 विमलै, D6 विविधै, M1-8 5 विमला D1 तज्जै (for पट्टै) — b) Ś1 विनाद्धाश्च (sic), Ko 2 विमला ; K3 6 विनद्धा, K4 परीता (for पिनद्धा) Ś1 Ko स्वर्णभूषणा, S रुक्म(T2 M1-4 °ग्म)भूषिता (for स्वर्ण°) B D (except D1-3) हेमवद्भिर्विभूषिता — c) B8 पततन्त्र, S आपतत्य (T2 M1 °त) स (for पतन्त्यस्तत्र) — d) D1 रणे, M1 शिता (for शुभा) — e) K8 चैव दृश्यते, K5 D2 3 6 च व्यदृश्यत (K5 D2 °ते), Da1 D5 G2 3 च विराजत (G8 °तो), D1 चाप्यराजत, T2 M1 3-5 च विराजते (for च व्यराजन्त) — f) K8 D8 विमलावर°, K4 विमलायुध, B8 विमला सुर°, D1 विमलार्कसमप्रभा

30 a) K2 Da1 D5 7 च वर्माणि, K8 5 D2 6 विचित्राणि, D8 च मर्माणि, G1-3 च सर्वाणि (for च चर्माणि) — c) Ś1 Ko-2 महाराज (for रणे राजन्) — d) K8-5 B2-4 D2 6 T2 पात्य, Dn2 यत° (for पत°) K4 भारत, T2 सर्वन (for सर्वश) — After 30, D1 ins

335* मेघान्तरे यथा विद्युज्ज्वलमानेव दृश्यते ।

31 D5 reads 31ab twice consecutively — a) Ś1 Ko-2 4 अन्योन्य (for तेऽन्योन्य) T1 G2 4 सैन्ये (for सेने) — b) K1 (both times) युधिमाने, D8 युद्ध°, T1 वर्त°, G2-4 वध्य° (for युध्य°) G2 नराधिपे D5 युध्यमानानि सर्वश, T2 नराधिप महाबले — K1 *repeats* 31cdeb — c) D1 अशोभत, D6 T2 अशोभता, M1 3 5 अशोभत K1 (second time) om. यथा K8-5 B Da Dn D2 4-8 देव, S सेने (T1 G4 सैन्ये) (for दैत्य) — d) K8-5 B2 4 Da Dn1 D6 7 8 दैत्यसेने, B1 8 Dn2 D2 4 6 दैत्यसैन्ये (for देवसेने) S दे(T1 G3 4 दै)वदैत्यसमुद्यते (T2 M4 °मे) — ef) Ś1 Ko 1 (both times) 2 अभ्यवर्त(Ś1 °र्त)त, T2 नाभ्यद्रवत, G2 अभिदुद्राव (for अभ्यद्रवन्त) M1-3 तेन्योन्य समरे (by transp) B8 तदान्योन्य, D4 ते अन्योन्य (for तेऽन्योन्य वै) Da Dn D6 8 च (for वै)

32 a) B8 रथाश्च (for रथास्तु) — b) D6 प्रेषिता — c) K5 Da1 Dn2 D2 4 6-8 युगे (for युगैर्) Ś1 D8 सश्लेष्य, K5 सश्लिष्टा — d) G8 [आ]युयुत्सु (for युयुधु) K5 भरतर्षभा, D1 पार्थिवोत्तमा

33 a) D8 युद्ध° (for युध्य°) — b) K3 4 B2-4 D8 सहर्षात्, M6 सकर्षात्, Cc सघर्षात् (as in text) — c) S दतेभ्योपि (T2 G2 M4 °भ्यो हि) नरश्रेष्ठ — d) K2 सभूम, Da1 साधम, G4 सुधूम L2 4 Da Dn D6 7 8 G2 सर्वतो दिश (for तोदिशम्)

34 a) K2 प्राशेर् Ko-2 Da1 विनिहता (Ko °त), K8 अभिहता, D1 विमथिता, M4 अपि हता — b) T1 G4 नादिनस्तत्र सघश, T2 G1-3 M तत्र यौ(T2 G2 यो)धा सहस्रश — c) K8 यतमाना,

पतमानाः स्म दृश्यन्ते गिरिशृङ्गान्नगा इव ॥ ३४
पादाताश्चाप्यदृश्यन्त निघ्नन्तो हि परस्परम् ।
चित्ररूपधराः शूरा नखरप्रासयोधिनः ॥ ३५
अन्योन्यं ते समासाद्य कुरुपाण्डवसैनिकाः ।
शस्त्रैर्नानाविधैर्घोरै रणे निन्युर्यमक्षयम् ॥ ३६
ततः शांतनवो भीष्मो रथघोषेण नादयन् ।
अभ्यागमद्रणे पाण्डून्धनुःशब्देन मोहयन् ॥ ३७
पाण्डवानां रथाश्चापि नदन्तो भैरवस्वनम् ।
अभ्यद्रवन्त संयत्ता धृष्टद्युम्नपुरोगमाः ॥ ३८
ततः प्रववृते युद्धं तव तेषां च भारत ।
नराश्वरथनागानां व्यतिपक्तं परस्परम् ॥ ३९

इति श्रीमहाभारते भीष्मपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

# ८४

संजय उवाच ।
भीष्मं तु समरे क्रुद्धं प्रतपन्तं समन्ततः ।
न शेकुः पाण्डवा द्रष्टुं तपन्तमिव भास्करम् ॥ १
ततः सर्वाणि सैन्यानि धर्मपुत्रस्य शासनात् ।

---

D3 T2 पातमाना॰ D2 व्य , D6 प्र , M1-3 5 च (for स्म) — d) B1 गिरिश्रृगानुगा, D1 °श्रृगगता, G3 °श्रृगा नगा Co cites नगा (as in text).

35 a) K0 2 D2 3 6 M1 3 5 पदाताश्च K3 च प्रदृश्यत, B2 D6 चापि (D6 °प्य) दृश्यंते, D1 चैव दृश्यते, D2 3 T2 च व्यदृश्यत T1 G स्म व्य(G2 दृ)दृश्यत — b) K0 2 D3 3 निघ्नतो (for निघ्नन्तो) K3 5 B1 2 Da2 Dn1 D2 6 [s]थ, B3 [s]पि (for हि) Da1 D5 निघ्नंतास्य, D1 S विनिघ्नत॰ (for निघ्नन्तो हि) — c) T1 G योः(G1-3 यौ)धा॰ (for शूरा) — d) D2 S परिघ (for नखर॰) Co d cite नखर G3 °यौधिन॰ (for यो°)

36 c) K3 5 D2 अस्त्रैर्, Da1 शास्त्रैर्, Dn2 D4 7 8 शरैर् (for शस्त्रैर्) Ś1 K0-2 4 D1 नानाविधाकारै

37 a) B1 D4 7 तत्र (for तत) — c) D1 S अभ्यद्रवद् (for अभ्यागमद्) K3 5 D2 6 T2 G1 3 M पार्थान्, T1 G2 4 पार्थ (for पाण्डून्) — d) K2 धन°, D6 धनु° (for धनु°) K3 5 D2 नादयन्, B2 G3 पूर°, D1 चासकृत् (for मोह°)

38 a) S त पाडवा (T1 °वो) महाराज — b) K2 नदतौ K3-5 Dn1 D2 3 भैरव स्वनं (K3 5 D2 °र), B Da Dn2 D4-8 भैरव रवं (Da1 °ण), D1 S (G2 sup lin) भैरवाश्नवान् (G2 orig °वाभ्रुपान्) (for भरवस्वनम्) — c) Ś1 K5 अभ्याद्रवत, B2 3 अभ्य धावत, D6 °द्रवत K4 B1 Da Dn1 D5 सहृष्टा, S संग्रामे (for सयत्ता)

39 a) Dn1 D5 प्रवर्तते (for प्रववृते) — c) K3 नराश्वनर, B3 रथाश्वरथ S नराश्वरथ( T2 G2 4 रथाश्वनर )मातग — d) Ś1 K3 B3 D2 3 व्यतिपक्त( Ś1 °पिक्त॰, D3 °पक्ता )परस्पर, K1 2 व्य( K1 वि )तिशक्तं पर°; D1 व्यासक्तमतितेजसां, T प्रतियान सुदर्शन, G ॰प्रतिवात सुदर्शन (G1 inf lin सुदारुण), M ॰प्रतिपात॰ (M4 °यात )सुदर्शनं

Colophon om. in D3 — *Sub-parvan* Omitting sub-parvan name, Ś1 K0-2 D2 mention only अष्टमे युद्धदिवसे, K4 B3 Da Dn1 D5 T2 M1 2 अष्टमेह्निके (to it B3 adds संग्रामे), D6 अष्टमदिवसयुद्धे; T1 G4 अष्टमेहनि, M3-5 अष्टमेह्निके — *Adhy name* K4 व्यूहरचना, T G2 4 M1-3 5 व्यूहकरण — *Adhy no* (figures, words or both) Da2 (*sec m*) 45, Dn2 T2 M3 4 84, D6 T1 G 82, M1 2 83 (as in text), M5 85 — *Śloka no* Dn D6 40, D5 41

## 84

1 a) K. B4 T2 भीष्मस्तु — b) K0-3 Da1 Dn1 D1 G1 प्रपतत, D3 तपत च, T1 G4 सपतंतं, M1 2

अभ्यद्रवन्त गाङ्गेयं मर्दयन्तं शितैः शरैः ॥ २
स तु भीष्मो रणश्लाघी सोमकान्सहसृञ्जयान् ।
पाञ्चालांश्च महेष्वासान्पातयामास सायकैः ॥ ३
ते वध्यमाना भीष्मेण पाञ्चालाः सोमकैः सह ।
भीष्ममेवाभ्ययुस्तूर्णं त्यक्त्वा मृत्युकृतं भयम् ॥ ४
स तेषां रथिनां वीरो भीष्मः शांतनवो युधि ।
चिच्छेद सहसा राजन्बाहूनथ शिरांसि च ॥ ५
विरथान्रथिनश्चक्रे पिता देवव्रतस्तव ।
पतितान्युत्तमाङ्गानि हयेभ्यो हयसादिनाम् ॥ ६
निर्मनुष्यांश्च मातङ्गाञ्शयानान्पर्वतोपमान् ।
अपश्याम महाराज भीष्मास्त्रेण प्रमोहितान् ॥ ७
न तत्रासीत्पुमान्कश्चित्पाण्डवानां विशां पते ।
अन्यत्र रथिनां श्रेष्ठाद्भीमसेनान्महाबलात् ॥ ८
स हि भीष्मं समासाद्य ताडयामास संयुगे ।
ततो निष्टानको घोरो भीष्मभीमसमागमे ॥ ९
बभूव सर्वसैन्यानां घोररूपो भयानकः ।
तथैव पाण्डवा हृष्टाः सिंहनादमथानदन् ॥ १०
ततो दुर्योधनो राजा सोदर्यैः परिवारितः ।
भीष्मं जुगोप समरे वर्तमाने जनक्षये ॥ ११
भीमस्तु सारथिं हत्वा भीष्मस्य रथिनां वरः । C 6 3635 B 6 83 12 V 6 83 12

---

आपतत (for प्रतपन्त) — c) M2 पाडवान् K1 दुष्ट, D1 सोढु (for द्रष्टु) — d) K. भारत (for भास्करम्) M1-3 5 तपत भास्कर यथा

2 b) K3 5 D2 धर्मराजस्य (for °पुत्रस्य) — c) Ś1 अभ्याद्रवत, Da Dn D4 5 7 8 अभ्यधावत, D6 M4 °द्रवत K5 वेगेन, Dn1 D1 T2 G1 M गागेय, D5 गागेये — d) K1-3 D1 S मर्दयत (T1 G4 °ति), D7 अर्दयन्त (for मर्द°) K5 शतै (for शितै)

3 a) K0 रणश्लाघ्य, K1 रसाश्लाघी, K3 Da1 D2 रणे श्लाघी, D1 बलश्लाघी, G2 रथश्लाघी — b) D1 T1 G सृजयै सह, T2 M4 सह सृजयै (for सहसृञ्जयान्) — T1 om (hapl) 3c-4b — c) K4 B पचालाश्च D6 महेष्वास° — d) K4 B1 शायकै°

4 T1 om 4ab (cf v l 3) — b) K1 B1 पचाला T2 M सह पाडवै, G पाडवै सह — c) D1 [अ]न्ववर्तत, S ययुस्तूर्ण (M1-3 5 ययु सर्वे) (for [अ]भ्ययुस्तूर्ण) — d) D1 मृत्युभय तत, T2 °भय कृत (for °कृत भयम्)

5 a) S रथ(T1 G4 °थि)सिंहाना (T2 °मुख्याना) (for रथिना वीरो) — b) B4 Dn2 D4 7 बली (for युधि) — c) K4 B1 2 4 Da2 Dn2 D3-5 7 8 S समरे (for सहसा) — d) K5 बहूनपि (for बाहूनथ) Ś1 K1 3 D2 अपि (for अथ) K0 2 बहून्यपि शिरास्यपि — After 5, K2 reads 7ab

6 a) B2 आत्मनश्च (for रथिनश्च) G2 विरथ रथिन चक्रे — c) D6 पातितानि

7 K2 reads 7ab after 5 — a) K0 2 T2 निम नुष्याश्च — b) T2 छेदयन् (for शयानान्) D2 पर्व तोत्त(also °प)मान् B Da Dn D4-8 निर्वृक्षानिव (Dn1 damaged) पर्वतान् — c) T G रणे राजन् (for महा राज) — d) S1 D6 विमोहिता (D6 °तान्), Da Dn1 D1 3 5 निपातितान्, D2 निपोथितान्, S (except G3) प्रमाथितान् (for प्रमोहितान्)

8 a) D1 तथा (for तत्र) — c) D3 अन्येन (for अन्यत्र) Da1 damaged — d) Ś1 महारथात् (for °बलात्)

9 a) T1 G तु (for हि) — b) Da1 damaged B2-4 Da2 Dn D1-3 वारयामास S छादयामास सायकै — c) S (except T2) निष्टानको, Cd निष्टा° (as in text) B3 ततो निष्टानके घोरे — d) K4 T2 G1-3 M भीष्म(G1 3 °म, G2 °ष्मो)भीमपराक्रमे, T1 G4 भीष्मो भीमपराक्रम

10 b) S1 Da1 घोररूप, T1 G1 2 4 भीमरूपो, G3 भीमसेनो (for घोररूपो) K2 भयावह, Cd भया नक (as in text) D3 घोररूपे भयानके, T2 घोर रूपा भयानका — c) B3 पाडवा दृष्टा, D1 पाडवो हृष्ट, T2 पाडवान्दृष्ट्वा (for पाण्डवा हृष्टा) — d) Ś1 T2 °नादान् (for °नादम्) Ś1 अथानदात, D1 अगो नदन्, G3 M2 अनादयन् (for अथानदन्)

11 b) K2 Da1 सौदर्यै, D1 S सोदर्रै T. परि वारितै — K0 om (hapl) 11c-12d — c) Ś1 जगाम, K2 D युगोप (for जुगोप) — d) B Da Dn D1-3 महाभये (Dn D1 2 °क्षये), अथाद्दे (T1 G4 °नके) (for जनक्षये)

C. 6 3896 B. 6 88 12 K 6. 88 12

विद्रुताश्वे रथे तस्मिन्द्रवमाणे समन्ततः ।
सुनाभस्य शरेणाशु शिरश्चिच्छेद चारिहा ॥ १२
क्षुरप्रेण सुतीक्ष्णेन स हतो न्यपतद्भुवि ।
हते तस्मिन्महाराज तव पुत्रे महारथे ।
नामृष्यन्त रणे शूराः सोदर्याः सप्त संयुगे ॥ १३
आदित्यकेतुर्बह्वाशी कुण्डधारो महोदरः ।
अपराजितः पण्डितको विशालाक्षः सुदुर्जयः ॥ १४
पाण्डवं चित्रसंनाहा विचित्रकवचध्वजाः ।
अभ्यद्रवन्त संग्रामे योद्धुकामारिमर्दनाः ॥ १५
महोदरस्तु समरे भीमं विव्याध पत्रिभिः ।
नवभिर्वज्रसंकाशैर्नमुचिं वृत्रहा यथा ॥ १६
आदित्यकेतुः सप्तत्या बह्वाशी चापि पञ्चभिः ।
नवत्या कुण्डधारस्तु विशालाक्षश्च सप्तभिः ॥ १७
अपराजितो महाराज पराजिष्णुर्महारथः ।
शरैर्बहुभिरानर्च्छद्भीमसेनं महाबलम् ॥ १८
रणे पण्डितकश्चैनं त्रिभिर्बाणैः समर्दयत् ।
स तन्न ममृषे भीमः शत्रुभिर्वधमाहवे ॥ १९
धनुः प्रपीड्य वामेन करेणामित्रकर्शनः ।

---

12 K0 om 12[abcd] (cf v l 11) M2 om (hapl) 12[a] — [a]) T2 रथिना (for सारथिं) — [b]) K5 भीष्म स्व (for भीष्मस्य) K1 वरा°, D5 वर (for वर) — [c]) K3 4 B Da Dn D1 3 5 7 8 प्रद्रुताश्वे (K4 °श्व), K5 विगताश्वे, D2 विचित्राश्वे, D4 T1 G विप्रद्रुते (D4 °त), D6 प्रहृताश्वे, T2 M प्रद्रुते च (M2 तु), Cv प्रहृताश्व (for विद्रुताश्वे) K5 B3 Da Dn1 D5 तिष्ठन्, S तस्य (for तस्मिन्) — [d]) Ś1 वर्तमाने, K4 M3 द्रवमाणा, Dn2 D4 7 8 प्लवमाने, M1 द्रवमाण°, Cc v द्रवमाणे (as in text) — [e]) K5 D2 उन्नाभस्य (for सुना°) B1 4 Da Dn D4–7 क्षुरेणाशु, B2 3 क्षुरप्रेण, D1 शरेणाथ; T2 शरेणाशी (sic), M2 रणेनाशु (for शरेणाशु) T1 G4 ततो भीम सुनाटस्य — [f]) T2 शिर (for शिरश्) K3–5 B D S भारत (M2 मारिष) (for चारिहा)

13 [a]) K2 सुर° (for क्षुर°) Ś1 B D (except D1–3) पूर्णायतविसृष्टेन — [c]) G3 महाराजे (for °राज) Ś1 K0–2 4 तस्मिन्हते महेष्वासे — [d]) S पुत्रे तव (by transp) T2 महारथ — [e]) K2 Da1 D7 नामृश्यत D8 महेष्वासा° (for रणे शूरा°) — [f]) K2 Da1 D5 सौदर्या, K3 5 B Dn2 D2–4 6 7 S सोदरा (for सोदर्या) K2 4 मारिष, D1 भारत (for संयुगे)

14 [a]) M4 (sup lin) बलवान् (for बह्वाशी) — [b]) K0 2 कुडाधारो, D4 दढधारो, D6 कुढधोरो K1 महोधरा, Da1 महादर° — [c]) Hypermetric! D4 अपराजित् (for °जित) D1 पिंडितको, T2 पिंड नको (for पण्डितको) — [d]) K3 B D (except D2) S च दुर्जय° (T2 °न°) (for सुदुर्जय°)

15 [a]) D6 स्वाटवं, T1 M4 पाडवाश्, G4 पांडवाश् K1 2 चित्रसेनाहा (K2 °नाह-), B1 Da Dn1 D2 5 चित्र( B1 छिद्र )सनाह — [b]) B Dn2 D1 4 7 8 वि चित्रकवचायुधा° — [c]) K0–2 4 5 B2–4 Da Dn1 D5 5 7 8 T1 G4 M4 अभ्यवर्तंत, G2 °वर्पंत (for °द्रवन्त) Ś1 समरे, K1 सगासे (for संग्रामे) — [d]) K0–2 वृकोदर, B4 Dn2 D4 7 8 [अ]रिमर्दन, D1 मनस्विन, D8 रिपुंदमा (for [अ]रिमर्दना) K4 युद्धा कामारिमर्दना, S योद्धु युद्धाभिनंदिन°

16 [a]) B4 च (for तु) — K2 om (hapl) 16[c]–17[b] — [d]) Ś1 तथा (for यथा) D1 स्वर्णपुखैर जिह्मगै

17 K2 om 17[ab] (cf v l 16) — [b]) D8 बह्वाशी Da Dn1 D5 S चैव (for चापि) Ś1 K0 1 सप्तभि° (for पञ्चभि) — [c]) B3 दढ° (for कुण्ड°) K3 B4 D1–3 6 च (for तु) — [d]) D5 विशालाख्यश्, T1 G4 विमलाक्षश् (for विशालाक्षश्) S (except T1 G4) तु (for च) D3 T1 G4 पचभि° (for सप्तभि°)

18 [a]) Hypermetric! K3 5 D2 महाबाहु° (for °राज) — [b]) K5 D2 (marg sec m) शरैर्जि( K5 °र्वि )ष्णुर्, D1 तदाजिह्मैर्, M1–4 पुत्रस्तव, Cc परा जिष्णुर् (as in text) K3 5 D1–3 6 महारथ — [c]) T1 आनर्चद् — [d]) Ś1 भीमसेनो Ś1 K5 महारथ, K3 °बळ, D5 °बलै

19 [a]) B3 रण (for रणे) Da1 D2 (before corr) पाढितकश्, D1 2 (by corr) पिंडितकश्, T2 पिंढनकश् D1 6 T1 G चैव (for चैन) K0 रणे पंडित कोविद° — [b]) K3 D1 S समर्पं°, K4 5 B Da Dn D2–8 समार्पं° (for समर्दं°) — [c]) Da1 D2 5 T2 त न (for तन्न) Dn2 D1. 4 वीर° (for भीम) — [d])

शिरश्चिच्छेद समरे शरेण नतपर्वणा ॥ २०
अपराजितस्य सुनसं तव पुत्रस्य संयुगे ।
पराजितस्य भीमेन निपपात शिरो महीम् ॥ २१
अथापरेण भल्लेन कुण्डधारं महारथम् ।
प्राहिणोन्मृत्युलोकाय सर्वलोकस्य पश्यतः ॥ २२
ततः पुनरमेयात्मा प्रसंधाय शिलीमुखम् ।
प्रेषयामास समरे पण्डितं प्रति भारत ॥ २३
स शरः पण्डितं हत्वा विवेश धरणीतलम् ।
यथा नरं निहत्याशु भुजगः कालचोदितः ॥ २४
विशालाक्षशिरश्छित्त्वा पातयामास भूतले ।
त्रिभिः शरैरदीनात्मा स्मरन्क्लेशं पुरातनम् ॥ २५
महोदरं महेष्वासं नाराचेन स्तनान्तरे ।
विव्याध समरे राजन्स हतो न्यपतद्भुवि ॥ २६
आदित्यकेतोः केतुं च छित्त्वा बाणेन संयुगे ।
भल्लेन भृशतीक्ष्णेन शिरश्चिच्छेद चारिहा ॥ २७
बह्वाशिनं ततो भीमः शरेण नतपर्वणा ।
प्रेषयामास संक्रुद्धो यमस्य सदनं प्रति ॥ २८
प्रदुद्रुवुस्ततस्तेऽन्ये पुत्रास्तव विशां पते ।

C 6 3916
B 6 88 30
K 6 88 30

---

Ś1 युधम्, D1 विद्धम्, Co वधम् (as in text) B1 आस्मन॰ (for आहवे) S शत्रोर्विजयलक्षण

20 a) B3 सपीड्य K4 समरे (for वामेन) B1-3 G4 (before corr) धनु॰ प्रपीड्यमानेन — b) Ś1 Ko-2 B2-4 D8 °कर्पण, Da °कर्पिण, Dn1 D5 °कर्पिणा, D2 °कर्शिन॰ (for °कर्शन) — After 20ab, S ins 336* अपराजितस्य राजेन्द्र भीमसेनो महाबल॰ । — d) K4 B Dn D2 4 6-8 [आ]नत°, Da D5 [अ]मित° (for [आ]नत°)

21 ab) Hypermetric! B3 शिरसा, D1 राजेंद्र (for सुनस) S तच्छिरस्तव पुत्रस्य सयुगे ह्यपराजित (T2 °प्यपराजित) — Ko 1 om 21cd — c) B Da (Da1 damaged) D4 5 T1 G M1 2 4 अपराजितस्य (hypermetric) (for पराजितस्य) D1 सकुंडलशिरस्त्राण — d) K3 5 D2 सपपात Ś1 शिरो महत्, K5 शिरो महान् D1 शिरस्तदपतद्भुवि, S कृत्त गामपत (T2 M4 °गम) च्छिर

22 a) B2 8 D3 तथा° (for अथा°) — b) K2 कुंडाधार, B3 दढधार B4 S °बल (for °रथम्) — d) N (except D8) °सैन्यस्य (for °लोकस्य)

23 a) K4 damaged — b) K3 5 D2 स(K5 वि)धाय च, Dn2 सप्रधाय, D1 पिंडिताय (for प्रसधाय) K8 D8 शिलीमुखान् — Ś1 om (? hapl) 23c-25d — c) D1 सक्रुद्ध॰ (for समरे) — d) D1 2 (by corr) पिंडित (for पण्डित) S पढितस्य (T2 पिंडनस्य) रथ प्रति

24 Ś1 om 24 (cf v l 23) — a) D1 2 (by corr) पिंडित Da Dn1 D1 5 भित्त्वा (for हत्वा) M1-3 5 शर॰ पढितक हत्वा — b) K8 D8 धरणीतळ, K5 धरणीतले — K8 D2 om 24cd — c) Da1 D5 तथा (for यथा) — d) D1 T1 G4 M4 भुजग, D5 मूलग॰ (for भुजग॰) K4 °टेशिता, D1 6 °नोदित°, G3 °चोदित

25 D8 writes on marg (with v l), in Telugu characters, 191* of Ādi Ś1 om 25 (cf v l 23) — a) D8 विशालाक्षं, G2 विमलाक्ष (for विशालाक्ष) — b) S शरैस्त्रिभिर् (by transp) Da Dn1 D1 5 T1 G अमेयात्मा (for अदीनात्मा) — d) S स्मरन्क्लेशान्पुरातनान्

26 a) Da1 महारोग, D5 महोरग, T2 °दर (for °दर) T G M4 महेष्वासो — d) D2 सहसा (for स हतो)

27 a) B2-4 Dn2 D4, 7 8 छत्र (for केतु) K8 5 D2 तु, D1 3 स (for च) — b) Ko-2 T2 भित्त्वा (for छित्त्वा) — c) K5 D2 शत° (for भृश) — d) Ś1 चारिहन्, K3 5 B D भारत (D8 मारिप), T1 G M4 सयुगे (for चारिहा)

28 a) K8 D8 बह्वासिन, D2 6 °शीन, T2 शिर, G2 °शन T2 तथा (for ततो) Ś1 Ko-2 हत्वा, S वीर॰ (for भीम॰) — b) T1 G शितेन (for शरेण) K8 4 B D (except D1) शरेणानत° — c) S समरे (for सक्रुद्धो)

29 a) K8 तु तत्रान्ये, K5 D2 T G तत सैन्ये, B3 तत सर्वे, Da Dn1 D1 5 ततस्त्वन्ये (for ततस्तेऽन्ये) — b) Ś1 Ko-2 4 तव पुत्रा महारथा — c) B2 युध्यमाना, D3. 6 हन्य°, G1 मान्य° Ko 1 3 हि तत्सैन्य, D1 तत सत्य, D8 (orig) हि तच्छ्रुत्वा, D8 (sup lin) 6 हि तत्स्मृत्वा, D5 हित सत्य (sic),

C 6 3916
B 6 88 30
K 6 88 30

मन्यमाना हि तत्सत्यं सभायां तस्य भाषितम् ॥ २९
ततो दुर्योधनो राजा भ्रातृव्यसनकर्शितः ।
अब्रवीत्तावकान्योधान्भीमोऽयं युधि वध्यताम् ॥ ३०
एवमेते महेष्वासाः पुत्रास्तव विशां पते ।
भ्रातॄन्संदृश्य निहतान्प्रासरंस्ते हि तद्वचः ॥ ३१
यदुक्तवान्महाप्राज्ञः क्षत्ता हितमनामयम् ।
तदिदं समनुप्राप्तं वचनं दिव्यदर्शिनः ॥ ३२
लोभमोहसमाविष्टः पुत्रप्रीत्या जनाधिप ।
न बुध्यसे पुरा यत्तत्तथ्यमुक्तं वचो महत् ॥ ३३
तथैव हि वधार्थाय पुत्राणां पाण्डवो बली ।
नूनं जातो महाबाहुर्यथा हन्ति स्म कौरवान् ॥ ३४
ततो दुर्योधनो राजा भीष्ममासाद्य मारिष ।
दुःखेन महताविष्टो विललापातिकर्शितः ॥ ३५
निहता भ्रातरः शूरा भीमसेनेन मे युधि ।
यतमानास्तथान्येऽपि हन्यन्ते सर्वसैनिकाः ॥ ३६
भवांश्च मध्यस्थतया नित्यमस्मानुपेक्षते ।
सोऽहं कापथमारूढः पश्य दैवमिदं मम ॥ ३७
एतच्छ्रुत्वा वचः क्रूरं पिता देवव्रतस्तव ।

---

$T_2$ हित सत्य — [d]) $T_1$ क्षत्र, $G_4$ क्षत्तृ (for तस्य) $D_1$ समग्र सत्यभाषण

30 T G read 30 after 34 — [b]) $M_4$ भ्रातुर् (for भ्रातृ॰) $Ś_1$ $K_{0-4}$ $B_{2-4}$ $D_{7\ 8}$ ॰कर्षित॰ (for ॰कर्शित॰) — [c]) $B_{2-4}$ Da $Dn_1$ $D_{3-5\ 7\ 8}$ $T_1$ G सर्वान्, M यौधान् — [d]) $K_{0-2}$ S व(K1 यु)ध्यता मिति (for युधि वध्यताम्)

31 [a]) $K_{3\ 5}$ $D_2$ एवमेतान्महेष्वासान् — [b]) $D_1$ तव पुत्रा (by transp), $D_3$ पुत्रांस्तव, $T_2$ पुत्र तव॰ — After 31[ab], $D_1$ ins (cf 36[ab] below)

337* निहता भीमसेनेन महावीर्येण संयुगे ।

— [c]) $K_{0-2}$ Da $Dn_1$ $D_5$ T $G_{3\ 4}$ सदिश्य, $K_5$ सद्दिश्य, $D_1$ सप्रेक्ष्य $K_{0\ 2}$ सहितान्; $K_5$ निहितान्, $D_2$ च हतान्, $D_6$ समरे (for निहतान्) — [d]) $Ś_1$ प्राशरस्ते; $K_{1\ 2}$ प्रास्मरते, $K_{3\ 5}$ $D_{2\ 3}$ $T_1$ G प्रास्मरत, $B_1$ सस्मरस्तत्, $B_2$ स्मरस्तव, Da $Dn_1$ $D_5$ स स्मरस्ते, $Dn_2$ $D_4$ अस्मरत, $D_1$ सस्मार स, $D_6$ प्रास्मरत, $D_7$ न स्मरत (for प्रास्मरस्ते) $K_5$ $B_{3\ 4}$ $D_{1\ 2\ 4\ 6-8}$ M हित वच॰ (for हि तद्वच॰) $K_4$ स्मरत हित मव्रच॰ (sic), $T_2$ प्राहुरतर्हितं वच॰

32 [a]) $M_1$ (*sup lin*) तद् (for यद्) $K_1$ महा प्राज्ञा, $B_2$ नरव्याघ्र, $D_7$ महाप्रज्ञः, $T_2$ ॰राज, $G_2$ ॰प्राज्ञ — [b]) $K_1$ हितमना॰ स यत्, $K_4$ ॰मनोमय (for ॰मनामयम्) — [c]) $M_4$ तमिद् (for तदिद) — [d]) $Ś_1$ $K_{0-2\ 4}$ $D_3$ देव($Ś_1$ धेव, $K_4$ दैव)दर्शिन॰, B Da Dn $D_{4\ 5\ 7\ 8}$ सत्यवादिन॰, $D_1$ S दीर्घदर्शिन॰ (for दिव्य॰)

33 [a]) $K_{1\ 3}$ $D_5$ ॰समाविष्ट॰ — [b]) $T_2$ $G_3$ पुत्र प्रीत्या $D_1$ नराधिप, $G_{1-3}$ $M_2$ जनाधिप — [c]) $G_{1-3}$ न बुध्यते $K_{0\ 2}$ $B_{2\ 3}$ पुरा यत्तु, $K_3$ $D_6$ परा यत्तस्, $D_1$ हित मोहात् (for पुरा यत्तत्) — [d]) $K_3$ तथा मुक्त, $K_4$ $B_{1\ 4}$ $Da_2$ $Dn_1$ पथ्यमुक्त, $B_2$ तस्य युक्त, $B_3$ पथ्ययुक्त (for तथ्यमुक्त) B Da Dn $D_{4-8}$ S हित वच, $D_1$ महात्मन (for वचो महत्)

34 [a]) $K_{1\ 3\ 5}$ $D_{1-3\ 7\ 8}$ $M_4$ तवैव (for तथैव) $Dn_2$ $D_{4\ 6}$ तव चैव (for तथैव हि) B Da $Dn_1$ $D_{5\ 7\ 8}$ च (for हि) — [c]) $T_1$ $G_{2\ 4}$ कुंत्यां (for नूनं) $D_1$ ॰बाहो, T G ॰वीर्यो (for ॰बाहुर्) — [d]) $K_3$ च, $Dn_2$ $D_7$ [इ]ह, $D_1$ स, $D_4$ [इ]व, $D_3$ ह (for स्म) — After 34, T G read 30

35 [b]) $G_2$ भीमम् (for भीष्मम्) $K_5$ $D_2$ भारत; $D_1$ कौरव, Bom ed संयुगे (for मारिष) — [c]) $B_{1-3}$ Da $Dn_1$ $D_5$ S शोकेन (for दुःखेन) — [d]) $Ś_1$ $K_{0\ 1,\ 4}$ [अ]तिकर्षित; $K_3$ [अ]तिदुषित, $B_1$ $D_{1\ 3}$ S सुदुःखित, $B_{2-4}$ Da Dn $D_{2\ 4-8}$ [अ]तिदुःखित॰ (for [अ]तिकर्शित॰)

36 [c]) $B_3$ पतमानास्, $G_3$ यतमानास् $D_1$ च ते (for तथा) $T_1$ $G_4$ [अ]थान्यैर्, $G_{1-3}$ [अ]थापि (for [अ]न्येऽपि) — [d]) $B_3$ $Da_1$ हन्यते, $D_1$ दह्यते $K_{0-2}$ S मम (for सर्व॰)

37 [a]) $D_{1\ 3}$ हि (for च) $K_0$ मध्यस्थितया, Cc मध्यस्थ॰ (as in text) $Dn_2$ $D_{4\ 7\ 8}$ भवान्मध्यस्थित-तया — [b]) $K_5$ Da $Dn_1$ $D_5$ $M_1$ (*inf. lin*) $_{2\ 5}$ उपेक्ष($Da_1$ ॰क्ष्य)से, $D_1$ ॰क्ष्यते — [c]) $K_3$ साह, $T_2$ सोय (for सोऽह) $D_{1-3}$ कुपथम्, Cc कापथम् (as in text) — [d]) $Da_1$ $D_{6\ 7}$ पश्य देवम्, $M_3$ (*inf lin*) $_5$ पश्चाद्दैवम्

दुर्योधनमिदं वाक्यमब्रवीत्साश्रुलोचनम् ॥ ३८
उक्तमेतन्मया पूर्वं द्रोणेन विदुरेण च ।
गान्धार्या च यशस्विन्या तच्चं तात न बुद्धवान् ॥ ३९
समयश्च मया पूर्वं कृतो वः शत्रुकर्शन ।
नाहं युधि विमोक्तव्यो नाप्याचार्यः कथंचन ॥ ४०
यं यं हि धार्तराष्ट्राणां भीमो द्रक्ष्यति संयुगे ।
हनिष्यति रणे तं तं सत्यमेतद्ब्रवीमि ते ॥ ४१
स त्वं राजन्स्थिरो भूत्वा दृढां कृत्वा रणे मतिम् ।
योधयस्व रणे पार्थान्स्वर्गं कृत्वा परायणम् ॥ ४२
न शक्याः पाण्डवा जेतुं सेन्द्रैरपि सुरासुरैः ।
तस्माद्युद्धे मतिं कृत्वा स्थिरां युध्यस्व भारत ॥ ४३

इति श्रीमहाभारते भीष्मपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥

# ८५

धृतराष्ट्र उवाच ।
दृष्ट्वा मम हतान्पुत्रान्बहूनेकेन संजय ।
भीष्मो द्रोणः कृपश्चैव किमकुर्वत संयुगे ॥ १
अहन्यहनि मे पुत्राः क्षयं गच्छन्ति संजय ।

C 6 3932
B 6 89 2
K 6 89 2

38 Before 38, K$_{0-2}$ $_4$ D$_{1.6}$ ins संजय उवाच — [a]) Ś$_1$ K$_{0-2}$ D$_1$ तत (for वच ) Ś$_1$ K$_{0-2}$ $_4$ D$_1$ रुद्व (for ब्रू) — [c]) K$_0$ सुयोधनम् ( for दुर्यो° ). — [d]) K$_{0-2}$ मात्तुलोचन, K$_3$ Dn$_1$ D$_1$ $_4$ साश्रुलोचन S अश्रुपूर्णक्षणो( T$_2$ °पूर्णमुखो )ब्रवीत

39 Before 39, D$_6$ ins भीष्म उवाच — [a]) K$_3$ $_5$ D$_2$ उक्तोस्मि तत् ( D$_2$ यत् ), D$_1$ उक्तमेव, G$_3$ उक्तमेत — [c]) D$_1$ धृतराष्ट्रेण, D$_2$ च यथा शश्वत् ( for च यशस्विन्या ) — [d]) D$_1$ तत्ते तात न रोचते, D$_2$ तात त्व नावबुध्यसे

40 [ab]) G$_3$ तु ( for च ) M$_{1}$ $_2$ transp मया and कृत K$_4$ D$_6$ M$_4$ य°, D$_2$ $_3$ वं, T G [ऽ]य ( for व ) Ś$_1$ K$_{0-2}$ $_4$ शत्रुकर्षण ( K$_4$ °णे ), B Da Dn D$_{4-8}$ °सूदन, T$_2$ शक्रकर्शन Cv cites 40[a] as in text — [c]) K$_{0-2}$ B$_3$ D$_3$ विमुक्तव्यो, D$_2$ $_3$ नियोक्तव्यो D$_6$ न चाह युधि योक्तव्यो — [d]) D$_1$ न वाचार्य°, T$_2$ G$_1$ $_3$ M न ह्या°, G$_2$ नाम्या° ( for नाप्या° ) Ś$_1$ नाचार्य कथन च न ( sic )

41 [b]) T$_2$ युध्यति ( for द्रक्ष्यति ) — [c]) Bom ed नित्य ( for तं त )

42 [b]) K$_3$ दृढ, M$_2$ स्थिरा ( for दृढा ) K$_4$ transp दृढा and रणे — [c]) T G योधय ( G$_2$ °यि ) स्व — [d]) K$_{0-2}$ स्वय, B$_2$ $_3$ युद्ध ( for स्वर्गं ) G$_1$ $_2$ गत्वा, G$_3$ मत्वा ( for कृत्वा )

43 [a]) Ś$_1$ अशक्य, K$_{0-2}$ अशक्ता, S ( except M$_1$ $_2$ ) अशक्या ( for न शक्या° ) — [b]) Ś$_1$ B देवैर् ( for सेन्द्रैर् ) B$_1$ $_2$ सरासरै ( sic ) K$_{0-2}$ D ( except D$_{1-3}$ ) T$_2$ M देवैरपि सवासवै° — [cd]) K$_0$ $_2$ तथा, G$_2$ तस्मिन् ( for तस्माद् ) K$_{3-5}$ B Da Dn D$_{2-8}$ transp मतिं and स्थिरा D$_3$ दृढां कृत्वा मतिं, S स्थिरा कृत्वा बुद्धिं ( for मतिं कृत्वा स्थिरा ) D$_2$ पार्थिव ( for भारत )

Colophon — *Sub-parvan* Omitting sub-parvan name, Ś$_1$ K$_{0-2}$ D$_2$ mention only अष्टमे युद्धदिवसे ; K$_4$ B$_3$ Da Dn$_1$ D$_5$ T$_2$ अष्टमेह्नि ( to it B$_3$ adds संग्रामे ), D$_6$ अष्टमेदिवसे, M$_4$ अष्टमेह्निके — *Adhy name* K$_4$ धार्तराष्ट्रवध , T G$_4$ भीमयुद्ध , M$_{1-3}$ $_5$ भीमसेनयुद्ध — *Adhy no* ( figures, words or both ) Da$_2$ ( *sec m* ) 45, Dn$_2$ T$_2$ M$_3$ $_4$ 85, D$_6$ T$_1$ G 83, M$_1$ $_2$ 84 ( as in text ), M$_5$ 86 — *Śloka no* Dn D$_6$ 44, D$_5$ 46

## 85

☞ The collations of G$_3$ were not available for adhyāyas 85–92, and the MS is ignored for these adhyāyas

1 [a]) D$_1$ $_6$ मे निहतान् ( for मम हतान् ) B$_2$ $_4$ दृष्ट्वैव निहतान्पुत्रान् — K$_5$ D$_2$ om ( hapl ) 1[c]–2[b]

C 6 3932
B 6 83 2
K 6 69 2

मन्येऽहं सर्वथा सूत दैवेनोपहता भृशम् ॥ २
यत्र मे तनयाः सर्वे जीयन्ते न जयन्त्युत ।
यत्र भीष्मस्य द्रोणस्य कृपस्य च महात्मनः ॥ ३
सौमदत्तेश्च वीरस्य भगदत्तस्य चोभयोः ।
अश्वत्थाम्नस्तथा तात शूराणां सुमहात्मनाम् ॥ ४
अन्येषां चैव वीराणां मध्यगास्तनया मम ।
यदहन्यन्त संग्रामे किमन्यद्भागधेयतः ॥ ५
न हि दुर्योधनो मन्दः पुरा प्रोक्तमबुध्यत ।
वार्यमाणो मया तात भीष्मेण विदुरेण च ॥ ६
गान्धार्या चैव दुर्मेधाः सततं हितकाम्यया ।
नावबुध्यत्पुरा मोहात्तस्य प्राप्तमिदं फलम् ॥ ७
यद्भीमसेनः समरे पुत्रान्मम विचेतसः ।
अहन्यहनि संक्रुद्धो नयते यमसादनम् ॥ ८

संजय उवाच ।

इदं तत्समनुप्राप्तं क्षत्तुर्वचनमुत्तमम् ।
न बुद्धवानसि विभो प्रोच्यमानं हितं तदा ॥ ९
निवारय सुतान्द्यूतात्पाण्डवान्मा द्रुहेति च ।
सुहृदां हितकामानां ब्रुवतां तत्तदेव च ॥ १०

---

— c) K2 D8 भीष्मद्रोण ; B8 भीष्मद्रोणौ — d) K2-4 Da1 D1 3 6 8 G2 M °कुर्वंत ( M5 °ते ) Ś1 D1 ते त्रय°, K0-2 B1 2 D8 8 सजय ( for सयुगे )

2 K5 Da Dn1 D2 5 om ( ? hapl ) $2^{ab}$ ( for K5 D2, cf v l 1 ) — a) D1 पुत्राणा, G2 युध्यत ( for मे पुत्रा ) — b) D1 क्षयो भवति ( for क्षय गच्छन्ति ). B Dn2 D1 4 8 सयुगे ( for संजय ) — c) D1 8 अह हि ( for मन्येऽह ) D7 T1 G4 सर्वधा S पुत्रा ( for सूत ) — d) K8 Dn2 D1-4 6-8 दैवेनोपहतो, Da1 देवेनोपहता, M2 दैवेनैव हता, M8 ( *sup lin* ) दैवेनैव हता

3 a) S ( except M8 ) तत्र ( for यत्र ) — b) B1 4 Dn2 D4 6-8 हीयते, B8 Da Dn1 D5 G1 M1 ( *sup lin* ) क्षीयते, T2 G4 जीर्यंते ( for जीयन्ते ) T1 G2 क्षिय्यते ( G2 क्षीयतो ) जनयत्युत — c) K8 यस्य, K4 M1 ( *sup lin* ) 2 8 तत्र ( for यत्र ) K0 2 8 5 Da Dn1 D2 5 T G द्रोणस्य भीष्मस्य ( by transp ) — K2 om ( hapl ) $3^d$–$4^a$

4 K2 om $4^a$ ( cf v l 3 ) — a) Ś1 K8 5 Da1 D2 5 T1 G2 M2 4 सोमदत्तेश्च ( T1 °दत्तस्य ) K0 1 D8 वीर्यस्य, S शूरस्य ( for वीरस्य ) — c) K2 अश्व स्थाम्ना, K5 अव्यच्छन्नेस् ( sic ) K0-2 G1 ततस् ( for तथा ) K8 D1 सूत ( for तात ) — d) K8 5 D2 8 6 S शूराणामनि( D2 °नु )वर्तिना

5 a) B1 4 Da Dn D3-5 7 8 शूराणा ( for वीराणा ) D1 अन्येपा तु नरेंद्राणा, T1 G2 M तथा सर्वस्य सैन्यस्य, T2 G1 4 तथा सैन्यस्य सर्वस्य — b) D1 प्रेक्षता, S मध्यस्थास् ( for मध्यगास् ) — c) K5 यदाहन्यत, D1 यदवध्यत, M1 यदहनस्त ( sic ) ( for यदहन्यन्त ) T1 G2 4 समरे ( for सग्रामे ) — d) K2 भागत्रेधत ( for °धेयत° )

6 b) S ह्येतद् ( for प्रोक्तम् ) — c) T G4 रणे ( for मया )

7 a) K3 G2 गांधार्याश्चैव, D1 गांधार्या अपि T1 G4 गाधार्या च यशस्विन्या — b) K0 1 स तु त ( for सतत ) Ś1 K0-2 4 D1 प्रियकाम्यया, T1 G4 हितकामया — c) K0-2 नावबुध्येत्, K4 5 B Da Dn D4-6 8 नाबुध्यत, D1 न त्ववबुध्यत् ( for नावबुध्यत् ) — d) D8 ( m as in text ) प्राप्यम्

8 b) S मम पुत्रान् ( by transp ) B D ( except D2 6 ) S विशेपत ( for विचेतस° ) — d) K2 नयतो ( for नयते )

9 S om the ref — a) B4 Da Dn1 D5 इद तु समनु°, D1 इद सत्यमन° — Ś1 om (hapl) $9^b$–$11^c$ — b) K5 भ्रातुर् ( for क्षत्तुर् ) K1 अतुल ( for उत्तमम् ) — c) D8 बुध्यवान् T1 G2 4 M अस्मि ( for असि ) K0 प्रभो, D1 तदा, T1 G4 विद° ( for विभो ) T2 न बुध्वा तस्य च विभो — d) S इद ( for हित ) K0-2 4 तथा, K5 B1 सदा, D6 तव ( for तदा ) D1 प्रोच्यमानो हितं वच°

10 Ś1 om 10 ( cf. v l. 9 ) — a) B2 Da Dn1 D5 T1 G1 2 4 M1-3 5 सुत ( for सुतान् ) Dn2 D2 4 7 निवारयस्व तान् B4 मोहात् ( for द्यूतात् ) — b) Cv मा रुदेति वै K3 5 D2 वै ( for च ) D1 पाडूनां कुरु मा व्यथा — D3 om ( hapl ) $10^{cd}$ — d) D4 हि ( for च ) D1 न श्रुत वच , T2 त तदा वच°, Cv तत्तदेव च ( as in text )

न शुश्रूषसि यद्वाक्यं मर्त्यः पथ्यमिवौषधम् ।
तदेव त्वामनुप्राप्तं वचनं साधु भाषितम् ॥ ११
विदुरद्रोणभीष्माणां तथान्येषां हितैषिणाम् ।
अकृत्वा वचनं पथ्यं क्षयं गच्छन्ति कौरवाः ॥ १२
तदेतत्समतिक्रान्तं पूर्वमेव विशां पते ।
तस्मान्मे शृणु तत्त्वेन यथा युद्धमवर्तत ॥ १३
मध्याह्ने सुमहारौद्रः संग्रामः समपद्यत ।
लोकक्षयकरो राजंस्तन्मे निगदतः शृणु ॥ १४

ततः सर्वाणि सैन्यानि धर्मपुत्रस्य शासनात् ।
संरब्धान्यभ्यधावन्त भीष्ममेव जिघांसया ॥ १५
धृष्टद्युम्नः शिखण्डी च सात्यकिश्च महारथः ।
युक्तानीका महाराज भीष्ममेव समभ्ययुः ॥ १६
अर्जुनो द्रौपदेयाश्च चेकितानश्च संयुगे ।
दुर्योधनसमादिष्टान्राज्ञः सर्वान्समभ्ययुः ॥ १७
अभिमन्युस्तथा वीरो हैडिम्बश्च महारथः ।
भीमसेनश्च संक्रुद्धस्तेऽभ्यधावन्त कौरवान् ॥ १८　C. 6 3950 B 6 83 20 K 6 83 20

---

11 Ś1 om $11^{abc}$ ( cf v 1 9 ) — $^{a}$) K3 Dn2 D2-4 6-8 तद् ( for यद् ) B1-3 Da Dn1 D5 यश्च शुश्रूषसे ( D5 °से ) वाक्य, S न शृणोषि पुरा ( M1-3 5 तदा ) वाक्य — $^{b}$) B3 Dn D7 8 आर्त ( for मर्त्य ) D1 मर्तुकाम इवौषध — $^{c}$) D1 तदेतद् ( for तदेव ). S तदिद समनुप्राप्त — $^{d}$) S साधुवादिना ( for साधु भाषितम् )

12 $^{b}$) D6 [अ]न्ये च ( for [अ]न्येषां ) S मनीषिणा ( M4 मनस्विनां ) ( for हितैषिणाम् ) D5 सम्रामे न च मेधिनौ

13 $^{a}$) D2 तदेव, D8 तच्च वै ( for तदेतत् ) K4 B D ( except D1-3 ) M2 समनुप्राप्त, T2 समनुक्रांतं ( for समति° ) — $^{b}$) T G हि संजय ( for विशां पते ) — $^{c}$) B1 त्वं ( for मे ) D6 शृणु त्व ( for मे शृणु ) S वद धर्मज्ञ ( for शृणु तत्त्वेन )

14 Before 14, S ins संजय — $^{a}$) D1 °राज ( for °रौद्र ) S मध्याह्ने तुमुलो ( T2 M तु महा, G2 तुमुले ) घोर — $^{b}$) D1 रौद्ररूपमवर्तत — $^{c}$) K4 लोकक्षयकरं, T1 G1 2 4 M जनक्षयकरो ( for लोक° ) — $^{d}$) D2 ततो ( for तन्मे ) D8 T2 निगदित

15 $^{a}$) B2 सैन्यानि सर्वाणि ( by transp ) — $^{c}$) B3 सरभानि ( for संरब्धानि ) Ś1 D3 6 [अ]भ्यवर्तत, D1 न्यवर्तत ( for [अ]भ्यधावन्त ) K3 5 D2 त्वरध्व-मित्यवर्तत, B1 समारब्धान्यधावत, S अभ्यद्रवत संग्रामे — $^{d}$) D1 भीष्मस्य च, D6 °श्चैव ( for °मेव ) M2 विशां पते ( for जिघांसया )

16 $^{b}$) D1 सात्यकी च Ś1 B3 महारथा — After $16^{ab}$, B3 reads line 3 of 339* — $^{d}$) B4 भीष्ममे वाभ्ययुस्तदा, G1 °मेवाभिदुद्रुवु — Ś1 K2-5 B1 2 4 D ( except Da1 ) ins after 16 B3 ins line 3 only after $16^{ab}$

338* विराटो द्रुपदश्चैव सहिता सर्वसोमकै ।
अभ्यद्रवन्त सग्रामे भीष्ममेव महारथा ।
केकया धृष्टकेतुश्च कुन्तिभोजश्च दंशित ।
युक्तानीका महाराज भीष्ममेव समभ्ययु ।

[ ( L 1 ) K5 विराट- D1 om. the post half of line 1 and the prior half of line 2 Ś1 K2 3 5 Da2 Dn1 D2 4-8 सहित ( for °ता ) Ś1 °सोमका, K4 °सैनिकै, Dn1 °सौमकै — ( L 2 ) Ś1 अभ्यवर्तत, K3 D2 °द्रवत ( for °द्रवन्त ) Ś1 K4 D8 महारथ, K3 5 D2 6 जिघांसया, D1 समभ्ययु ( for महारथा ) — ( L 3 ) K2 3 5 B1 Dn2 D3 कैकया, B2-4 Da2 Dn1 D2 4-8 कैकेया Da2 D5 दृष्टकेतुश्च K3 कुन्तीभोजश्च K2 D8 दंशिता, D6 दंशित — ( L 4 ) = $16^{cd}$ Om in K2 D8 यत्ता° ( for युक्ता° ) Ś1 सर्व ( sic ) ( for एव ) ]

17 $^{b}$) D5 केचितानश्च (sic) B D ( except D1-3 6 ) T1 G वीर्यवान् ( for संयुगे ) — $^{c}$) B1 3 D5 T1 G4 दुर्योधनसमाविष्टान्, D3 युधिष्ठिरसमादिष्टा, T2 दुर्योधनादीन्समरे, Cv as in text — $^{d}$) D1 राज्ञ सर्वे, D3 कौरवास्तान्, T2 M4 राजन्सर्वान्

18 $^{a}$) Da D5 M2 ततो ( for तथा ) Da1 वीर, D3 शूरो, T2 वीरैर् — $^{b}$) K1 हैडिंमश्च; K3 5 Da1 D1. 2 ( by corr ) 5 6 हैडम्बश्च, D2 ( before corr ) 3 हैडिंबिश्च Ś1 D3 महारथा, M1-3 5 घटोत्कच — $^{c}$) Ś1 K0-2 4 कौरव्य, T1 G1 2 4 कौरव्यान्, M3-5 स क्रुद्धास् — $^{d}$) D2 सोभ्यधावत, D4 स्वभ्यधावत ( for तेऽभ्य° ) T1 G1 2 4 तेति ( T1 G4 अति ) क्रुद्धा समभ्ययु, Cv as in text

19 $^{a}$) K0-2 अयुध्यत, D2 अविध्यत — $^{b}$) K0 1

C. 6 3551
B 6 89 21
K 6 89 21

त्रिधाभूतैरवध्यन्त पाण्डवैः कौरवा युधि ।
तथैव कौरवै राजन्नवध्यन्त परे रणे ॥ १९
द्रोणस्तु रथिनां श्रेष्ठः सोमकान्सृञ्जयैः सह ।
अभ्यद्रवत संक्रुद्धः प्रेषयिष्यन्यमक्षयम् ॥ २०
तत्राक्रन्दो महानासीत्सृञ्जयानां महात्मनाम् ।
वध्यतां समरे राजन्भारद्वाजेन धन्विना ॥ २१
द्रोणेन निहतास्तत्र क्षत्रिया बहवो रणे ।
विवेष्टन्तः स्म दृश्यन्ते व्याधिक्लिष्टा नरा इव ॥ २२
कूजतां क्रन्दतां चैव स्तनतां चैव संयुगे ।
अनिशं श्रूयते शब्दः क्षुत्कृशानां नृणामिव ॥ २३

तथैव कौरवेयाणां भीमसेनो महाबलः ।
चकार कदनं घोरं क्रुद्धः काल इवापरः ॥ २४
वध्यतां तत्र सैन्यानामन्योन्येन महारणे ।
प्रावर्तत नदी घोरा रुधिरौघप्रवाहिनी ॥ २५
स संग्रामो महाराज घोररूपोऽभवन्महान् ।
कुरूणां पाण्डवानां च यमराष्ट्रविवर्धनः ॥ २६
ततो भीमो रणे क्रुद्धो रभसश्च विशेषतः ।
गजानीकं समासाद्य प्रेषयामास मृत्यवे ॥ २७
तत्र भारत भीमेन नाराचाभिहता गजाः ।
पेतुः सेदुश्च नेदुश्च दिशश्च परिबभ्रमुः ॥ २८

---

M2 पाडवा॰ कौरवैर्, K2 पाडवै कौरवैर्, D3 T G M1 3-5 कौरवा पाडवैर् (by transp) — c) K5 तत्रैव K0 2 D1 4 T2 M1 कौरवा, Da1 कौरवो, T1 G पाडवा (for कौरवै) — d) K0-2 अयुध्यत, K. न वध्यते, D4 वध्यते च, T2 अहन्यत (for अवध्यन्त) Ś1 D2 रणे परे (by transp), K0-2 रणे परै॰, D1 7 T2 M4 परात्र(D7 M4 ॰रा र)णे; T1 G M1 परै रणे

20 a) K5 द्रौणिस्तु, B2-4 Dn2 D4 7 8 द्रोणश्च B6 D5 रथिन (for रथिना) Ś1 श्रेष्ठान्, Da1 D5 श्रेष्ठ — b) D1 सोमकै॰ K4 B2 D1. 8 T1 G1. 2 4 सह सृजयै॰ (by transp), T2 M सहसृजयान् — c) K0-2 B1 D1. 8. 6 अभ्यधावत, Dn2 T2 M5 ॰द्रवंत K4 अभ्यधावत्सुसक्रुद्ध॰ — d) T1 G1 2 4 (before corr) M8 प्रेषयन्वै, T2 M4 ॰यानो, G4 (by corr) ॰यश्च, M1 2 3 (*sup lin*) ॰यद्वै (for ॰यिष्यन्) D8 प्रेषयन्यमसादनं

21 ab) B2 8 तदाक्रदो, Da D5 उदक्रोशन्, Dn1 तत्राक्रोशो D1 तत्राद्भुतमपश्याम द्रोणस्यातिपराक्रम — c) T2 युध्यता (for वध्यता) — d) Da1 D5 T2 धन्विना, T1 G4 धीमता (for धन्विना) D1 सृजयानां महात्मना

22 a) Dn2 सहितास् (for निहतास्) — b) T2 क्षत्रियाणा महाहवे — B4 om 22c-23d — c) K2 विचेष्टत॰, K8 5 विचेष्टत, K4 B1-3 Da Dn D1 2 4-8 विचेष्टत॰, D8 व्यचेष्टत॰ (for विवेष्टन्त॰) B1-3 Da Dn D3-5 7 8 T1 G4 M8 5 व्यदृश्यत, D6 T2 G1 दृ दृश्यंत, G3 [अ]भ्यदृश्यत, M1 2 4 [अ]प्यदृश्यत (for स्म दृश्यन्ते) K4 समरे (for दृश्यन्ते) — d) Dn2 D4 6-8 M1 (*sup lin*) 2 3 5 ॰क्लिन्ना (for ॰क्लिष्टा)

23 B4 om 23 (cf v. l 22) — a) T1 G क्रदता कूजतां (by transp) — b) Da1 D. स्तनया (D5 ॰य), D2 6 स्वनतां, Ca c स्तनता (as in text) K3 5 B1 D2 भारत (for सयुगे) — c) K1 अनुशा (for अनिशं) K5 D2 6 शुश्रुवे (for श्रूयते) K2 B1 Da Dn D4 5 7 8 अभिसश्रूयते शब्द॰ — d) Ś1 क्षुज्जुपाणां, K0-2 तत्र तत्र, K3. 5 D1-3 क्षत्रियाणा, B1 क्षुत्क्लिष्टानां, Da Dn D4 5 7 8 क्षुत्क्लेशानां; D6 क्षुत्कृशाना, M4 क्षुत्क्षमाणा (for क्षुत्कृशाना) K8 D8 रणाजिरे, K6 D1 2 नराधिप (for नृणामिव)

24 a) D1 कौरवेंद्राणा — b) D6 महारथ॰ (for ॰बल॰) — d) K1 2 क्रुद्धकाल, K8 युध्यन्काल, T G M4 क्रूर काल, M1-3 5 काल॰ क्रूर (for क्रुद्ध॰ काल) K8 इवापरे K5 युद्धकामस्तदा नृप

25 a) Ś1 K0 2 T2 M4 तव, D1 4 8 सर्व- (for तत्र) — b) K0-2 अन्योन्यस्य (for ॰न्येन) K4 तदा रणे, Dn2 D4 T2 महाहवे — cd) K6 रुधिरौघप्रवर्तिनी, B Da2 Dn2 D1 4 5. 7 8 शोणितौघतरगिणी (Da2 D5 ॰प्रवाहिनी) (for 25d) S वर्ध(G1 2 ॰ध्य)ते प्रेतराजस्य विषय॰ स (M1-3 5 ॰यं स्म) विशा पते

26 b) K1 [ऽ]भवन्महत्, K3 5 D2 महानभूत्, S [ऽ]भवत्तदा

27 a) Ś1 K0-2 महेष्वासो (for रणे क्रुद्धो) — b) Ś1 नभसश्च, D1 रभसा च, G1 रभस च

28 K5 D2 transp 28 and 29 — a) B2 तव (for तत्र) K3 5 D2 शूराश्च (for भारत) — b) D1 नाराचैस्ताडिता, T1 G4 नाराचनिहता, T2 नाराचेन

छिन्नहस्ता महानागाश्छिन्नपादाश्च मारिष ।
क्रौञ्चवद्व्यनदन्भीताः पृथिवीमधिशिश्यिरे ॥ २९
नकुलः सहदेवश्च हयानीकमभिद्रुतौ ।
ते हयाः काञ्चनापीडा रुक्मभाण्डपरिच्छदाः ।
वध्यमाना व्यदृश्यन्त शतशोऽथ सहस्रशः ॥ ३०
पतद्भिश्च हयै राजन्समास्तीर्यत मेदिनी ।
निर्जिह्वैश्च श्वसद्भिश्च कूजद्भिश्च गतासुभिः ।
हयैर्बभौ नरश्रेष्ठ नानारूपधरैर्धरा ॥ ३१
अर्जुनेन हतैः संख्ये तथा भारत वाजिभिः ।
प्रबभौ वसुधा घोरा तत्र तत्र विशां पते ॥ ३२
रथैर्भग्नैर्ध्वजैश्छिन्नैश्छत्रैश्च सुमहाप्रभैः ।
हारैर्निष्कैः सकेयूरैः शिरोभिश्च सकुण्डलैः ॥ ३३
उष्णीषैरपविद्धैश्च पताकाभिश्च सर्वशः ।
अनुकर्षैः शुभै राजन्योक्त्रैश्चाप्यसुरश्मिभिः ।

C 6 3866
B 6 89 3
K 6 89 2

महा, M1 नाराचाटिहता, M2 नाराचाभिगतो —[c]) Cc सेदुश्च (as in text) K4 वेमुश्च (for नेदुश्च) D1 6 पेतुर्नेदुश्च नेशुश्च, T2 तव नेदुश्च सुभृशः; G M पेतुर्ने( M4 °सु, से )दुश्च सुभृश, Bom ed पेतुर्नेदुश्च सेदुश्च —[d]) Dn2 D4 7 8 दिश स, D1 विह्वला (for दिशश्च)

29 K5 D2 transp 28 and 29 —[a]) T1 G M4 भिन्न° (for छिन्न°) —[b]) K2 छिन्नपापाश्च, K3 4 B D (except D7) छिन्नगात्राश्च, S भिन्नकुम्भाश्च (for छिन्नपादाश्च) —[c]) K5 D6 व्यनदन्भीता, B Da Dn D4 5 7 8 विनदतश्च (B1 [also] 8 Da Dn1 D5 °त स), D8 M1 विनदन्भी( M1 °न्ही )ता, T2 व्यतनन्भीता —[d]) D1 पृथिव्याम् (for °वीम्) Ś1 अधिशिप्यरे, Ko 1 °शिश्रियु, K2 परिशिश्युः, K3 5 D2 अपि शिरि( D2 °प्यि )रे, D8 अधिशेरते, D6 8 T1 अधिशि शिरे; T2 अनुशुश्रुरे, G1 अनुशिश्रिरे, G2 M3 3 5 अनुशिश्यिरे, M1 4 अनुशिशिरे (for अधिशिश्यिरे)

30 [a]) K2 D3 नकुल —[b]) M4 गजानीकम् G1 अभिद्रुतौ —[c]) K2 हयान् (for हया) T1 G4 कांचनोत्पीडा D6 ते हयाना नवापीडा —[d]) Ś1 K1 2 हेमदड, Ko देहदड, K3 5 B4 D2 3 6 रुक्मदड, M रुक्मभाड (for रुक्मभाण्ड) Cc cites भाडम् Ś1 °परिच्छद, B1 Da Dn1 D3 S °परिष्कृ( Da Dn1 °स्कृ )ता, D6 °परिस्तुता (for °परिच्छदा) —[e]) D1 S प्रदृश्यते (for व्यदृश्यन्त)

31 [a]) K4 महद्भिश्च (for पतद्भिश्च) Ś1 K1 D2 3 T1 G M तु (for च) K3 5 D2 तुरगै राजन्, D6 तु रथै राजन्, T2 च हयौघैश्च (for च हयै राजन्) —[b]) Ś1 समास्तीर्य च, K4 B1 2 4 Dn2 D4 6–8 °कीर्यत, Da Dn1 D5 समुदीर्यत (for समास्तीर्यत) T2 मेदिनीं —[c]) S1 Ko 2 निजिह्वैश्च, B2 Da Dn1 D5 विजिह्वैश्च, D1 T1 G निर्जीवैश्च (D1 °स्तु), D2 द्विजिह्वैश्च, T2 नजश्चैव (sic), Cc cites निर्जिह्वै M5 निर्जिह्वैर्निश्वसद्भिश्च —[d]) K2 गताशुभि, Da1 गतो सुनि —[e]) Da1 बभुर् (for बभौ) S महाराज (for नरश्रेष्ठ) D1 हतैर्वैद्रुविधाकारैर्

32 [a]) B3 हत, M4 हता (for हतै) T G1 M संखे, G2 संधे —[b]) Ko 1 भरत K4 B D (except D1 2 6) M4 राजभि (for वाजिभि) —[c]) K1 प्रभमौ वसुदा घोरो (sic)

33 [a]) M3 गजैर् (for रथैर्) T1 G1.4 भिन्नैर् (for भग्नैर्) Ś1 Ko–2 4 D8 हयैश्च, K3 5 D2 द्विपैश्च, T G4 M4 गजैश्च (for ध्वजैश्च) B3 तुंगैर् (for छिन्नैश्च) —[b]) K4 शुभ्रैश्च, T2 चित्रैश्च (for छत्रैश्च) K3 5 B Da Dn D1.2 4–6 8 निकृत्तैश्च महायुधै (K3 D2 6 °रथै), D8 निकृत्तैश्च वरायुधै, D7 छत्रैश्च महायुधै (submetric) — After 33[ab], Ś1 K B Da Dn1 D1–2 5–7 8 (marg sec m) ins

339* चामरव्यजनैश्छिन्नैर्निकृत्तैश्च महायुधै ।

[ B1 2 4 Da Dn1 D1.5 6 8 चामरैर् (for चामर) B Da Dn1 D5 चैव (for छिन्नैर्) K3 5 B Da Dn1 D1–3 5 6 छत्रैश्च सुमहाप्रभै (B4 °सुधै, D1 3 °धनै) ]

— K5 D6 cont

340* प्रतोदैश्च तथा छिन्नैर्विकृतैश्च महायुधै ।

[ K5 सुदेहैश्च (for प्रतोदैश्च) ]

—[c]) Ś1 Ko–2 च निष्कै (for निष्कै स) —[d]) K5 समाकुलै (for सकुण्डलै)

34 [a]) Ś1 D3 अपि विद्धैश्च, Da Dn1 D5 इव विद्धैश्च, D6 T1 G2 4 परिविद्धैश्च (for अप°) —[b]) K3 अलंकृतै, T2 M च सर्वत (for च सर्वश) —[c]) B3 भुजै, Cv शुभै (as in text) —[d]) Ca cites योक्त्रम्, Cc योक्त्रै (as in text) Ś1 Ko चैव सुरश्मिभि, K1 च वसु°, K2–4 D3 6 चैव स°, K5 चैव

C. 6 3960
B 6. 89 30
F 6 89 36

संछन्ना वसुधा भाति वसन्ते कुसुमैरिव ॥ ३४
एवमेष क्षयो वृत्तः पाण्डूनामपि भारत ।
क्रुद्धे शांतनवे भीष्मे द्रोणे च रथसत्तमे ॥ ३५
अश्वत्थाम्नि कृपे चैव तथैव कृतवर्मणि ।
तथेतरेषु क्रुद्धेषु तावकानामपि क्षयः ॥ ३६

इति श्रीमहाभारते भीष्मपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

## ८६

संजय उवाच ।
वर्तमाने तथा रौद्रे राजन्वीरवरक्षये ।
शकुनिः सौबलः श्रीमान्पाण्डवान्समुपाद्रवत् ॥ १
तथैव सात्वतो राजन्हार्दिक्यः परवीरहा ।
अभ्यद्रवत संग्रामे पाण्डवानामनीकिनीम् ॥ २
ततः काम्बोजमुख्यानां नदीजानां च वाजिनाम् ।
आरट्टानां महीजानां सिन्धुजानां च सर्वशः ॥ ३
वनायुजानां शुभ्राणां तथा पर्वतवासिनाम् ।

तु राशिभि॰, B Da Dn D4 5 7 8 च सह रश्मिभि॰, D1 S चापि सु( D1 स )रश्मिभि॰, D2 चैव तु रश्मिभि॰ (for *चन्यसुरश्मिभि॰) — c) K8 5 B8 4 D2 8 स कीर्णा, Da1 Dn2 D5 संछिन्ना ( Da1 °न्न ) (for स छन्ना) D5 भावी (for भाति). — d) B1 वसत (for वसन्ते)

35 a) Ko 2 T1 G1 4 एवमेव — b) D1 इह, D2 इति (for अपि). — d) Ko-2 द्रोणे च रथिना वरे

36 b) K8 5 D2 शल्ये च, Da D5 द्रोणे च (for तथैव) — d) D8 अभिक्षय॰, M5 अपि क्षय

Colophon — *Sub-parvan* Omitting sub-parvan name, Ś1 Ko-2 D2 mention only अष्टमे युद्धदिवसे, K4 B8 Da Dn1 D5 अष्टमेऽह्नि (to it B8 adds संग्रामे), D6 अष्टमदिवसयुद्धे, M4 अष्टमेह्निके — *Adhy name* K4 सकुलयुद्ध, T2 रणागणवर्णन, M1 2 रथाद्यवर्णन — *Adhy no* (figures, words or both) K5 82, Da2 (sec m) 47, Dn2 T2 M3 4 86, D6 T1 G1 2 4 84, M1 2 85 (as in text), M5 87 — *Śloka no* Dn1 D5 40, Dn2 39

86

☞ The collations of G3 were not available for this chapter.

1 a) D1 तथा घोरे, D6 महारौद्रे — b) D1 S तस्मिन् (for राजन्) K2 °क्षय (for °क्षये) — c) K2 शौबल, K8 D8 सौबळ B1 चैव (for श्रीमान्) — d) K8 D2 समुपाद्रवन्

2 a) G1 राजा (for राजन्) — c) Ś1 अभ्याद्रवत, K2 अभ्यद्रवति, K4 D6 °धावत, T2 °द्रवत — d) K8 5 B D (except D8) S वरूथिनीं (for अनीकिनीम्)

3 a) Ko तथा Ko 2 काभोज॰ (for काम्बोज॰) — b) K5 D1 (m by corr, orig as in text) 2 8 त्व( D8 त )दीयाना, B8 नदीनाना (for नदीजाना) T1 G4 च वासिना G2 नजाना चै वाजिना (corrupt) — c) K1 आरधानां, K5 D2 आरदाना, D8 (m as in text) आरद्राना, D5 आरटानां, M2 आतदाना T2 अभीजाना Ś1 आरट्टदेशजानां च; Cv आजानेय॰ महीजानां — d) T2 सर्वत॰ (for °श॰)

4 a) K4 B4 Dn1 D7 वाना°, K5 नावा°, B1 D5 याणा°, Da1 वाणा° (for वना°) D1 8 शूराणां (for शुभ्राणा) — b) D5 T1 G2 4 °वाजिनां (for °वासिनाम्) — After 4ab, Ś1 K1 2 B1 2 4 Da Dn D4 5 7 8 G1 ins

341* वाजिनां बहुभि॰ सख्ये समन्तात्पर्यवारयन् ।

[ Ś1 सगै, Ko-2 मधै (for सख्ये) Ś1 Ko-2 परिवारित, B2 Dn2 D7 G1 परिवारयन् (for पर्य॰) ]

ननाद बलवन्नादं सौभद्रः परवीरहा ॥ २१
हताश्वात्तु रथात्तूर्णमवप्लुत्य महारथः ।
आरुरोह रथं तूर्णं दुर्मुखस्य विशां पते ॥ २२
द्रोणश्च द्रुपदं विद्ध्वा शरैः संनतपर्वभिः ।
सारथिं चास्य विव्याध त्वरमाणः पराक्रमी ॥ २३
पीड्यमानस्ततो राजा द्रुपदो वाहिनीमुखे ।
अपायाज्जवनैरश्वैः पूर्ववैरमनुस्मरन् ॥ २४
भीमसेनस्तु राजानं मुहूर्तादिव बाह्लिकम् ।
व्यश्वसूतरथं चक्रे सर्वसैन्यस्य पश्यतः ॥ २५
ससंभ्रमो महाराज संशयं परमं गतः ।
अवप्लुत्य ततो वाहाद्बाह्लिकः पुरुषोत्तमः ।
आरुरोह रथं तूर्णं लक्ष्मणस्य महारथः ॥ २६
सात्यकिः कृतवर्माणं वारयित्वा महारथः ।
शरैर्बहुविधै राजन्नाससाद पितामहम् ॥ २७
स विद्ध्वा भारतं षष्ट्या निशितैर्लोमवाहिभिः ।
ननर्तेव रथोपस्थे विधुन्वानो महद्धनुः ॥ २८
तस्यायसीं महाशक्तिं चिक्षेपाथ पितामहः ।
हेमचित्रां महावेगां नागकन्योपमां शुभाम् ॥ २९
तामापतन्तीं सहसा मृत्युकल्पां सुतेजनाम् ।
ध्वंसयामास वार्ष्णेयो लाघवेन महायशाः ॥ ३०

C. 6 4759
B 6 104 31
K 6 104 31

---

both first time) M वलवान्नाद, G1-3 (second time) सुमहानाद

22 T1 (second time) om 22 (cf v 1 16) G1-3 *repeat* 22 (cf. v 1 1) — [a]) D1 हताश्वस्तु; D6 °श्वासु (for °श्वात्तु) — Ś1 om. (hapl) 22[bc] — [b]) K2 4 B D (except D2 3) सोच° (for अव°) T1 G4 महारथं, M2 °रथा (for °रथ) — [c]) D3 G1 (second time) M शीघ्र, T2 (first time) चित्र (for तूर्णं) — [d]) M4 दुष्पहस्य (for दुर्मुखस्य). D2 दुरासद (for विशां पते)

23 T2 (second time) om 23 (cf v 1 16) G1-3 *repeat* 23 (cf. v 1. 1) — [a]) K6 द्रौणिस्तु (for द्रोणश्च) D1 T (T2 first time) G4 तु (for च) K2 B Dn D4 7 8 भित्त्वा (for विद्ध्वा) — [b]) K1 शरैः सनं तपचभि (sic) — [c]) D8 तस्य (for चास्य) T1 G4 विव्याय — [d]) M4 त्वरमाण (for °माण)

24 T2 (second time) om 24 (cf v 1 16) G1-3 *repeat* 24 (cf v 1 1) — [a]) G1 (second time) विघ्य° (for पीड्य°) D1 T1 G4 राजन् (for राजा) — [b]) Ś1 Ko 1 °पति (for °मुखे) — [c]) T2 (first time) अर्पयाज्, G2 (second time) अपयाज्. — [d]) T1 G1. 3 (the last two first time) 4 रणाद्भीतो जनेश्वर

25 T2 (second time) om 25 (cf v 1 16). G1-3 *repeat* 25 (cf v 1. 1) — [ab]) D1 मुहूर्तादेव, G1-3 (all second time) मुहूर्तमिव D1 बाह्लीक G1 (first time) अर्जुनश्च नरव्याघ्र सुशर्मप्रमुखाग्रयान् = (var) 1[ab] — [d]) T (T2 first time) G4 °लोकस्य (for °सैन्यस्य)

26 T2 (both times) om 26 (for first time, cf v 1 16) G1-3 *repeat* 26 (cf v 1 1) — [a]) Ko 1 5 D2 G1. 3 (the last two second time) ससंभ्रम, D1 ससशय (for °भ्रमो) — [b]) Ś1 परमो (for °म) G2 (second time) सर्वसैन्यस्य पश्यत = 25[d] — [c]) D3 अवप्रुत्य (for °प्लुत्य) Dn1 याहाद्; S (T2 om) यानाद्, Cv वाहाद् (as in text) — [d]) K4 B Da Dn D1 4 5 S (T2 om) वाह्लीक° D1 स्थविर स्तत, S (T2 om) पुरुषर्षभ° (for °षोत्तम°) — [f]) M1 3 4 लक्षणस्य K2 Dn2 D4 7 8 महारणे, K3 5 D2 विशां पते, B3 D1 T1 G4 महात्मन, G1. 3 (both second time) °रथ (for °रथः)

27 Ko 1 T1 G4 om (hapl) 27[ab], T2 om 27[a] (cf. v 1 16) — [a]) G1 सात्यकः (for °किः) — [b]) K2 4 B Da Dn D4-8 महारणे, D1 महारथं — [c]) T2 बहुविधो, M4 °त्रिधा (for °विधै)

28 [a]) D1 भरत षष्ट्या, D6 भारत श°, T2 भारतं यष्ट्या — [b]) T2 M1-3 5 विशिखैर् (for निशितैर्) Da1 लोमवाहिते, T G °वापिभि — [c]) K2 D1. 4 7 8 S नृत्यन्निव; K3-5 B1-3 D2 3. 6 ननर्त च, Dn1 ननर्ते च (for ननर्तेव) — [d]) D6 विधन्वानो, T2 G1-3 M1 3-5 विधून्वानो D6 G1 महाधनु° (for महद्धनु°)

29 [a]) D3 अथायसीं, D6 तस्यायसिं Ś1 Ko 1 हेमशक्तिं, D6 महाशक्तीं — [b]) T1 G1 3 4 चिक्षेप च M3 5 पितामह (for °मह°) — [c]) K3 हेमवेत्रां (for °चित्रां) T2 महाभोगा (for °वेगां)

30 [b]) K2 B Da Dn D4 5 7 8 सुदुर्जयां, K4 D1 दुरासदां, D6 सुतेजसां T1 G मृत्युकालो(G1-3 °कल्पो)-पमा शुभा — K3 5 D2 om (hapl.) 30[c]-32[b] — [c])

C 6 4759 B 6 104 32 K 6 104 32

अनासाद्य तु वार्ष्णेयं शक्तिः परमदारुणा ।
न्यपतद्धरणीपृष्ठे महोल्केव गतप्रभा ॥ ३१
वार्ष्णेयस्तु ततो राजन्स्वां शक्तिं घोरदर्शनाम् ।
वेगवद्गृह्य चिक्षेप पितामहरथं प्रति ॥ ३२
वार्ष्णेयभुजवेगेन प्रणुन्ना सा महाहवे ।
अभिदुद्राव वेगेन कालरात्रिर्यथा नरम् ॥ ३३
तामापतन्तीं सहसा द्विधा चिच्छेद भारत ।
क्षुरप्राभ्यां सुतीक्ष्णाभ्यां सान्वकीर्यत भूतले ॥ ३४
छित्त्वा तु शक्तिं गाङ्गेयः सात्यकिं नवभिः शरैः ।
आजघानोरसि क्रुद्धः प्रहसञ्शत्रुकर्शनः ॥ ३५
ततः सरथनागाश्वाः पाण्डवाः पाण्डुपूर्वज ।
परिवव्रू रणे भीष्मं माधवत्राणकारणात् ॥ ३६
ततः प्रववृते युद्धं तुमुलं लोमहर्षणम् ।
पाण्डवानां कुरूणां च समरे विजयैषिणाम् ॥ ३७

इति श्रीमहाभारते भीष्मपर्वणि शततमोऽध्यायः ॥ १०० ॥

---

K2 4 B Da Dn D8 (marg sec m as in text) 4 5 7 8 M Cd व्यसयामास, D1 ध्वसयित्वा स, D6 G1-3 वचयामास (for ध्वसया°) — d) K1 महायश (for °शा)

31 K3 5 D2 om 31 (of v l 30) — a) B1 च (for तु) — b) D5 °दारुण (for °दारुणा) — c) T2 पपात (for न्यपतद्) G1 3 धरणीपृष्ठ — d) K2 B Da2 Dn D4 7 8 महाप्रभा, T1 G हत° (for गत°) Da1 D5 महोर(Da1 °रा)गसमप्रभा; T2 नभोल्केव नभश्च्युता

32 K3 5 D2 om 32ab (of v l 30) — b) K1 D1 M4 ता (for स्वां) K4 B D (except D1-3, 6) कनकप्रभां (for घोरदर्शनाम्) — c) D2 वेगविद्, M4 एकवद् (for वेगवद्) K4 वेगात्सगृह्य (for वेगवद्गृह्य)

33 a) D3 धार्णेय° (for वार्ष्णेय°) — b) K3 4 T1 G प्रमुक्ता, K5 D2 6 प्रयुक्ता, D1 प्रनुन्ना (for प्रणुन्ना) K4 स (for सा) D1 G2 महारणे, T1 G3 4 °रवा, T2 °जवा, G1 °वरा (for °हवे) — d) Some S MSS काळरात्रिर् K5 यथानल, D6 यथेतरा (for यथा नरम्)

34 a) K2 Da1 तम् (for ताम्) T2 M चिच्छेद (for सहसा) — b) D2 त्रिधा (for द्विधा) K2 4 B Dn1 D2 7 भारत (for °त) T2 M द्विधैव भरतर्षभ (M1, 3 5 °भ) — c) T2 M क्षुरप्रेण सुतीक्ष्णेन — d) Ś1 स्वान्वकीर्यत, Ko 3 सानुकी°, K4 B Da Dn D1 3-8 सा व्यशी° (B2 °सी°), K5 D2 सा विकी°, T1 G1 4 सा स्वकी°, G3 सात्यकी°, M1 (inf lin as in text) 3 5 सा व्यकी° (for सान्वकी°) K3-5 B D S (except T2 G2) Ca मेदिनीं (for भूतले) T2 सा व्यनिकत वै भुवि (sic), G2 सा क्षितौ स्वत्रकीर्यत

35 a) K1 छित्वा, B1 M4 भित्त्वा (for छित्त्वा) B2-4 Dn2 D7 शक्तिं तु (by transp) — b) G1 सात्यकिर् B1 बहुभि° (for नवभि°) K1 शरै° (for शरै°) — d) Ś1 Ko-2 B2-4 °कर्पण; D5 °कर्शन, D6 8 °कर्षन, Ca °कर्शन° (as in text)

36 a) D6 सनरनागाश्वा — b) D1 सर्वे ते (for पाण्डवा) K3 T2 G4 M1 पाडुपूर्वज°, K4 B1 2 4 Da1 Dn1 D1 M2 °पूर्वजा°, B3 D2 3 5 G3 °पूर्वज, G1 damaged — c) K1-3 Da D3 5-8 परिवव्रु (for °व्रू) — d) K5 सात्वत (for माधव) D6 M2 माधवस्त्रा(M2 °प्रा)णका°. Ca cites माधवत्राण.

37 b) K3 5 Da1 D2 3 5 6 तुमल (K3 °ळ) Ko 2 S रोमहर्षणं — d) K3 5 D2 सग्रामे (for समरे) G2 विजिगीषिणा (for विजयै°)

Colophon — *Sub-parvan* Omitting sub-parvan name, Ś1 Ko-2 5 mention only नवमे युद्धदिवसे, K3 नवमेहनि, K4 B3 Da Dn1 D5 नवमेह्नि (to it B3 adds सग्रामे); D2 नवमे, D6 नवमयुद्धदिवसे, T2 नवमदिवसे, M4 नवमेह्निके — *Adhy name* K4 सकुलयुद्ध, T2 M1-3 5 सुशर्म(T2 °र्मा)पराजय° (T2 °य) — *Adhy no* (figures, words or both) Dn2 T1 G 100 (as in text), Da2 (sec m) 61, D6 99, T2 M3 4 102, M1 2 101, M5 103 — *Śloka no* Dn1 22, Dn2 37, D5 38, D8 36

## १०१

संजय उवाच ।

दृष्ट्वा भीष्मं रणे क्रुद्धं पाण्डवैरभिसंवृतम् ।
यथा मेघैर्महाराज तपान्ते दिवि भास्करम् ॥ १
दुर्योधनो महाराज दुःशासनमभाषत ।
एष शूरो महेष्वासो भीष्मः शत्रुनिषूदनः ॥ २
छादितः पाण्डवैः शूरैः समन्ताद्भरतर्षभ ।
तस्य कार्यं त्वया वीर रक्षणं सुमहात्मनः ॥ ३
रक्ष्यमाणो हि समरे भीष्मोऽस्माकं पितामहः ।
निहन्यात्समरे यत्तान्पाञ्चालान्पाण्डवैः सह ॥ ४
तत्र कार्यमहं मन्ये भीष्मस्यैवाभिरक्षणम् ।
गोप्ता ह्येष महेष्वासो भीष्मोऽस्माकं पितामहः ॥ ५
स भवान्सर्वसैन्येन परिवार्य पितामहम् ।
समरे दुष्करं कर्म कुर्वाणं परिरक्षतु ॥ ६
एवमुक्तस्तु समरे पुत्रो दुःशासनस्तव ।
परिवार्य स्थितो भीष्मं सैन्येन महता वृतः ॥ ७
ततः शतसहस्रेण हयानां सुबलात्मजः ।
विमलप्रासहस्तानामृष्टितोमरधारिणाम् ॥ ८
दर्पितानां सुवेगानां बलस्थानां पताकिनाम् ।

C 6.4775
B 6.105.9
K 6.105.9

## 101

1 $^a$) K5 तया (for दृष्ट्वा) — $^b$) M2 अपि (for अभि॰) — $^c$) M महा (for यथा) — $^d$) Da1 दिवि भास्करे, M तपन यथा T2 तपतमिव भास्करं

2 $^a$) K1 महाराजो, G2 ॰राजा (for ॰राज) — $^b$) K1 अभाषते, G2 क्षयाब्रवीत् (for अभाषत) — Before 2$^{cd}$, D6 ins दुर्योधन उवाच — $^c$) T2 M भीष्मो (for शूरो) — $^d$) T2 M शूर॰ (for भीष्म॰) Ś1 K0-2 D6 M4 शत्रुनिसूदन, K4 B D7 शूरनिसू॰, D4 8 शूरनिषू॰; M1-2 शत्रुविकर्शन॰; M5 शत्रुविकर्तन॰ (for ॰निषूदन॰) K3 D2 भीष्मोस्माक महारथ॰

3 D2 om 3-5 — $^a$) Ś1 K1 शूर॰ — $^b$) G2 सम तैर् (for समन्ताद्) — $^c$) G2 कार्या (for कार्यं) Ś1 K0 1 D2 8 शूर, G3 वीरा (for वीर) — $^d$) K2 स महात्मान, K3 च महात्मन, M1 3 5 सुमहा त्मना

4 D2 om 4 (cf v 1 3) — $^a$) T2 [ऽ]भि (for हि) — $^b$) Ś1 K0 1 D1 [ऽ]स्माभि॰, B1 लोक॰ (for ऽस्माकं) K5 महारथ॰, D1 महामना (for पिता॰) — K5 om (hapl) 4$^c$-5$^d$ D4 om 4$^{cd}$ — $^c$) T1 G1 3.4 निहंति (for निहन्यात्) D1 8 T2 सर्वान्, D3 यत्ता (marg sec m यत्तात्), G1 3 यत्नात् (for यत्तान्) — $^d$) K4 B2-4 M1 2 4 पचालान् (for पाञ्चालान्) D1 सह पांडवै॰ (by transp), T2 M सह सोमकै॰

5 K5 D2 om 5 (cf v 1 4, 3) — $^a$) S तस्य (T2 तच्च) (for तत्र) B Dn2 D3 4 7 8 कार्यतम, Da1 Dn1 (orig) ॰मिम, Da2 Dn1 m D5 ॰मिद (for ॰महं) — $^b$) D1 हि (for [अ]भि॰) — K3 om 5$^{cd}$. — $^c$) G2 गुप्तो ह्येषो B3 महाभागो (for महे ष्वासो) — $^d$) B1 3 4 D (except D1-3. 6) महाव्रत॰, B2 अनुव्रत॰, T1 G विशेषत॰, M महाबल॰ (for पितामह॰)

6 $^a$) D1 तद् (for स) T2 ह वान् (for भवान्) D1 G2 सह (for सर्व॰) — $^b$) K2 पितामह; M4 महाव्रत (for पितामहम्) — $^c$) B D (except D1-3 6) समरे कर्म कुर्वाण — $^d$) B D (except D1-3 6) दुष्कर (for कुर्वाणं) B3 परिरक्षत, D1 रक्ष मानद, D6 परिरक्षितु, S ॰पालय

7 Before 7, D6 ins सजय उवाच — $^a$) K0-2 D2 स (for तु) K4 B Da Dn D4 5 7 8 स एव मुक्त॰ समरे — $^c$) G3 परिवार्यस् K3 D2 6 G3 ततो, B1 2 रणे (for स्थितो) — $^d$) G2 स सैन्येन महाव्रत

8 $^a$) M1-3 5 वृत॰ (for तत॰) K0 2 3 शर (for शत) Ś1 K0-2 सहस्राणि, K4 B Da2 Dn D4-7 ॰सहस्राणा, D8 ॰सहस्रैस्तु (for सहस्रेण) — $^b$) Ś1 K0-2 सादिना (for हयाना) K1 T2 सुबलात्मजा॰ — $^c$) Da1 corrupt — $^d$) K3 D2 T G3 4 यष्टि॰, D1 दृष्टि, D3 हृष्टि; G2 ऋषि॰ (for ऋष्टि) D3 तोमरधारिण, T2 तोमरधारिण॰

9 $^a$) D8 वर्मिताना, M2 दसिताना (for दर्पि॰)

C 6 4775
B 6 105 9
K 6 105 9

शिक्षितैर्युद्धकुशलैरुपेतानां नरोत्तमैः ॥ ९
नकुलं सहदेवं च धर्मराजं च पाण्डवम् ।
न्यवारयन्नरश्रेष्ठं परिवार्य समन्ततः ॥ १०
ततो दुर्योधनो राजा शूराणां हयसादिनाम् ।
अयुतं प्रेषयामास पाण्डवानां निवारणे ॥ ११
तैः प्रविष्टैर्महावेगैर्गरुत्मद्भिरिवाहवे ।
खुराहता धरा राजंश्चकम्पे च ननाद च ॥ १२
खुरशब्दश्च सुमहान्वाजिनां शुश्रुवे तदा ।
महावंशवनस्येव दह्यमानस्य पर्वते ॥ १३
उत्पतद्भिश्च तैस्तत्र समुद्भूतं महद्रजः ।
दिवाकरपथं प्राप्य छादयामास भास्करम् ॥ १४
वेगवद्भिर्हयैस्तैस्तु क्षोभितं पाण्डवं बलम् ।
निपतद्भिर्महावेगैर्हंसैरिव महत्सरः ।
हेषतां चैव शब्देन न प्राज्ञायत किंचन ॥ १५
ततो युधिष्ठिरो राजा माद्रीपुत्रौ च पाण्डवौ ।
प्रत्यघ्नंस्तरसा वेगं समरे हयसादिनाम् ॥ १६
उद्वृत्तस्य महाराज प्रावृट्कालेन पूर्यतः ।
पौर्णमास्यामम्बुवेगं यथा वेला महोदधेः ॥ १७

---

K2 B3. 4 Dn2 D8 सुवेशाना, B2 पुरोगानां, D1 सुयोधाना, D4 7 सुवेषाणा (for सुवेगाना). — b) T1 G4 पदातिना, T2 M तरस्विनां (for पताकिनाम्) — d) D1 सक्षिप्ताना, T2 उपेताश्च (for उपेताना) D1 गजोत्तमै, T1 G नरै सह (for नरोत्तमै) — After 9, T G M2 ins

401* नानाशस्त्रसमाकीर्णो युद्धायैवाभिदशित ।

[T2 नानाशस्त्रै, G3 नानायुद्ध- (for नानाशस्त्र-) T2 G3 समाकीर्णा T1 G [अ]भिदसित, T2 च दसिता, M2 सुदसिता (for [अ]भिदशित) ]

10 a) T2 नकुलः Da1 T2 सहदेवश्च — b) T1 G1. 3. 4 M धर्मपुत्र, T2 °पुत्रश् (for °राज) Ś1 K0–2 युधिष्ठिर; T2 च पांडव (for च पाण्डवम्). — c) K3 Da Dn1 D5 6 T1 G न्यवारयद्, T2 अवारयद् K2 4 B Dn2 D4 7 8 M4 नरश्रेष्ठान्, K3 D2 6 रणे श्रेष्ठान्, Da Dn1 D5 रथश्रेष्ठान्, D1 रथश्रेष्ठा, D3 M1 नरश्रेष्ठ, T G रथश्रेष्ठ (G4 by corr °ष्ठ) (for नरश्रेष्ठ) — d) K5 सुतं तव (for समन्तत)

11 Da Dn1 D5 om. 11[ab] — d) Da Dn1 D5 महारणे, D1 हि वारणे (for निवारणे) S शकुने प्रियकाम्यया

12 a) Ś1 प्रकृष्टैर्, D2 प्रहृष्टैर्, D3 प्रदिष्टैर्; G2 विसृष्टैर् (for प्रविष्टैर्) K4 महाभागैर्, M1–3 °राज (for °वेगैर्) — b) K0 D1 गरुत्माभिर्, K1 गरुत्माभ्दिर्, D3 मरुत्मद्भिर् (for गरुत्मद्भिर्) T2 M मरुद्भिरिव सयुगे — c) Da1 खुराहुता, M2 3 पुराहता (for खुराहता) D1 च राजेंद्र; T1 रथा राजश् (for धरा राजश्)

13 a) K5 D1 G1 °शब्दस्तु, G3 °शब्दे तु (for °शब्दश्च) Da1 M2 सुमहा (for °हान्) — b) Da1 Dn1 D5 शुशुभे, D1 शुश्रुवुस् (for शुश्रुवे). — c) T2 निशि (for महा-) — d) T1 G1 3 4 M1 3–5 सर्वश (M5 °त) (for पर्वते)

14 a) T2 ते (for तैस्) — b) Ś1 K2 4 5 B Dn2 D1–4 6–8 T G1 3 4 समुद्धूत, K0 समुद्धूतो; Da1 समुद्धत (for समुद्भूत) K5 D6 महारज. K1 समुद्भूतो महद्रज, K3 समुद्भूतमहारज, G3 सुमहद्भ्न्महद्रज — c) K2 5 B1 3 Dn2 D1–4 7 8 S (except T2 M4) °रथ, Ca °पथ (as in text)

15 a) K5 G3 हतैस्, D1 ततस् (for हयैस्). K3 तेपु, K4 T2 M तत्र (for तैस्तु) — b) B Da Dn D4 5 7 8 क्षोभिता पांडवी चमू — c) S (except G2) प्रविशद्भिर् (for निपतद्भिर्) — d) T2 मत्स्यैर् (for हसैर्) K0 महात्मन (for महत्सर) — e) Ś1 हेषिताना च, K0–2 हे(K2 है)षताना च, T1 G1 3 4 हेषणेनैव (for हेषता चैव) — f) D2 6 S (except M2) प्रज्ञायत (for प्राज्ञा°) — After 15, T G ins..

402* अन्तर्दधे महाञ्शब्दस्तेन शब्देन मोहित ।

[T2 महाशब्दस् (for महाञ्शब्दस्) ]

16 b) K3 माद्रिपुत्रौ T2 M2 भारत; M1 3–5 भ्रातरौ (for पाण्डवौ) — c) Da Dn1 D5 अत्यघ्नस् (for प्रत्यघ्नस्) K3 वेगात् (for वेगं)

17 T2 om (hapl) 17–18 — a) K0 3 Da2 Dn1 D1–3 M उद्धूतस्य, K1 उद्धतस्य, K2 5 T1 G उद्भूतस्य, B1 उत्सृतस्य, Da1 उद्धुत्तस्य; D5 उधूतस्य (for उद्वृत्तस्य) — b) Ś1 प्रवृष्टिलेन पूर्यत (sic), K3–5 B D प्रावृट्काले(K3 °ला)षि(K4 B3 Dn2 D4

ततस्ते रथिनो राजञ्शरैः संनतपर्वभिः ।
न्यकृन्तन्नुत्तमाङ्गानि कायेभ्यो हयसादिनाम् ॥ १८
ते निपेतुर्महाराज निहता दृढधन्विभिः ।
नागैरिव महानागा यथा स्युर्गिरिगह्वरे ॥ १९
तेऽपि प्रासैः सुनिशितैः शरैः संनतपर्वभिः ।
न्यकृन्तन्नुत्तमाङ्गानि विचरन्तो दिशो दश ॥ २०
अत्यासन्ना हयारोहा ऋष्टिभिर्भरतर्षभ ।
अच्छिनन्नुत्तमाङ्गानि फलानीव महाद्रुमात् ॥ २१

ससादिनो हया राजंस्तत्र तत्र निषूदिताः ।
पतिताः पात्यमानाश्च शतशोऽथ सहस्रशः ॥ २२
वध्यमाना हयास्ते तु प्राद्रवन्त भयार्दिताः ।
यथा सिंहान्समासाद्य मृगाः प्राणपरायणाः ॥ २३
पाण्डवास्तु महाराज जित्वा शत्रून्महाहवे ।
दध्मुः शङ्खांश्च भेरीश्च ताडयामासुराहवे ॥ २४
ततो दुर्योधनो दृष्ट्वा दीनं सैन्यमवस्थितम् ।
अब्रवीद्भरतश्रेष्ठ मद्रराजमिदं वचः ॥ २५

C. 6 4732
B. 6 105 26
K 6 105 26

---

7 8 °ति)पूर्यत, S (T2 om.) प्रावृषीव महोदधेः — c) Ś1 K0 M3 पौर्णमस्याम्, K3 5 Da1 D2 5 पूर्णमास्याम्, D8 पूर्णिमा°. — d) K5 महोदय (for °दधे) T1 G4 वेलेव हयसादिना, G1-3 M1 3-5 यथा वेला दधार ह.

18 T2 om 18 (cf. v l 17) — a) Da1 रथिना, D4 रथिनां (for °नो) K3 राजा (for राजन्) — c) Ś1 K0 न्यकृतन्, K3 निकृतति, Da1 D6 न्य कृतन्, D1 न्यकृंतत, D2 न्यकृतति — Ś1 K0 1 om. (hapl.) 18d–20c — d) K2 4 B Da Dn D4 5 7 8 शरेण, D1 हयेभ्यो (for कायेभ्यो)

19 Ś1 K0 1 om. 19 (cf. v l 18) — b) K5 निदहं, M1 3. 5 निहत (for °ता) T1 G °धन्विन, M3 °धन्वभि (for °धन्विभि) — D5 om (hapl) 19c–20b — c) T1 G4 नाग इव (for नागैरिव) T1 G4 महानागैर्, T2 G1-3 M नगा इवैर् — d) K2 B Da Dn D4 7 8 यथावद्, K4 यथास्य (for यथा स्युर्)

20 Ś1 K0 1 om. 20abc, D5 om. 20ab (cf v l. 18, 19) — a) D1. 8 तत (for तेऽपि) D1 तु (for सु-) — b) T1 G4 नरा (for शरैः) D3 शरैश्च नतपर्वभि, G1-3 नराणा नतपर्वभि — c) K3 D2 निकृतन्, D1 न्यकृंतत, D6 न्यकृतन् K3 निकृतान्युत्तमागानि — d) G2 विचरति K5 दशो दिश, Da1 दिश दिश, D2 दिशो दिश

21 D1 om 21 — a) K4 B Da Dn2 D6 8 T G अभ्याहता, Dn1 अत्याहता, D2 अत्यासन्न, D3 अहन्यंत, D4 5 7 अभ्याहता (for अत्यासन्ना). — D5 om from 21b up to हया in 22a — b) K3 रुपिभिर्, K3 D2 रिष्टिभिर्, S शक्तिभिर् (for ऋष्टिभिर्) — c) K3 5 D2 अच्छिदन्, K4 B Da Dn D3-5 7 8 अत्यजन्, T1 G1 3. 4 असृजन्, T2 अजघ्नन्, G2 अकृतन्, M अभ्यघ्नन् (for अच्छिनन्) D2 तूत्तमांगानि — d) K4 B Da Dn D3-5 7 8 T1 G1. 3 4 महा(Da1 °ह)द्रुमा, M °द्रुमे (for °द्रुमात्)

22 D5 om up to हया in 22a (cf v l 21) — a) K5 Da1 D5 हयारोहास् (for हया राजस्) T1 G ते निपेतुर्महाराज — b) Ś1 K0-2 4 B D1 M निसूदिता (K1 °दिन) — c) Dn2 D2 4 7 8 पातिता D1 पात्यमानास्तु, M2 °मानश्च — d) K2 3 5 B Da Dn D2 4-8 S प्रत्यदृश्यत सर्वशः (K3, 5 D2 6 T2 M सवश, T1 G भारत), D1 प्रादुश्चकुश्च सर्वशः

23 a) K4 ते च; B Da Dn D4. 5 7 8 चैव (B3 चापि), D1 8 तत्र (for ते तु) — b) D6 प्रद्रवत; M2 3 5 प्रा(M3 प्र)द्रवतो K3 हयार्दिता — c) K3-5 B D (except D3) T1 G M4 सिंहं, T2 सिंह (for सिंहान्) — d) K1 Da1 प्राणपरायण (for °यणा) — After 23, D3 ins

403* एव तु सौवल सैन्य प्रभग्न सर्वतोदिशम् ।

24 a) K2 4 B D (except D1-3) S (except T2 M4) च (for तु) G1 3 महाराजन् (for °राज) — b) Dn2 D3 T G महामृधे (for °हवे) — c) K1 lacuna, Da D1. 3 6 M1 3. 5 भे(D1 6 भै)र्यश्च, D2 भेराश्च (for भेरीश्च) — d) Ś1 K0 1 5 D2 3 वाद- (K1 om द, K5 पीड)यामासुराहवे, D1 ताड्यमाना परस्पर

25 M3. 5 om 25a–26b — a) K3 B Da Dn D4 5 7 8 M1 2 4 दीनो, K3 5 D1 6 राजा; T2 हीनो (for दृष्ट्वा) — b) Ś1 दीना, K2 3 5 B Da Dn D1. 4-8 T2 M1. 2 4 दृष्ट्वा (for दीनं) K3 5 B Da Dn D1 4-8 T2 M1 2 4 सैन्य पराजित — For 25, D2 subst.

404* उवाच मद्राधिपतिं राजा दुर्योधनस्तदा ।

C. 6 4792
B. 6 105 26
K. 6 105 27

एष पाण्डुसुतो ज्येष्ठो जित्वा मातुल मामकान् ।
पश्यतां नो महाबाहो सेनां द्रावयते बली ॥ २६
तं वारय महाबाहो वेलेव मकरालयम् ।
त्वं हि संश्रूयसेऽत्यर्थमसह्यबलविक्रमः ॥ २७
पुत्रस्य तव तद्वाक्यं श्रुत्वा शल्यः प्रतापवान् ।
प्रययौ रथवंशेन यत्र राजा युधिष्ठिरः ॥ २८
तदापतद्वै सहसा शल्यस्य सुमहद्बलम् ।
महौघवेगं समरे वारयामास पाण्डवः ॥ २९
मद्रराजं च समरे धर्मराजो महारथः ।
दशभिः सायकैस्तूर्णमाजघान स्तनान्तरे ।
नकुलः सहदेवश्च त्रिभिस्त्रिभिरजिह्मगैः ॥ ३०
मद्रराजोऽपि तान्सर्वानाजघान त्रिभिस्त्रिभिः ।
युधिष्ठिरं पुनः षष्ट्या विव्याध निशितैः शरैः ।
माद्रीपुत्रौ च संरब्धौ द्वाभ्यां द्वाभ्यामताडयत् ॥ ३१
ततो भीमो महाबाहुर्दृष्ट्वा राजानमाहवे ।
मद्रराजवशं प्राप्तं मृत्योरास्यगतं यथा ।
अभ्यद्रवत संग्रामे युधिष्ठिरममित्रजित् ॥ ३२
ततो युद्धं महाघोरं प्रावर्तत सुदारुणम् ।
अपरां दिशमास्थाय द्योतमाने दिवाकरे ॥ ३३

इति श्रीमहाभारते भीष्मपर्वणि एकाधिकशततमोऽध्यायः ॥ १०१ ॥

---

26 D2 M3 5 om 26[ab] (for M3 5, cf v l 25) —[a]) T2 एष मातुल पाडोस्तु —[b]) K3-5 D1 6 M1 2 4 जित्वा मातुलमाहवे, B Da Dn D4 5 7 8 यमाभ्यां सहितो रणे, D3 T1 G एष मातुल मे (D3 ते) बल, T2 सुतो ज्येष्ठो महाहवे —[c]) B4 Dn2 D4 6-8 चो (for नो) K5 T1 G महाराज (for °बाहो) D1 पश्यतां सर्वसैन्याना —[d]) K5 G3 सेना, D1 सैन्य (for सेनां) K3 द्रावयतो, K4 B D (except D1-3) द्रावयति K3 5 D2 बलात्, K4 B D (except D1 3) प्रभो (for बली).

27 Da Dn1 D5 om. 27[ab] —[a]) T2 M महाराज (for °बाहो) —[c]) K3 D2 संस्तूयसे; D1 M1-3 न श्रेयसे; T2 ख्यातो रणे, G1-3 सश्रूयते, M4 निश्रेयसे, M5 न श्रूयसे (for सश्रूयसे) D1 T2 M नित्यम्, T1 G4 [ऽ]त्यतम्; G1 सह्यम्; G2 3 सत्यम् (for ऽत्यर्थम्) —[d]) Ś1 K0 1 अशक्य, D1 समग्र (for असह्य) D5 विक्रम, T2 -विक्रम (for -विक्रम)

28 [b]) B2 श्रुत्वा मद्रेश्वरो बली —[c]) K4 B4 D (except D1 2 6) स (for प्र)

29 M2 5 om (hapl) 29[a]-30[b] —[a]) Da Dn1 D5 तत्रापतद्वै, T2 M4 तमापतत, M1 3 तदापतंत Ś1 K0 1 समरे (for सहसा) —[b]) D1 च महद्, T1 G वचनाद् (for सुमहद्) D3 शाल्यस्य सुमह ज्वलं (sic), T2 सशल्यं सुमहाबलं —[c]) D1 आयांत मातुल वीक्ष्य, S (M2 5 om) महौघमिव शैलेंद्रो, Cv as in text —[d]) Ś1 पांडवै, K1 पाडवा; M3 पांडव (for पाण्डव)

30 M2 5 om 30[ab] (cf. v l 29) —[a]) K5 D1 2 तु (for च) —[b]) T2 M1 3 4 धर्मपुत्रो (for °राजो) B2 D1 महाबल, S (M2 5 om.) युधिष्ठिर (for महारथ) —[f]) K4 B Da Dn D4 5 7 8 त सप्तभिर्, D6 त्रिभिर्बाणैर् (for त्रिभिस्त्रिभिर्) D2 अजिह्मकै

31 [a]) T2 मद्रेश्वरो (for मद्रराजो) —[b]) D2 निजघान (for आज°) —[c]) D1 तत, D3 पुर (for पुन) K5 श्रेष्ठ (for षष्ट्या) —[d]) T1 G4 विव्याथ —[e]) K3 D2 T2 सु; M4 [अ] (for च) K4 B Da Dn D4 5 7 8 सभ्रातौ (for संरब्धौ) —[f]) K1 corrupt

32 [a]) K3 D2 महाबाहो (for °बाहुर्). —[b]) Dn2 °रथं (for °वश) D7 प्राप्य; G3 प्राप्ता (for प्राप्त) —[c]) K1-3 5 B D T2 M1-3. 5 अभ्य(Dn2 °भि)पद्यत, K4 °पतत (for °द्रवत) —[f]) T1 G मद्रराजममित्रहा· — After 32, S ins

405* आपतन्नेव भीमस्तु मद्रराजमताडयत् ।
सर्वपारशवैस्तीक्ष्णैर्नाराचैर्मर्मभेदिभि ।
ततो भीष्मश्च द्रोणश्च सैन्येन महता वृतौ ।
राजानमभ्यपद्येतामञ्जसा शरवर्षिणौ ।

[(L. 2) T2 G2 3 M5 सर्प- (for सर्व) —(L 3) G3 ततो भीष्म च द्रोण च — After line 3, G3 ins
406* धृष्टद्युम्नस्त्रिभिर्विद्ध्वा राजानमभ्यपद्यत ।
— (L 4) G3 पुनस्तावभ्यपद्येताम् (for the prior half). M अभिपेततू राजान (M2 राजानमभ्यपद्येतां) मद्राधिपतिमजसा .]

# १०२

संजय उवाच ।
ततः पिता तव क्रुद्धो निशितैः सायकोत्तमैः ।
आजघान रणे पार्थान्सहसेनान्समन्ततः ॥ १
भीमं द्वादशभिर्विद्ध्वा सात्यकिं नवभिः शरैः ।
नकुलं च त्रिभिर्बाणैः सहदेवं च सप्तभिः ॥ २
युधिष्ठिरं द्वादशभिर्बाह्वोरुरसि चार्पयत् ।
धृष्टद्युम्नं ततो विद्ध्वा विननाद महाबलः ॥ ३
तं द्वादशार्धैर्नकुलो माधवश्च त्रिभिः शरैः ।
धृष्टद्युम्नश्च सप्तत्या भीमसेनश्च पञ्चभिः ।
युधिष्ठिरो द्वादशभिः प्रत्यविध्यत्पितामहम् ॥ ४
द्रोणस्तु सात्यकिं विद्ध्वा भीमसेनमविध्यत ।
एकैकं पञ्चभिर्बाणैर्यमदण्डोपमैः शितैः ॥ ५
तौ च तं प्रत्यविध्येतां त्रिभिस्त्रिभिरजिह्मगैः ।
तोत्त्रैरिव महानागं द्रोणं ब्राह्मणपुंगवम् ॥ ६

C 6 4809
B 6 106 7
K 6 106 6

---

33 $^{a}$) Da1 महो घोरं, D1 महाराज (for °घोरं) — $^{b}$) K2 प्रवर्तत (for प्रा°) — $^{c}$) K5 Da1 D5 6 दिशिम् (for दिशम्) T1 G साश्रित्य (for आस्थाय) — $^{d}$) K3. 5 B Da1 Dn1 D1-4 7 8 तपमाने, K4 Da2 Dn2 D5 Ca पत°, D6 तप्य°, T2 M लव° (for घोत°)

Colophon om in Ś1 Ko 1 — *Sub-parvan* Omitting sub-parvan name, K4 Da Dn1 D5 mention only नवमेह्नि, K5 नवमे युद्धदिवसे, B3 नवमेह्नि सम्रामे, D2 नवम, D6 नवमदिवसयुद्ध, T1 G2 4 नवमदिवस, M4 नवमेह्निके — *Adhy name* D6 गाधारसैन्यपराजय°, T1 G3 4 युधिष्ठिरयुद्ध, T2 M1-3. 5 युधिष्ठिरशल्ययुद्ध — *Adhy no* (figures, words or both) K5 94, Dn2 T1 G 101 (as in text), Da2 (*sec. m*) 62, D6 100, T2 M3 4 103, M1. 2 102, M5 104 — *Śloka no* Dn2 35, D5 33

## 102

1 $^{a}$) Ko 2 तव पिता (by transp), K5 D1. 2 6 T G M1 पितामह — $^{d}$) K3 महत्सैन्यान्, K5 D1. 2 3 T1 G4 सहसैन्यान् T1 G परतप (G1. 3 °तप) (for समन्तत)

2 $^{a}$) D8 भीष्म (for भीमं) M2 च दशभिर् (for द्वाद°) K1 भीष्मद्वामृपिभिर्विध्वा (corrupt) — D2 om. (hapl) $2^{b}$–$3^{a}$, M2 om $2^{b}$–$3^{a}$ — $^{c}$) K4 B D (except D1 3, D2 om) विद्धा (for बाणै) — $^{d}$) B2 3 D3 T1 G2 4 पचभि (for सप्तभि)

3 D2 om. $3^{abc}$, M2 om. $3^{a}$ (cf v l 2) — $^{a}$) Ś1 Ko 1 3 D1 3 च नवभिर् (for द्वादशभिर्) — $^{b}$) D5 बाहो° (for बाह्वो°) Ś1 Ko चार्द° (for चार्प°) — After $3^{ab}$, T G4 *repeat* line 2, while G1-3 *repeat* lines 2–3 (with v l) of 405* — $^{c}$) K4 Da1 G1-3 धृष्टद्युम्नस्, M2 °द्युम्ने (for °द्युम्न) S त्रिभिर् (for ततो) K4 दृष्ट्वा (for विद्ध्वा) — $^{d}$) K3 4 B Da Dn D4 5 7 8 S (except T2) ननाद सुमहाबल°, D1 स ननाद महामना — After 3, T1 G4 *repeat* line 3 of 405*

4 $^{a}$) Ko 1 द्वादशारैर्, K2-5 B Da Dn D2 4-8 M Ca. c °शाख्यैर्, D1 T2 °शभिर्, D8 °शाक्षैर् (for °शार्धैर् as in Ś1) T1 G नकुल° पंचविंशत्या — After $4^{ab}$, K4 D1. 3 M ins

407* सहदेवश्च सप्तत्या पार्थश्च नवभि° शरै° ।

— $^{c}$) K1 धृष्टद्युम्न च, B1. 3 4 T G सहदेवश्च. — $^{d}$) K4 B D (except D1-3) सप्तभि° (for पञ्चभि°) D2 *repeats* $4^{cd}$ with v l सहदेवश्च (for धृष्टद्युम्नश्च)

5 $^{a}$) K4 5 D1 च (for तु) M5 सात्यकं D1 दृष्ट्वा (for विद्ध्वा) — After $5^{a}$, Da Dn1 D5 ins

408* निशितैर्नवभि° शरै° ।
नकुल च त्रिभिर्विद्ध्वा

[ (L. 2) Da2 D5 त्रिधा (for त्रिभिर्) ]

— $^{b}$) T1 G M2 भीमसेनमुखानपि, T2 M1. 3-5 भीमसेनमताडयत् — $^{d}$) K5 शातै°, T1 G4 शुभै° (for शितै°) D6 यमदण्डोपमै सितै°, T2 यमदण्डैरिवाहनत्

6 $^{a}$) T G M2 ते च (for तौ च) Ś1 K1 ता; K5 D2 3 स, M2 [अ]पि (for तं) K5 Da2 Dn2

C 6 4808 B 6.108 7 K 6 103 7

सौवीराः कितवाः प्राच्याः प्रतीच्योदीच्यमालवाः ।
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ।
संग्रामे नाजहुर्भीष्मं वध्यमानाः शितैः शरैः ॥ ७
तथैवान्ये वध्यमानाः पाण्डवैर्महात्मभिः ।
पाण्डवानभ्यवर्तन्त विविधायुधपाणयः ।
तथैव पाण्डवा राजन्परिवव्रुः पितामहम् ॥ ८
स समन्तात्परिवृतो रथौघैरपराजितः ।
गहनेऽग्निरिवोत्सृष्टः प्रजज्वाल दहन्परान् ॥ ९
रथाग्न्यगारश्चापार्चिरसिशक्तिगदेन्धनः ।
शरस्फुलिङ्गो भीष्माग्निर्ददाह क्षत्रियर्षभान् ॥ १०
सुवर्णपुङ्खैरिषुभिर्गार्ध्रपक्षैः सुतेजनैः ।
कर्णिनालीकनाराचैश्छादयामास तद्बलम् ॥ ११
अपातयद्ध्वजांश्चैव रथिनश्च शितैः शरैः ।
मुण्डतालवनानीव चकार स रथव्रजान् ॥ १२
निर्मनुष्यान्रथान्राजन्गजानश्वांश्च संयुगे ।
अकरोत्स महाबाहुः सर्वशस्त्रभृतां वरः ॥ १३

D2 5 प्रतिविध्येतां, T G M3 प्रत्यविध्यत — c) M4 स्तोत्रैरिव (for तोत्रै°) M4 महानादं

7 a) K1 सौवीर°, Dn1 सौवीर (for सौवीरा°) Ś1 कितव°, K1 किवा (sic), D5 कितवै° (for कितवा°) K1 प्राश्या, D8 प्राच्या (for प्राच्या°) — b) K1 प्रतीश्योदीश्य, M4 प्रदीच्योदीच Ś1 Ko 1 मालका, most S MSS माळवा° (for -मालवा°) — c) Da1 D5 अभी(D5 °भि)पहो, D8 (before corr as in text) T1 G M अभीपहा (G3 °सा) (for °षाहा°) Da1 शूरसेना (for °सेना°) K3 5 D2 6 T2 क्षा(K3 क्ष)मीरा° सु(K5 D2 T2 शू)रसेनाश्च, D1 अभीरा शूरसेनाश्च — d) K3 4 B Da1 Dn D1 6 7 M1 3 शिवयोथ, T2 शिवायोथ B Dn2 D4 6 8 वशातय° (D6 °या°), D8 वसानय D2 शैब्येयाप्यवसातय° — e) T1 G M1-3 5 न जहुर्, T2 जघ्नतुर्, M4 विजहुर् (for नाजहुर्)

8 a) Da Dn1 D2 5 तथैवान्यैर्, D1 तथैव ते K4 B Dn2 D4 6-8 महीपाला°, T2 बाध्यमाना° (for वध्यमाना°) — b) K5 D1 2 महारथै° (for °त्मभि°) K4 B Dn2 D4 6-8 नानादेशसमागता — c) T1 G4 अभ्यपद्यत, G2 3 °धावत (for °वर्तन्त) — d) Ś1 Ko-2 °युधधारिण, D6 °युद्धपाणय (for °युधपाणय°)

9 a) D1 स समंतात्सवृतो राजन् (hypermetric) — b) D8 रथौघैर् T1 G4 अभिवारि(G4 °र)त, T2 अपराजित (for °जित) K3 5 रथौघेन पराजित°, Da1 रथैरपपराजित, D2 रथौघैर्नपराजित°, D8 रथौघौघै पराजित — c) K5 महानग्निर्, D1 गृहानग्निर् (for गहनेऽग्निर्) Ko 2 इवोत्कृष्ट°, Da1 D5 इवासृष्ट°, T2 इवोत्सृष्ट — d) D1 परान्दहन् (by transp)

10 a) K2 रथाग्निगारश्, Da1 रथाङ्गागारश्, Dn2 D8 रथाग्न्यगारश्, D4 तथाग्न्यगार, D6 रथाग्न्यगार, T1 G4 रथांगार° स, T2 G1-3 M रथाश्वगार° (M5 °रश्) (for रथाग्न्यगारश्) Co cites रथा° (as in text) K3 D3 (marg sec m) Cop चापाग्निर्, K5 चापासिर्, D6 चापार्तिर् (for चापार्चिर्) D1 रथनागाश्वपत्त्यादि° (sic) — b) D1 शरशक्तिकृतेंधन, D6 T2 असि(T2 °थ)शक्तिगदेंधनै — c) K2 शरात्फुलिंगो, D2 शर° स्फुलिंगो Ko 1 भीष्मार्चिर्, K2 भीष्माभिर्, K3 भीष्मोग्निर्, D6 भीमाग्निर्, T1 टीक्षाग्निर् — d) D1 ददहे (for ददाह) K3 5 D2 क्षत्रियान्बहून्, K4 क्षत्रियान्युधि (for क्षत्रियर्षभान्) — After 10, S ins

409* यथा हि सुमहानग्नि° कक्षे चरति सानिल° ।
तथा भीष्मो महाराज दिव्यमस्त्रमुदीरयन् ।

[(L 1) G1 3 तु (for हि) M2 चानिल° (for सा°) ]

11 a) Ś1 °पुङ्गैर्, Da1 °पुषिर् (for °पुङ्खैर्) — b) K3 4 B2 D7 M4 गार्ध्रपत्रै°, Da1 Dn1 D2 4 गार्ध(or °र्द्ध)पत्रै, Da2 Dn2 D5 8 गार्ध(or °र्द्ध)पक्षै, D1 T G4 गृध्रपत्रै°, D8 ग्रावपत्रै, G1-3 M1-3. 5 गृध्रपक्षै Da1 सुतेजनि°, D1 2 °जसै (for °जनै) — c) D5 T2 G1 कर्ण° (for कर्णि°) Some MSS. °नाळीक° (for °नालीक°)

12 Ś1 Ko 1 om $12^{ab}$ — a) Dn2 अपातयन् K3 D2 भुजाश्चैव, B2 3 ध्वजाश्चापि — b) Da1 शीतै° (for शितै) — c) K1 D3 मंड°, K2 मुडा° (for मुण्ड°) Co cites मुड (sic) and ताल — d) S स चकार (by transp) Ś1 रथ ध्वजान्, Ko-2 D1 M4 रथध्वजान्, T1 G1 3 4 तथा ध्वजान्, M1-3 5 महाध्वजान् (for रथव्रजान्)

13 a) D6 भ्राजन् (for राजन्) — Da Dn1 D5 om (hapl) $13^{b}$-$16^{a}$ — b) Ś1 Ko 1 3 D3 गजा (K1 3 °जा)श्चाश्वांश्च, M1-3 5 नागाश्वाश्वांश्च — c)

तस्य ज्यातलनिर्घोषं विस्फूर्जितमिवाशनेः ।
निशम्य सर्वभूतानि समकम्पन्त भारत ॥ १४
अमोघा ह्यपतन्बाणाः पितुस्ते भरतर्षभ ।
नासज्जन्त तनुत्रेषु भीष्मचापच्युताः शराः ॥ १५
हतवीरांस्रथान्राजन्संयुक्ताञ्जवनैर्हयैः ।
अपश्याम महाराज ह्रियमाणान्रणाजिरे ॥ १६
चेदिकाशिकरूषाणां सहस्राणि चतुर्दश ।
महारथाः समाख्याताः कुलपुत्रास्तनुत्यजः ।
अपरावर्तिनः सर्वे सुवर्णविकृतध्वजाः ॥ १७
संग्रामे भीष्ममासाद्य व्यादितास्यमिवान्तकम् ।
निमग्नाः परलोकाय सवाजिरथकुञ्जराः ॥ १८
भग्नाक्षोपस्करान्कांश्चिद्भग्नचक्रांश्च सर्वशः ।
अपश्याम रथान्राजञ्शतशोऽथ सहस्रशः ॥ १९
सवरूथै रथैर्भग्नै रथिभिश्च निपातितैः ।
शरैः सुकवचैश्छिन्नैः पट्टिशैश्च विशां पते ॥ २०
गदाभिर्मुसलैश्चैव निस्त्रिंशैश्च शिलीमुखैः ।
अनुकर्षैरुपासङ्गैश्चक्रैर्भग्नैश्च मारिष ॥ २१
बाहुभिः कार्मुकैः खड्गैः शिरोभिश्च सकुण्डलैः । C. 6 4825 B. 6 106 24 K. 6 106 23

S ( except T2 M4 ) सुमहा° ( for स महा° ) — d) D1 घोर ( for सर्व ) K2 वर ( for वर )

14 K2 Da Dn1 D5 om 14 ( for Da Dn1 D5, cf v l 13 ) — a) K5 D2 °निर्वोषो, D1 °निर्घोष — b) S वि( M5 नि )ष्फूर्जितम् — c) M3. 5 निशाम्य D6 समभूतानि ( for सर्व° ) — d) K3 D2 8 M1–3 5 समकपत भारत

15 Da Dn1 D5 om 15 ( cf v l 13 ) — a) Ko–2 ह्यसवन्, K5 न्यपतन्, D1 T1 G चा( G3 च )पतन्, D3 ह्यपतद्, T2 व्यपतन्, M3 ह्यचरन् ( for ह्यपतन् ) — b) Ś1 Ko–2 5 पेतुस्ते, S सयुगे ( for पितुस्ते ) D1 भरतोत्तम ( for °तर्षभ ) — c) K4 असज्जत, B2 मा सज्जत, D6 नासज्जत, D8 न सज्जत, T G3 4 M1 4 नासज्यत — d) Ś1 शरै ( for शरा ) K1 भीष्मचापच्युत शर

16 Da Dn1 D5 om $16^a$ ( cf v l 13 ) — a) T1 G अथ ( for हत- ) D4 हता, G1–3 रणे ( for रथान् ) — b) Da1 सप्रयुक्तान् ( hypermetric ), D1 सम्पक्तान् B2 कवचैर् ( for जवनैर् ) — c) K4 damaged D1 G2 रणे राजन् ( for महाराज ) — d) T1 G4 म्रियमाणान, T2 ह्रियमाणा, G2 म्रवमाणान् Ś1 Ko–2 G2 महारणे ( for रणाजिरे ) — After 16, D1 ins

410* मत्स्यपाञ्चालकैकेयान्पातयामास सयुगे ।

17 a) Da1 चेदिकाशी, D1 चेदिकाथ- ( for चेदिकाशि ) Da1 -कुरूपाणा, S -करूशाना ( for -करूपाणा ) — c) Da1 महारया, S °रथ ( for °रथा ) — d) D6 M5 कुलपुत्रस् ( for °पुत्रास् ) D6 G2 तनुत्यजा

18 b) Ś1 व्याधितस्यम्, K1 ग्रादितास्यम्, T2 व्यादितास्य ( for °स्यम् )

19 a) Dn1 भग्नाक्षेपस्करान्, D1 भग्नाश्वोप°, D2 भग्नाख्योप°, D6 भग्नाक्षोम°, T1 G2 4 भग्नाक्षाव°, G1 3 भग्नाक्षाप°, M1 3 5 भग्नम्योप° ( for भग्नाक्षोप° ) T2 चैव ( for कांश्चिद् ) M4 भग्नध्वजोपस्कराश्च — b) K3–5 B1–3 D T2 M भारत, B4 T1 G मारिष ( for सर्वश ) — T2 om. ( hapl. ) $19^c$–$21^d$ — c) Ko–2 B Da Dn D4 5. 7 8 महाराज ( for रथान्राजन् ) — D1 om $19^d$–$20^a$

20 T2 om. 20, D1 om $20^a$ ( cf v l 19 ) T1 G4 om 20–21 — a) K5 G1–3 M रथयुगै ( for रथैर्भग्नै ) — b) D5 पथिभिश्च ( for रथि° ) D1 रथिभिरथ पातितै — c) K3 Da Dn1 D1–3 5 स- ( for सु ) K3 D7 8 छन्नै, K4 B1 Da2 D5 चि( K4 B1 छि )त्रै ( for छिन्नै ) Ś1 Ko 1 शरै सवसनैश्चक्रै, D4 शरै सुकवचच्छन्नै, S ( T G4 om ) अश्वैश्च कवचै श्छिन्नै — d) Ko 1 पटि( Ko °ट्टि )सैश्च, S ( T G4 om ) पट्टसैश्च ( for पट्टिशैश्च )

21 T G4 om 21 ( cf v l 19, 20 ) — a) Ś1 Ko मुसुलैश्चैव, K3 D3 6 मुशलैश्चैव, K4 B Da1 Dn1 D4 भिंदिपालैश्च, Da2 Dn2 D5 7 8 भिंडिपालैश्च, D1 मुशलै राजन्, D2 मुशलैर्बाणैर् ( for मुसलैश्चैव ) — b) K2 4 B D ( except D1–3 6 ) निशितैश्च ( for निस्त्रिंशैश्च ) D3 परस्वधै, D8 शितै शरै ( for शिलीमुखै ) G1–3 निस्त्रिंशैश्चैव भूपते — c) D1 सानुकर्षैर् ( for अनु° ) Da1 Dn1 उपांगैश्च, D1 पताकाभिश्, D2 अपासगैश् ( for उपा° ) — d) B1 भग्नैश्चक्रैश्च ( by transp ), D1 छत्रैश्छिन्नैश्च, G3 चित्रैर्भग्नैश्च ( for चक्रैर्भग्नैश्च ) S ( T G4 om ) भारत ( for मारिष ) K5 चक्रैर्भग्नैर्महारिषै ( sic ), D6 भग्नैश्च सुमहाध्वजै

22 a) Da1 D2 5 बहुभि ( for बाहुभि ) B1 चित्रै ( for खड्गै ) — b) K1 सहाकुलै ( for सकुण्डलै )

C 6 4825
B 6 103 24
K 6 106 23

तलत्रैरङ्गुलित्रैश्च ध्वजैश्च विनिपातितैः ।
चापैश्च बहुधा छिन्नैः समास्तीर्यत मेदिनी ॥ २२
हतारोहा गजा राजन्हयाश्च हतसादिनः ।
परिपेतुर्द्रुतं तत्र शतशोऽथ सहस्रशः ॥ २३
यतमानाश्च ते वीरा द्रवमाणान्महारथान् ।
नाशक्नुवन्वारयितुं भीष्मबाणप्रपीडितान् ॥ २४
महेन्द्रसमवीर्येण वध्यमाना महाचमूः ।
अभज्यत महाराज न च द्वौ सह धावतः ॥ २५
आविद्धरथनागाश्वं पतितध्वजकूबरम् ।
अनीकं पाण्डुपुत्राणां हाहाभूतमचेतनम् ॥ २६
जघानात्र पिता पुत्रं पुत्रश्च पितरं तथा ।
प्रियं सखायं चाक्रन्दे सखा दैवबलात्कृतः ॥ २७
विमुच्य कवचानन्ये पाण्डुपुत्रस्य सैनिकाः ।
प्रकीर्य केशान्धावन्तः प्रत्यदृश्यन्त भारत ॥ २८
तद्गोकुलमिवोद्भ्रान्तमुद्भ्रान्तरथकुञ्जरम् ।
ददृशे पाण्डुपुत्रस्य सैन्यमार्तस्वरं तदा ॥ २९

---

T2 शिरोभि सहकुण्डलै — c) Ko 5 तनुत्रैर् K1 अकुलित्रैश्च; K5 अगुलीयैश्च, Da1 अगुचित्रैश्च; Dn1 अंगुलत्रैश्च, D1 अगुलित्राणैर् (for अङ्गुलित्रैश्च) — d) K3 5 D2 भुजैश् (for ध्वजैश्) — e) K4 बाणैश्च (for चापैश्च) D1 बहुभिश्; D6 बहुलैश् (for बहुधा) — f) D2 समस्तीर्यं च, D8 समस्तीर्यत

23 a) D1 हयारोहान्गजारोहान्, S गजारोहा गजाश्चा (M3 4 °द्रा)जन् — b) Ko 1 हताश्च, D1 गजाश्च (for हयाश्च) Ś1 Ko–2 4 B Dn2 D1. 4 6–8 हयसादिन, Da Dn1 D5 गजसादिन, D2 हतसादिनं, D3 सह सादिभि (for हतसादिन) S हयाश्च (M1 हयाश्च; M3–5 हयाच) हयसादिन — c) T G4 अभिपेतुर्, G1–3 अति° (for परि°) Ś1 हतास्; Ko–2 हयास्; D6 जवास् (for द्रुतं) K4 B Da Dn D4 5 7 8 न्य(K4 ना)पतत गतप्राणा, D1 परिवव्रुर्द्रुत राजन्

☞ Stanzas 6 102 24a–52d recur (with occasional v l) as 6 55 34a–66b

24 = (var) 6 55 34 — a) T G पतमाना (for यतमानाश्) K3 5 Da2 Dn D1–3 [अ]पि, T G M4 हि (for च) Da1 पतमानपते वीरा (sic). — b) Ś1 Ko–2 D1 T G द्रवमाणा महारथा (K2 °थान्), M1 °माणान्महारथा — Ś1 Ko 1 om 24c–26b — c) K5 D1 2 न शेकुस्ते (for नाशक्नुवन्) D3 S धारयितुं (for वार°) — d) D1 T G °प्रपीडिता (T2 °त) (for °प्रपीडितान्)

25 = 6 55 35 Ś1 Ko 1 om 25 (cf v l 24) — b) K2 Da1 D6 महाचमू (for °चमू) D1 वध्यमानां महाचमू — c) K5 अभिद्यत, D1 अभज्यत, D2 अभिद्यत, D3 अभज्यत, G1 अवध्यत D6 महाभाग, T2 °राजन् (for °राज) — d) M4 द्वा (for द्वौ) K5 D3 G2 3 समधावत, T G1 4 सम(T2 सह)धावत (for सह धावत) D1 विद्रुता सर्वतो दिश

26 = (var) 6 55 36 K4 om (hapl) 26–27 Ś1 Ko 1 om 26ab (cf v l 24) — a) Da1 D2 5 आ(Da1 अ)विध्य, D3 आविद्ध, D6 आविद्ध, D7 M2 अविद्ध (for आविद्ध) Da1 रथनागाश्च, D1 नरनागाश्व-, T G M4 -रथनागाश्व- (for -रथनागाश्वं) — b) K2 B Da Dn D4–8 पतितध्वजसंकुलं, D1 पत्तिध्वजसमाकुलं; S पदातिध्वजकुञ्जरं (T1 G4 °बलसंकुल, M4 °ध्वजसकुल) — c) D1 अतुल विह्वल सैन्य — d) K1 हाहाभूतम्, S (except T2) हाहाकारम् (for °भूतम्) M2 अचेतम (for °नम्) D1 पाण्डवानामथाकरोत्

27 = 6 55 37 K4 om 27 (cf v l 26) — a) Ko [अ]थ; Da1 [अ]थ, S च (for [अ]त्र) — b) B1 यथा (for तथा) — c) D1 M2 प्रिय (for प्रिय) Ś1 Ko–2 M2 चाक्रन्दन्, K3 सक्रन्दे, D2 चक्रन्दे, T1 G4 M3 च(M3 चा)क्रन्द, T2 आक्रन्दत् (for चाक्रन्दे). — d) Dn2 (m as in text) D4–7 यथा (for सखा) K1 G2 देव, T1 G1 3 4 चैव (for दैव) D1 सखा चैव प्रिय तथा, D2 सखा दैवबलात्कृता

28 = (var) 6 55 38 — a) K4 M2 विमुक्त (for विमुच्य) — c) Da2 D5 केशा (for केशान्) K1 धार्यंत, K2 धार्यंत, G3 M5 धावंत (for °त) K4 प्रकीर्णकेशा धावत — d) K1 3. 5 D2 6 प्रत्यदृश्यत, T1 G M2 समदृश्यत, T2 M1 3–5 सप्रदृश्यत K3 B D (except D1–3 6) सर्वश (for भारत)

29 = (var) 6 55 39 — a) D1 हाहाकुलम्, T2 तत्कल्लोलम् (for तद्गोकुलम्) Ś1 K1–3 इवोद्भ्रात, G2 M इव भ्रातम् (for इवोद्भ्रान्तम्) — b) Ś1 Ko–2 -सत्रस्त, K3 -सभ्रातम् (for उद्भ्रान्त) K3 T2 इव

प्रभज्यमानं सैन्यं तु दृष्ट्वा यादवनन्दनः ।
उवाच पार्थं बीभत्सुं निगृह्य रथमुत्तमम् ॥ ३०
अयं स कालः संप्राप्तः पार्थ यः काङ्क्षितस्तव ।
प्रहरास्मै नरव्याघ्र न चेन्मोहात्प्रमुह्यसे ॥ ३१
यत्पुरा कथितं वीर त्वया राज्ञां समागमे ।
विराटनगरे पार्थ संजयस्य समीपतः ॥ ३२
भीष्मद्रोणमुखान्सर्वान्धार्तराष्ट्रस्य सैनिकान् ।
सानुबन्धान्हनिष्यामि ये मां योत्स्यन्ति संयुगे ॥ ३३
इति तत्कुरु कौन्तेय सत्यं वाक्यमरिंदम ।
क्षत्रधर्ममनुस्मृत्य युध्यस्व भरतर्षभ ॥ ३४
इत्युक्तो वासुदेवेन तिर्यग्दृष्टिरधोमुखः ।
अकाम इव बीभत्सुरिदं वचनमब्रवीत् ॥ ३५
अवध्यानां वधं कृत्वा राज्यं वा नरकोत्तरम् ।
दुःखानि वनवासे वा किं नु मे सुकृतं भवेत् ॥ ३६
चोदयाश्वान्यतो भीष्मः करिष्ये वचनं तव ।
पातयिष्यामि दुर्धर्षं वृद्धं कुरुपितामहम् ॥ ३७

C. 6 4841
B 6 106 40
K 6 106 38

---

कुंजर, K4 B3 4 Dn2 D1 7 8 -रथकूबरं, B1 2 Da Dn1 रथसंकुल, D5 -रथकुडल, T1 G4 -हयकुजर (for -रथकुञ्जरम्) K5 रथकुञ्जरसकुल —e) K5 D8.6 दृदृशु (for °शे) D1 °पुत्राणा (for °पुत्रस्य)

30 = (var) 6 55 40 —a) K5 D2 T1 G4 अ(K5 श्र)भिद्यमान, T2 G2 M1-3 5 प्रमृद्य°; G1.3 प्रतुद्य° (for प्रभज्य°) D1 S (except M4) तत्सैन्य (for सैन्यं तु) —c) T2 अवोच (for उवाच) K5 वाच (for पार्थ)

31 = (var) 6 55 41 Before 31, D6 ins श्रीभगवानुवाच —b) K3 य पार्थ (by transp), T1 G1 4 प्रार्थित°, T2 प्रार्थयत्, G2 पार्थ यत्, G3 पार्थित (for पार्थ य°) K3 D1-3 S त्वया; K4 तया (for तव) —c) G2 प्राहर (for प्रहर) K4 B Dn2 D4-8 [अ]स्मिन्, Da1 [अ]स्मि; D2 [अ]स्य (for [अ]स्मै) —d) K6 न च (for न चेन्) Ś1 K0-2 मौढ्यात् (for मोहात्) K3.5 B Da Dn D2-8 विमुह्य (K3 5 D2 4 °ह्य)से (for प्रमुह्यसे) D1 मा मोहमुपयास्यसि, S भीष्मायाहवशोभिने.

32 32ab = (var) 6 55 42ab —a) K3 यस्त्वया, K4 5 D1 6 G2 यत्त्वया D3 तात, D5 वीर, T1 G4 तस्य (for वीर) —b) K3 5 D1 2 6 पुरा राज्ञा, K4 तदा राज्ञा, B1 Dn2 D4 7 8 राज्ञा तेषा, D5 तया राज्ञा (for त्वया राज्ञा) —c) K2 B D (except D1-3 6) तात (for पार्थ) —d) K3 5 D2 6 च शृण्वत° (for समीपत°)

33 33ab = 6 55 42cd —a) K5 वीरान् (for सर्वान्) —33cd = 6 55 43ab —c) K1 हरिष्यामि, D5 हनिष्याम (for °ष्यामि) —d) Ś1 K2 यो (for ये). Da1 मा (for मां) D2 युद्ध्यंति (for योत्स्यन्ति) Dn2 D4 8 सगरे (for सयुगे) D1 यदि योत्स्यति मयुगे

34 34ab = 6 55 43cd —a) M3 5 त (for तत्) —b) D1 सत्य- (for सत्य) K5 D2 पितामह (for अरिंदम) M1 3 5 मत्यं वाक्यविशारद —After 34ab, K5 reads 38 —K5 D2 om 34c–35d, G1-3 om 34cd —c) Ś1 K0-4 D1 पुरस्कृत्य (for अनुस्मृत्य) —d) B Da Dn D1 4 5 7 8 विगतज्वर° (cf 6 25 30b), D8 पुरुषर्षभ, M2 पुरुषो भव (for भरतर्षभ)

35 K5 D2 om 35 (cf v l 34) Dn1 om. 35a–36c Before 35, D6 ins सजय उवाच —a) G1 इत्युक्ते, M4 इत्युक्त्वा (for इत्युक्तो) —b) Da1 तिर्यगुष्टिर्, D1 अवाग्दृष्टिर् Ś1 अधोक्षज°, D5 अधोमुख; G1 3 अरिंदम (for अधोमुख) —c) D1 स तु (for इव)

36 Dn1 om 36abc (cf v l 35) Before 36, K5 D2 6 ins अर्जुन उवाच —a) S अधुना च (for अवध्याना) —b) S च (for वा) K5 T G M4 नरकोपम, Da1 नरकोत्तरे, D6 M1 (sup lin) °त्तम, Cc °त्तरम् (as in text) D1 राज्य प्राप्य मधुदम —c) G1-3 सुखानि (for दुःखानि) K4 M2 वनवासे च, D1 °सेन, T2 °से वै, G1-3 M1 3-5 °सो वा (for °से वा) —d) K4 न, D1 2 6 7 तु (for नु) Da Dn D5 8 M1 3 5 स्वात्कृत (Da1 °ते), D1 [S]थ कृतं (for सुकृत)

37 37ab = (var) 6 55 46cd —a) K3 वाहय, K5 D1 2 6 नोदय (for चोदय) K8 D1 हृषीकेश; K5 वचो भीष्म, Da1 Dn1 यतो भीष्म, T2 हतो भीष्म° M4 चोदिताश्वान्यतो भीष्म —b) = 6 40 73d —37cd = (var) 197* —c) K0 2 5 घातयिष्यामि (for पात°) G3 पातयिष्यति मूर्धान —d) K4 B Da Dn D4 5 7 8 भीष्म (for वृद्ध) Ś1 K0-3 कुरुवृद्ध पितामह

C 6 4841
B. 6 106 40
K 6 105 39

ततोऽश्वान्रजतप्रख्यांश्चोदयामास माधवः ।
यतो भीष्मस्ततो राजन्दुष्प्रेक्ष्यो रश्मिवानिव ॥ ३८
ततस्तत्पुनरावृत्तं युधिष्ठिरबलं महत् ।
दृष्ट्वा पार्थं महाबाहुं भीष्मायोद्यन्तमाहवे ॥ ३९
ततो भीष्मः कुरुश्रेष्ठः सिंहवद्विनदन्मुहुः ।
धनंजयरथं शीघ्रं शरवर्षैरवाकिरत् ॥ ४०
क्षणेन स रथस्तस्य सहयः सहसारथिः ।
शरवर्षेण महता न प्राज्ञायत किंचन ॥ ४१
वासुदेवस्त्वसंभ्रान्तो धैर्यमास्थाय सात्वतः ।
चोदयामास तानश्वान्वितुन्नान्भीष्मसायकैः ॥ ४२

ततः पार्थो धनुर्गृह्य दिव्यं जलदनिस्वनम् ।
पातयामास भीष्मस्य धनुश्छित्त्वा शितैः शरैः ॥ ४३
स च्छिन्नधन्वा कौरव्यः पुनरन्यन्महद्धनुः ।
निमेषान्तरमात्रेण सज्यं चक्रे पिता तव ॥ ४४
विचकर्ष ततो दोर्भ्यां धनुर्जलदनिस्वनम् ।
अथास्य तदपि क्रुद्धश्चिच्छेद धनुरर्जुनः ॥ ४५
तस्य तत्पूजयामास लाघवं शंतनोः सुतः ।
साधु पार्थ महाबाहो साधु कुन्तीसुतेति च ॥ ४६
समाभाष्यैनमपरं प्रगृह्य रुचिरं धनुः ।
मुमोच समरे भीष्मः शरान्पार्थरथं प्रति ॥ ४७

---

38 = (var) 6. 55. 47. K6 reads 38 after 34ab. Before 38, D6 ins. संजय उवाच. — a) B3. 4 Dn2 D4. 7. 8 स च (for ततो). Ś1 °प्राख्याद्. K1 ततोश्वाराजप्रख्यान् (sic). — b) D1. 6 नोदयामास. K3 वासविं (for माधवः). — c) D1 वृतो, T1 G4 यथा, M3. 5 ततो (for यतो). S (except M2) भीष्मरथो (for भीष्मस्ततो). — d) Ś1 Ko. 2 Da2 D3 T1 G4 दुष्प्रेक्षो, K1 सुप्रेक्ष्यो, Da1 Dn1 D1. 5-7 दु:प्रेक्षो (D1. 6 °क्ष्यो), T2 दुष्प्रेप्यो. D4 (marg. by corr.) T1 G2-4 M1-3. 5 रश्मिमानिव. K5 दु:प्रेक्ष्योग्निरिव ज्वलन्, D2 दुष्प्रेक्ष्योग्निरिवावभौ.

39 = 6. 55. 48. — a) D1 तु (for तत्). K1 आवृत्तो, Da1 आवृत्त, D4 आवृत्तिं, T2 आवृतं (for आवृत्त). — b) K5 D2 बलं यौधिष्ठिरं महत्. — d) K1-5 B Da2 Dn D1. 3-8 M1-3. 5 [उ]द्यतम् (for [उ]द्यन्तम्). Da1 भीष्मायोद्यतमहाहवे (hypermetric), T2 M4 भीष्मं युध्यतमाहवे.

40 = (var) 6. 55. 49. — a) K3 महाबाहु°, Da1 M2 कुरुश्रेष्ठ. — b) Ś1 Ko. 1 D2. 3. 6 T2 प्रणदन्, T1 G1. 3. 4 व्यचरन्, G2 M4 व्यनदन्, M1. 3. 5 व्यनदद् (for विनदन्). Da1 Dn1 M1. 3. 5 बहु (Da1 °हु°) (for मुहु°). — c) K4 तूर्णं (for शीघ्रं). — d) G2 M2 पूरयामास पत्रिभिः.

41 = (var) 6. 55. 50. — a) T2 M4 सहयस् (for स रथस्). — b) Ko. 2 सहाय°, T2 M4 स रथ (for सहय°). — D2 reads 41cd in marg. (sec. m.). — d) Ko प्राज्ञयत, K3 Da1 D2. 3. 5. 6 S प्रज्ञायत. K4. 5 B1. 2. 4 D (except D2) G2 M1. 3-5 भारत (for किंचन).

42 = (var) 6. 55. 51. D2 reads 42ab in marg. (sec. m.). — a) K1-3 D1. 2. 6 G2 तु (K2 D1 च) मसंभ्रान्तो; T2 G1. 3 सुमसंभ्रान्तो (for स्त्वसंभ्रान्तो). — b) K. धैर्यमालंब्य, T2 सत्त्वमास्थाय, G3 धैर्यमादाय. K3. 5 B D (except D3) सत्वर° (D1 °र), K4 T1 G M2 वीर्यवान् (for सात्वत°). — c) K5. 4 D1. 2. 6 नोदयामास. — d) Ko-3 B2-4 Da Dn2 D1-5. 7. 8 T2 M2 विनुन्नान्; K1 (marg. sec. m.) पीडितान्, K4 धृन्वाशान् (sic), B1 विनुन्नान्; D5 विद्धुन्नान् (for वितुन्नान्). K4 B4 भीष्मशायकैः, B1 शायकोत्तमैः.

43 = (var) 6. 55. 52. Dn2 reads 43 in marg. (sec. m.). — b) Some MSS. °निःस्वन (for °निस्वनम्). — cd) T2 भित्त्वा (for छित्त्वा). K3. 5 D2 चिच्छेद भीष्मस्य धनुः मोन्यदादत्त कार्मुकं (K3 वेगवान्).

44 = 6. 55. 53. K2. 5 D2 om. 44. — a) T1 G1. 4 M1-4 सच्छिन्नधन्वा. Dn2 D1. 3 कौरव्य (for °व्यः). — c) D1. 3 निमिषान्तरमात्रेण. — d) Ko D1. 4 सज्जं (for सज्यं). Ś1 Ko-2 D5. 7 T1 G M2 कृत्वा (for चक्रे). T1 G4 M4 पितामह° (for पिता तव).

45 = 6. 55. 54. — a) B Da Dn D2-5 चकर्ष च, D4 चकर्ते च (for विचकर्ष). — b) T1 धनुर्ज्यातलनिस्वनं, M4 धनुस्तज्जलदस्वनं. Some MSS. °निःस्वनं (for °निस्वनम्).

46 = (var) 6. 55. 55. — a) K5 D5 तं (for तत्). — b) K4 B Da2 Dn D5. 7. 8 शां (B2 सा) तनो (for शंतनो). — c) K4 B Dn2 D4. 7. 8 साधु साधु (for साधु पार्थ). — d) D5 कुंति° (for कुन्ती°).

47 a) K2 Da1 D3 G2 M2 समाभाष्येनम्, K3. 4

अदर्शयद्वासुदेवो हययाने परं बलम् ।
मोघान्कुर्वञ्शरांस्तस्य मण्डलानि विदर्शयन् ॥ ४८
शुशुभाते नरव्याघ्रौ भीष्मपार्थौ शरक्षतौ ।
गोवृषाविव संरब्धौ विषाणोल्लिखिताङ्कितौ ॥ ४९
वासुदेवस्तु संप्रेक्ष्य पार्थस्य मृदुयुद्धताम् ।
भीष्मं च शरवर्षाणि सृजन्तमनिशं युधि ॥ ५०
प्रतपन्तमिवादित्यं मध्यमासाद्य सेनयोः ।
वरान्वरान्विनिघ्नन्तं पाण्डुपुत्रस्य सैनिकान् ॥ ५१
युगान्तमिव कुर्वाणं भीष्मं यौधिष्ठिरे बले ।
नामृष्यत महाबाहुर्माधवः परवीरहा ॥ ५२
उत्सृज्य रजतप्रख्यान्हयान्पार्थस्य मारिष ।
क्रुद्धो नाम महायोगी प्रचस्कन्द महारथात् ।
अभिदुद्राव भीष्मं स भुजप्रहरणो बली ॥ ५३
प्रतोदपाणिस्तेजस्वी सिंहवद्विनदन्मुहुः ।
दारयन्निव पद्भ्यां स जगतीं जगतीश्वरः ॥ ५४
क्रोधताम्रेक्षणः कृष्णो जिघांसुरमितद्युतिः ।

C 6 4859
B 6 106 58
K 6 106 56

---

B Dn D7 M4 °भार्यैवम्, D1 4 8 °भार्यैव (for °भार्यैनम्) D1 4 8 परम (for अपर) K5 D2 स समार्य्यैवमपरं — b) K5 बलवद्गृह्य कार्मुकं, D5 प्रगृह्यमपरं धनु (sic) — K5 om 47c–48b T1 om 47e–48d — ef) = (var) 6 55 57cd.

48 = (var) 6 55 58 T1 om 48, K5 om 48ab (cf. v 1 47) — b) D1 T2 M1 3–5 हय ज्ञाने (T2 °न), D3 हयानेव (for हययाने) — c) Dn2 D1 4 5 7 8 मोघीकुर्वन् (for मोघान्कु°) — d) K3 4 B Dn2 D3 4 6–8 निदर्शयन, Da D5 G2 3 M2 5 व्यदर्शयन्, Dn1 G1. 4 M1 3 4 व्यदर्शयत्, D2 च दर्शयन् (for विदर्श°) D1 मडलानीव दर्शयन्

49 = (var) 6 55 60 — b) K0 भीष्मपार्थौ सुनिक्षितौ, K1 भीमपार्थौ सुविक्षतौ (sic), K3–5 B Da Dn (Dn1 by corr) D2–8 तौ भीष्मशरविक्षतौ (K3 5 D8 °वीक्षितौ, Da Dn1 [orig] D5 °विक्षितौ), D1 भीष्मेण शरवीक्षितौ; T1 G1. 4 M तावुभौ शरविक्षतौ, T2 G3 तावुभौ शरवी(G3 °वि)क्षितौ, G2 भीष्मस्य शरविक्षतौ — c) T1 G M2 नर्दंतौ (for संरब्धौ) — d) Ś1 K0 3 D3 T2 G1 M2–5 विषाणोल्लेखनाकितौ, K1. 2 D6 G2 3 विषाणोल्लेख(G3 °खि)नाकितौ, D2 विषाणोल्लिखिताविव — After 49, D3 6 (om. lines 8–9) ins

411* तत प्रववृते रौद्रः संग्रामो लोमहर्षण ।
पाण्डवाना च मुख्यस्य कुरूणां प्रवरस्य च ।
तालमात्रे विकर्षन्तौ तावुभौ रणकर्कशौ ।
धनुषी दृढमुष्टी तावुभौ पौत्रपितामहौ ।
श्यामस्य पलितेनासौ सगम प्रत्यशोभत । [5]
गङ्गायमुनयोर्यद्वज्जलयो प्रतिसचर ।
पार्थनामाङ्किता बाणा पेतुर्भीष्मस्य वक्षसि ।
निर्गुणाना कृतघ्नाना मनासीव हि साधुषु ।
भीष्मस्यापि ततो बाणा पेतुरर्जुनवक्षसि ।
महादेवपरिप्राप्तधनुर्विद्या जिगीषव । [10]

[ (L 2) D8 प्रमुख्यस्य (for च मु°) ]

50 a) T2 वासुदेवस्य (for °देवस्तु) — b) K3 Da Dn1 D5 6 T2 G2 3 M1 मृदुयुध्यता, K5 D2 मृदुता युधि, D1 मृदुधन्विनः; T1 G4 मृदु युध्यत (for युद्धताम्) — c) D1 भीष्म तु, T2 त भीष्मं (for भीष्म च) — d) D6 सुचतम् (for सृजन्तम्)

51 b) K5 मध्यमारभ्यमेतयो (sic) — c) Da1 वरान्वीरान्, T1 परान्परान्, T2 G1–3 M परान्वरान्, G4 वरान्परान् (for वरान्वरान्)

52 b) D2 भीष्मो (for भीष्म) — d) M4 माधवं (for °व) K2 D3 परवीरहा — After 51, D6 T G M1 2 ins

412* वासुदेवस्तु सक्रुद्धो रोषाज्जज्वाल सयुगे ।

53 b) Da1 मारिष (for °ष) — c) K4 B Da Dn D4 5 7 8 वासुदेवस्त(Da1 °व त)तो योगी, D1 क्रोधादेव महायोगी — d) D1 प्रस्कद्य च, D2 प्रचस्कद्य T1 G M2 रथोत्तमात् (for महारथात्) — e) D1 8 तु, T1 G M2 च (for स) — f) D1 हरि, T2 बल (for बली)

54 b) K3 T2 G3 M1 3. 5 व्यनदन् (for विनदन्) — c) T1 G पातयन्निव, T2 धारयन्निव (for दार°) D1 पादाभ्या, T2 M2 4 पद्भ्या च — d) T1 G जगतिं (G3 °ती) (for जगतीं) B1. 2 4 Dn2 D1 6 8 T1 G M1 3 6 जगदीश्वर, Da2 D5 जगतीश्वर, D3 T2 M4 °तीपति

55 a) D1 क्रोधरक्ते (for क्रोधताम्रे°) — b) Da1

C 6 4659 B.6 106 59 K.6.106 57

ग्रसन्निव च चेतांसि तावकानां महाहवे ॥ ५५
दृष्ट्वा माधवमाक्रन्दे भीष्मायोधन्तमाहवे ।
हतो भीष्मो हतो भीष्म इति तत्र स सैनिकाः ।
क्रोशन्तः प्राद्रवन्सर्वे वासुदेवभयान्नराः ॥ ५६
पीतकौशेयसंवीतो मणिश्यामो जनार्दनः ।
शुशुभे विद्रवन्भीष्मं विद्युन्माली यथाम्बुदः ॥ ५७
स सिंह इव मातङ्गं यूथर्षभ इवर्षभम् ।
अभिदुद्राव तेजस्वी विनदन्यादवर्षभः ॥ ५८
तमापतन्तं संप्रेक्ष्य पुण्डरीकाक्षमाहवे ।
असंभ्रमं रणे भीष्मो विचकर्ष महद्धनुः ।
उवाच चैनं गोविन्दमसंभ्रान्तेन चेतसा ॥ ५९
एह्येहि पुण्डरीकाक्ष देवदेव नमोऽस्तु ते ।
मामद्य सात्वतश्रेष्ठ पातयस्व महाहवे ॥ ६०
त्वया हि देव संग्रामे हतस्यापि ममानघ ।
श्रेय एव परं कृष्ण लोकेऽमुष्मिन्निहैव च ।
संभावितोऽसि गोविन्द त्रैलोक्येनाद्य संयुगे ॥ ६१

---

अमितद्युति, M1 अमरद्युति — c) B1. 3. 4 ग्रसत इव; B2 Dn2 D4 (before corr) 7 8 ग्रसत (B2 °ते) इव, Da1 ग्रासतमिव, Da2 Dn1 D5 ग्रसतमिव, D1 मोहयन्स तु, D2 ग्रसत इव, D3 ग्रसयन्निव, D6 ग्रसन्निव स, T1 हरत इव, M1 3-5 दहतमिव (for ग्रसन्निव च) D3 6 T1 G M2 4 तेजांसि, T2 तेजस्वी (for चेतासि) — d) K1 2 D6 महामृधे, M1 3 5 °रणे (for °हवे)

56 a) Ś1 Ko 1 आक्रुद्ध, T1 G4 आक्रदन्, Cd आक्रन्दे (as in text) D1 दृष्ट्वा स माधव युद्धे; M2 दृष्ट्वा च देवकीपुत्र — b) K3. 4 B D (except D2 8) T2 [उ]ध्यतम् (for [उ]धन्तम्) K4 5 B2-4 D (except D1 2) T2 M3-5 अन्तिके (for आहवे) — c) G2 भीष्म (for भीष्मो) — d) D6 तत्तु (for तत्र) K4 B Da Dn D4. 5 7 8 तत्र (Da1 D5 तव) तत्र वचो महत्; D1 तत्रसुस्तव सैनिका — e) K4 B Da Dn D4 5 7 8 अश्रू(Da1 °श्रु)यत महाराज; T2 क्रोधतत्प्राद्रवत्सर्वे (sic) — f) K3 4 B D T2 M1 3-5 तदा (for नरा)

57 a) G2 पीतं सवीतकौशेयो — b) Ś1 मेघ, Ca d मणि (as in text) — c) B3 विभ्रमन्, Da1 Dn1 D3 5 6 T1 G M1. 3-5 [ऽ]भिद्रवन्; D1 [ऽ]भ्यद्रवद्, T2 प्रद्रुतो (for विद्रवन्) — d) D1 यथाबुद (for °द)

58 b) K3 5 D2 महर्षभ, T1 G4 यथर्षभ (for यूथर्षभ) B3 इवौषध, G1 3 नरर्षभ, G2 इवावृतं (for इवर्षभम्) Ko 1 यूथपर्षभयूथप; K4 यूथप भरतर्षभ; Da1 यूथर्षभरतर्षभं, D1 यूथपो यूथप यथा, D3 T2 यूथप यूथपर्षभ (T2 °भ) — c) K2 B D (except D1-3 6) वेगेन (for तेजस्वी) — d) Da1 Dn D2 4 5 8 निनदन्; T2 विनदद् D1 पुरुषोत्तम (for यादवर्षभ) — After 58, D3 6 ins

413* प्रतोदपाणिर्भगवाञ्शुशुभे यादवर्षभ ।
यथाशुनार्दयच्चन्द्रममावास्या दिवाकर ।

[(L. 1) D6 गरुडध्वज (for यादवर्षभ)]

59 a) T1 G आयात तु (for आपतन्त) — c) Ko 2 ससभ्रम, K1 समभ्रम (sic), K3 D2 6 असंभ्रमो; D1 असम्भ्रमाद्, D3 असभ्रमन् S असभ्रमेण (M2 °भ्रेण च) भीष्मोपि — d) K3 D1 महाधनु (for महद्धनु). — e) K1 2 B D (except D1-3 6) चैव (for चैनं) — f) K5 D2 चक्षुषा; D3 M4 तेजसा (for चेतसा).

60 Before 60, D6 ins भीष्म उवाच — b) T1 G1 4 वासुदेव (for देवदेव). — c) Ko 1 ममाद्य; K5 आगत्य (for मामद्य) D5 सात्वत श्रेष्ठ K2 ममादि सत्वतश्रेष्ठ (corrupt) — d) D3 महारथात्; D7 ममाहवे (for महाहवे)

61 a) T2 G3 [अ]पि (for हि) — b) D2 [अ]द्य (for [अ]पि) — d) K5 इहैव तु, D1 परत्र च (for इहैव च) B Da Dn D4 5 7 8 लोके भवति सर्वत. Ca cites सर्वत — f) D1 T2 M1-3 5 °नापि; D2 °प्यय, D5 नाम, D3 °क्ये चाद्य (for °क्येनाद्य) T1 G4 सद्य (for सयुगे) — After 61, B Da Dn D5 8 (marg sec m) ins

414* प्रहरस्व यथेष्टं वै दासोऽस्मि तव चानघ ।

[B2 मे (for वै) D3 केशव (for चानघ)]

On the other hand, D3 6 ins.

415* निर्गुणेनापि तोत्रेण वासुदेव कृतं मम ।
यो योगिभिश्च दुष्प्राप्य स धातार्थमिहागत ।

[(L 1) D3 पौत्रेण (for तोत्रेण), and भगवच्छुपकृत मम (hypermetric) (for the post half) — (L. 2) D3 सुदुर्ज्ञेय (for च दुष्प्राप्य)]

अन्वगेव ततः पार्थस्तमनुद्रुत्य केशवम् ।
निजग्राह महाबाहुर्बाहुभ्यां परिगृह्य वै ॥ ६२
निगृह्यमाणः पार्थेन कृष्णो राजीवलोचनः ।
जगाम चैनमादाय वेगेन पुरुषोत्तमः ॥ ६३
पार्थस्तु विष्टभ्य बलाच्चरणौ परवीरहा ।
निजग्राह हृषीकेशं कथंचिद्दशमे पदे ॥ ६४
तत एनमुवाचार्तः क्रोधपर्याकुलेक्षणम् ।
निःश्वसन्तं यथा नागमर्जुनः परवीरहा ॥ ६५
निवर्तस्व महाबाहो नानृतं कर्तुमर्हसि ।
यत्त्वया कथितं पूर्वं न योत्स्यामीति केशव ॥ ६६
मिथ्यावादीति लोकस्त्वां कथयिष्यति माधव ।
ममैष भारः सर्वो हि हनिष्यामि यतव्रतम् ॥ ६७
शपे माधव सख्येन सत्येन सुकृतेन च ।
अन्तं यथा गमिष्यामि शत्रूणां शत्रुकर्शन ॥ ६८
अद्यैव पश्य दुर्धर्षं पात्यमानं महाव्रतम् ।
तारापतिमिवापूर्णमन्तकाले यदृच्छया ॥ ६९
माधवस्तु वचः श्रुत्वा फल्गुनस्य महात्मनः ।
नकिंचिदुक्त्वा सक्रोध आरुरोह रथं पुनः ॥ ७० C 6 4876 B 6 105 75 K 6 103 73

62 Before 62, D6 ins संजय उवाच — a) D1 अन्वधावत्, Cn.d अन्वगेव (as in text) — b) K2-4 B Dn Dn D1-8 तमभिद्रुत्य, D1 ह्यभिदुद्राव, M2-5 तदनुद्रुत्य (for तमनु°) T1 G4 माधव (for केशवम्) — c) D1 विजग्राह (for निजग्राह) T2 महाबाहु — d) T1 G2-4 भुजाभ्यां (for बाहुभ्यां) M1-3 5 च (for वै)

63 a) D1 न गृह्यमाण°, M4 विगृह्य° — c) K1 D5 जगाम चैनम्, B Da Dn1 D2-4 7 8 जगामैवैनम्, T2 जगामैव तम् (for जगाम चैनम्) Ś1 K0-2 आस्थाय (for आदाय) — d) D5 जगाम (for वेगेन) M1 3.5 पुरुषोत्तम

64 b) D1 रणे वै (for चरणौ) — K0 D2 om (hapl) 64c-65d — c) D6 ऋषी° (for हृषी°)

65 K0 D2 om 65 (cf v 1 64) — a) Ś1 K2-4 B Dn2 D4 7 तत एवम्, T2 ततश्चैनम्, M1 3 5 त तवैनम्, M2 त तद्वैवम्, M4 त तु चैनम् (for तत एनम्) D1 6 [क्र]ोध, T2 [इ]द, G1 3 [आ]र्तं, G2 [क्र]ोधौ (for [आ]र्तः) — b) K2-4 Dn2 M4 °क्षण (for °क्षणम्) — K2 om (hapl.) 65cd — c) Some MSS निश्वसन्त — d) K8 B Dn2 D3 4 7 8 M प्रणयात्सखा (K3 °त्ता), Da Dn1 D5 प्रणयात्तथा, D6 प्रणयाद्दृच° (for परवीरहा) D1 प्रणयात्स्य सुहृच्च, T2 प्रणयादर्जुन सखा

66 Before 66, D6 ins अर्जुन उवाच — b) K3 मानृत (for नानृत) G2 वक्तुम् (for कर्तुम्) — d) K5 om (hapl) from मीति केशव up to हनिष्यामि in 67d D6 योत्स्यामिति (for योत्स्यामीति)

67 K5 om up to हनिष्यामि in 67d — a) D6 मिथ्या वदति, T2 मिथ्यावादी च (for °वादीति) K2 4 B Da2 D1 2.6 M2 लोकास्, T G M4 लोके (for लोकम्) M1 2 त्वा (for त्वां) — b) K4 B Da2 D1 2 S कथयिष्यति (M2 °ष्यामि) — c) K3 ममेह, D2 मम हि, D1 ममैव (for ममैष) Ś1 K0 स्वल्पोपि, T1 G4 M सर्वोपि (for सर्वो हि) T2 G2 ममैष भा(G2 भ)रत सर्वो — d) B Da Dn D4 5 7 8 पितामह, D3 6 महाव्रत (for यतव्रतम्)

68 a) K3 5 B D T G4 M केशव (for माधव) Ś1 K0-2 वाक्येन, K3 5 D1-3 T G4 M सत्येन, K4 B Da Dn D4-8 शस्त्रेण (for सख्येन) — b) K8 मुख्येन, D1 वाक्येन; D2 सुखेन, D8 T1 G4 M सख्येन (for सत्येन). M2 सुहृतेन च — c) G3 अहम् (for अन्तं) K4 G1-3 अद्य (for यथा) Da Dn1 D6 G1-3 M1-3 5 करि° (for गमि°) — d) Ś1 K0-4 B D1 शत्रुकर्ष(B1 °र्श)ण, Da1 °कर्षण, Dn2 D4 8 °सूदन, D6 °कर्शन, G1-3 अद्य माधव (for शत्रुकर्शन)

69 a) Ś1 K0 अद्य वै (for अद्यैव) D3-5 8 M2 3 5 दुर्धर्ष — b) T2 M1 3 5 हन्यमान (for पात्य°) K3 5 B D (except D3) T2 M °रथ (for °व्रतम्) — c) T1 G4 [अ]पूर्वम्, Ca [आ]पूर्णम् (as in text) D6 तारापतिर्यथापूर्णम् — d) D3 पर्वकाले (for अन्त°)

70 Before 70, D6 ins संजय उवाच — a) D3 T2 G2 तद् (for तु) — b) K2-4 B D फाल्गुन- (K2 °ण)स्य — After 70ab, T G ins

416* अभवत्परमप्रीतो ज्ञात्वा पार्थस्य विक्रमम् ।

— c) K3 5 B1 2 4 D (except D6) स (for न). K5 D2 T2 सक्रुद्ध (for सक्रोध)

C. 6 4676
B. 6 106 73
K 6 106 74

तौ रथस्थौ नरव्याघ्रौ भीष्मः शांतनवः पुनः ।
ववर्ष शरवर्षेण मेघो वृष्ट्या यथाचलौ ॥ ७१
प्राणांश्चादत्त योधानां पिता देवव्रतस्तव ।
गभस्तिभिरिवादित्यस्तेजांसि शिशिरात्यये ॥ ७२
यथा कुरूणां सैन्यानि बभञ्ज युधि पाण्डवः ।
तथा पाण्डवसैन्यानि बभञ्ज युधि ते पिता ॥ ७३
हतविद्रुतसैन्यास्तु निरुत्साहा विचेतसः ।
निरीक्षितुं न शेकुस्ते भीष्ममप्रतिमं रणे ।
मध्यं गतमिवादित्यं प्रतपन्तं स्वतेजसा ॥ ७४
ते वध्यमाना भीष्मेण कालेनेव युगक्षये ।
वीक्षांचक्रुर्महाराज पाण्डवा भयपीडिताः ॥ ७५
त्रातारं नाध्यगच्छन्त गावः पङ्कगता इव ।
पिपीलिका इव क्षुण्णा दुर्बला बलिना रणे ॥ ७६
महारथं भारत दुष्प्रधर्षं
शरौघिणं प्रतपन्तं नरेन्द्रान् ।
भीष्मं न शेकुः प्रतिवीक्षितुं ते

---

71 $^a$) Da D6 M8 5 नरव्याघ्र T1 तौ नरस्थौ रथ व्याघ्रौ — $^b$) M6 शंतनव ( for शांत° ) — $^c$) D3 अवर्षत् ( for ववर्ष ) T1 G शरवर्षाणि — $^d$) K3 5 D2 वृष्ट्या मेघ ( by transp ), K4 मेघो वृष्टिम्, K3-5 D1-3 6 T2 M1-3 5 इवाचलौ ( K4 D2 T2 °ले, D1 °ळ ) ( for यथाचलौ )

72 $^a$) K3 4 B Da2 Dn D4 7 8 प्राणानाद( D4 8 °ध , D8 m °द )त्त, Da1 D5 प्राणमादत्त S ( except T2 ) यौधाना — $^c$) Da1 D5 गभस्तिरिव चादित्य — Ko om 72$^d$–74$^e$ — $^d$) K4 तेजोभि , T1 G M3 पयांसि, T2 जलानि ( for तेजांसि ) Ś1 K1 प्रतपन्वै स्वतेजसा, D1 प्रतपस्स स्वतेजसा, D8 प्रतपन्स्तेन तेजसा — After 72, Ś1 reads 75$^{ab}$

73 Ś1 Ko 1 om 73 ( for Ko, of v l 72) — $^b$) K2-5 B D ( except Da1 ) T2 M बभञ्जुर् ( M2 वीभत्सुर् ) ( for बभञ्ज ) K2-5 B3 4 Dn2 D2-4 6-8 T2 M1 3-5 पाडवा , Da1 D5 पार्थिव, Da2 Dn1 पार्थिवा , D1 फाल्गुन ( for पाण्डव ) — Da Dn1 D5 om 73$^{cd}$ — $^c$) D3 तथैव पांडुसैन्यानि — $^d$) K5 D2 M4 बभंजुर् ( for बभञ्ज ) K5 भारत ( for ते पिता ) — After 73, K2 reads 75$^{ab}$

74 Ko om 74$^{abcde}$ ( cf v l 72 ) — $^a$) T2 °विक्रात° ( for °विद्रुत° ) D6 °सेनास्तु ( for °सैन्यास्तु ) K3 हतेति प्रद्रुता सैन्या, K5 D2 हता विप्रद्रुता सेना — $^b$) Da1 निरुत्साह ( for °हा ) K3 विचेतसा , K4 T1 G हतौजस ( for विचेतस ) — $^c$) T1 G त्व ( for ते ) — $^d$) D1 भीष्म प्रति महारणे — Ś1 K1 2 ins after 74$^{cd}$ D6 ins after 75$^{ab}$

417* कुर्वाण समरे कर्माण्यतिमानुपविक्रमम् ।

[ Ś1 K1 कर्म हानि° ( for कर्माण्यति° ) ]

— Ś1 K1 om 74$^{ef}$ — $^e$) K4 अस्तं ( for मध्य ) — $^f$) Ko 2 प्रतपन्वै ( for प्रतपन्त )

75 Ś1 reads 75$^{ab}$ after 72, K2, after 73 — $^b$) Ko 2 कालेन च ( for °नेव ) K4 B D ( except D1-3 ) शतशोथ सहस्रश° — After 75$^{ab}$, D6 ins 417* — $^c$) Ś1 Ko 1 महात्मान, K4 °त्मान°, Da1 °राज ( for °राज ) — $^d$) K3-5 D2 पार्थिवा ( for पाण्डवा ) D3 भीष्म , D6 युधि ( for भय ) — After 75, K2 B Dn2 D4 6-8 ins

418* तथा पाण्डवसैन्यानि द्राव्यमाणानि भारत ।

[ Dn2 द्रव° ( for द्राव्य° ) ]

On the other hand, T2 M4 ins after 75

419* वध्यमाना रणे चापि भीष्मेणामित्रकर्शिना ।

76 $^a$) K5 D2 नाध्यगच्छतो, S नाधिगच्छति ( M1-3 5 °त, M4 °तो ) — $^b$) T G M4 गजा ( for गावः ), K5 पकार्दिता ( for पङ्कगता ) D1 निरयस्था यथा नरा — $^c$) D3 पिपीलका, D8 पिपिलीका D6 यथा क्षुणास्ते (sic), T G यथा पन्थां — $^d$) Ko-2 D5 बलिना ( for °ना ) K3 D3 दुर्बळा बळिना ( K3 ळळिनो ) रणे, T G वध्यते ( T2 रुध्यते, G1 2 मथ्यते, G3 मत्स्यते ) बलवत्तरै — After 76, T G ins

420* तथैव योधा राजेन्द्र भीष्मेणामित्रघातिना ।
समरे न्मृदिता सर्वे पाण्डवा सह सृञ्जयै ।

77 $^a$) Ś1 K1 दुष्प्रकर्षं ( K1 °र्षै ), K4 °मुप्रकर्मा, B Da Dn D1 3-3 दुष्प्र( or दु°प्र )कप ( D1 3 °प्य ), T2 M दुष्प्रधृष्य, G2 दुष्प्रधर्षण — $^b$) Ś1 Ko-2 शरौघिनं ( K1 °नां ), D4 शरौघिण° Ko 2 M2 प्रपतंत, D1 खे तपत ( for प्रतपन्त ) K2 नरेंद्रा, K4 D3 °द्रं, B3 3 D4 T G4 °द्रा ( for नरेन्द्रान् ) — $^d$) D1 शराशुभि°, M2 शरार्चित ( for °र्चिष ) D6 सूर्यं ( for सूर्यम् ) K5 D2 M2 इवापतत ( for °तपन्तम् )

शरार्चिषं सूर्यमिवातपन्तम् ॥ ७७
निमृद्नतस्तस्य तु पाण्डुसेना-
मस्तं जगामाथ सहस्ररश्मिः ।
ततो बलानां श्रमकर्शितानां
मनोऽवहारं प्रति संबभूव ॥ ७८

इति श्रीमहाभारते भीष्मपर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

## १०३

संजय उवाच ।
युध्यतामेव तेषां तु भास्करेऽस्तमुपागते ।
संध्या समभवद्धोरा नापश्याम ततो रणम् ॥ १
ततो युधिष्ठिरो राजा संध्यां संदृश्य भारत ।

C 6 4887
B 6 107 2
K 6 107 2

---

78 ᵃ) Ko T2 विमृद्नतम्, D6 विमर्दयत् (for निमृद्नतस्) T2 M हि (for तु) K. D2 6 पांडवा नाम्, T2 पाडुसेना, G2 पाडुसैनिकान् (for पाण्डु सेनाम्) — ᵇ) K3 गतश्चाथ (for जगामाथ) — After 78ᵃᵇ, T G M1 ins

421* ततोऽपि भीष्म सबल समन्या
स्यवारयत्पाण्डुसुतान्शरौघैः ।
जघान चैतान्सुमृदा महाबलो
महाव्रत पाण्डुसुतान्महात्मा ।
रणे करूशाधिपचेदिपैर्वले [5]
वृतान्सदा चक्रवरस्य पश्यत ।

[(L 1) T1 G4 हि (for ऽपि), and सबलान् (for सबल) — (L 2) T2 निवारयत्, M1 अवा° (for न्यवा°) — (L. 3) T2 M1 महाव्रतो (for °बलो) — (L 4) T2 M1 °बल (for °व्रत), and महात्मे (for महात्मा) — (L 6) T1 धृतान् (for वृतान्) ]

— ᶜ) Ś1 Ko 2 समकर्षितानां, K3 4 B2 8 D1 5 6 8 श्रम (D6 अनु) कर्पिताना — ᵈ) K8 Da1 D2 [ऽ]वहारे (for °हार) D4 m (orig as in text) S मेदोवसासृक्सु (T2 G1 8 °क्स्) तिमिश्रमे सति (G8 °सश्रमेति) — After 78, D8 6 ins

422* उदयगिरितटस्थ पद्मिनीं बोधयित्वा
स्फुटतरकिरणाग्रैस्ता स्वयं चोपभुज्य ।
मलिनमधुपसङ्घातासु सजातकोपः
कृतरविरविरोचिर्भानुमस्त प्रयात ।

[(L 1) D6 °परस्थ (for °तटस्थ) — (L 4) D6 जगाम (for प्रयात) ]

— After 78, T1 G4 M1 8 4 read 6 103 1–11, followed by colophon

Colophon in T1 G4 M1 8 4, read after 6 103 11 — *Sub-parvan* Omitting sub-parvan name, Ś1 Ko-2 4 5 mention only नवमयुद्धदिवस, K3 नवमेहनि, K4 नवमेह्नि *and* नवमयुद्धदिवस, B2 M4 नवमाह्निक, Da Dn1 D5 नवममह्न, Dn2 D6 नवमदिवसयुद्ध, D1 नवमदिवस, D4 8 नवमदिनयुद्ध, T1 G2 4 नवमदिवस *and* नवमापहार, T2 G1 8 नवमापहार K4 Dn2 D4 6 8 T G M4 cont समाप्त — *Adhy name* K4 पाडवपराजय, T1 G प्रतोदोद्धार (G8 °रक), T2 भीष्मार्जुनयुद्धे वासुदेवप्रतोद्धार, M1-3 5 भीष्मजय — *Adhy no* (figures, words or both) K5 100, Dn2 T1 G 102 (as in text), Dn2 (sec m) 64, D6 101, T2 M8 4 104, M1 2 103, M5 105 — *Śloka no* Dn1 114, Dn2 86, D6 81

## 103

1 T1 G4 M1 8 4 read st 1–11 (om the ref.) after 6 102 78. — ᵃ) G2 इति (for एव) D8 सैन्याना — ᵇ) K8 5 D1-8 6 T2 भास्करोस्तमुपागमत् (K5 D2 T2 °गत), Da1 °रे समुपागते, M1 (*sup lin*) °रेस्तमुपागमे — ᵈ) Da Dn1 (before corr) D5 M1-4 न पश्याम, D1 अपश्यामस Ś1 Ko-2 तमोमये (for ततो रणम्)

2 For sequence of T1 G4 M1 8 4, cf v 1 1 — ᵃ) Da2 राजन् (for राजा) — ᵇ) K1 संमृश्य, K2 सन्मृश्य, D1 समेक्ष्य (for सदृश्य) K5 D2

C. 6 4837 B 6 107 2 K 6 107 2

वध्यमानं बलं चापि भीष्मेणामित्रघातिना ॥ २
मुक्तशस्त्रं परावृत्तं पलायनपरायणम् ।
भीष्मं च युधि संरब्धमनुयान्तं महारथान् ॥ ३
सोमकांश्च जितान्दृष्ट्वा निरुत्साहान्महारथान् ।
चिन्तयित्वा चिरं ध्यात्वा अवहारमरोचयत् ॥ ४
ततोऽवहारं सैन्यानां चक्रे राजा युधिष्ठिरः ।
तथैव तव सैन्यानामवहारो ह्यभूत्तदा ॥ ५
ततोऽवहारं सैन्यानां कृत्वा तत्र महारथाः ।
न्यविशन्त कुरुश्रेष्ठ संग्रामे क्षतविक्षताः ॥ ६
भीष्मस्य समरे कर्म चिन्तयानास्तु पाण्डवाः ।
नालभन्त तदा शान्तिं भृशं भीष्मेण पीडिताः ॥ ७
भीष्मोऽपि समरे जित्वा पाण्डवान्सह सृञ्जयैः ।
पूज्यमानस्तव सुतैर्वन्द्यमानश्च भारत ॥ ८
न्यविशत्कुरुभिः सार्धं हृष्टरूपैः समन्ततः ।
ततो रात्रिः समभवत्सर्वभूतप्रमोहिनी ॥ ९
तस्मिन्रात्रिमुखे घोरे पाण्डवा वृष्णिभिः सह ।

---

सदृश्य भरतर्षभ — c) G1 वाध्य° (for वध्य°) K2 बल वापि, K4 B D (except D1-3) च भीष्मेण (for बलं चापि) K5 वध्यमानबले वापि — d) K3 5 D2 °कर्षिना (for °घातिना) K4 B Da Dn D4-8 त्यक्त्वा (Da1 °त्त्वा) स्त्र भयविह्वल

3 For sequence of T1 G4 M1 3 4, cf v 1 1 — a) Ś1 मुक्तमस्त्र, K4 B D (except D1-3) स्वसैन्यं च (for मुक्तशस्त्रं) K0 T2 पुरावृत्तं, K4 शरावृत्तं — b) Ś1 पालयान (for पलायन) D5 om from परायणम् up to अनुयान्त (in d) — c) M1 3 भीष्मश्च (for भीष्मं च) T2 युधि सु (for च युधि) B3 दुर्धर्ष (for संरब्धं) K5 भीष्मं तु युधि संरब्धे — d) K3-5 B D (D5 om) S (except G3) पीडयत (for अनुयान्त) B1 3 4 D (except Dn D1-3 6) G2 महारथ, T1 G4 M4 च तद्बल, T2 G1 3 M1-3 5 स्वकबल (for महारथान्)

4 For sequence of T1 G4 M1 3 4, cf v 1 1 D2 reads 4ab in marg — a) K5 D2 ततो, T1 G4 सुतान् (for जितान्) — b) K5 द्विपजये, T G1. 3 4 M4 महाबलान् (for °रथान्) — After 4ab, T G ins

423* निशामुखं च संप्रेक्ष्य घोररूपं भयानकम् ।

— c) K3 D2 6 चिरं राजन्, K4 B Da Dn D3-5 7 8 ततो राजा, K5 M2 महाराज, D1 T2 M1 3-5 चिरं राजा, T1 G चिरं राज्ञा (for चिरं ध्यात्वा) — d) Ś1 K0-2 स्त्ववहारम्, T1 G अप°, T2 M सोप° (for अव°) K0-2 B2 3 अचोदयत्, D1 (m as in text) अयाकरोत्, T1 G अकारयत्, T2 M अचिंतयत् (for अरोचयत्)

5 For sequence of T1 G4 M1 3 4, cf v. 1 1 Ś1 K0 1 om (hapl) 5. — a) K3 अय, K5 D2 6 यथा (for ततो) S [ऽ]पहार (for ऽवहार) T2 सैन्यस्य (for सैन्याना) — Da1 Dn1 om 5cd K4 B1 3 Da2 D5 G1 3 om (hapl) 5d-6a — d) T G2 4 M1-4 अपहारो (for अव°) D2 T1 G2 4 [ऽ]भवत्तदा (for ह्यभू°)

6 For sequence of T1 G4 M1 3 4, cf v 1 1 K4 B1 2 Da2 D5 G1 3 om 6a (cf. v 1 5) — a) K3 D2 तेवहार (D2 °रोहं) च, T G2 4 M ततोपहारं — b) B2 श्रुत्वा (for कृत्वा) Dn1 तव (for तत्र) D1 कृत्वा सर्वे महीक्षित° — D2 reads 6cd in marg (sec m) — c) K3 D2 3 6 न्य(D3 6 नि)वसत, Da1 न्यविशतु T1 G1. 3 4 कुरुश्रेष्ठा° — d) D5 क्षत्रिया, T2 M शिविर (for संग्रामे) K3 कृतविश्रमा, K5 D2 कृतविक्रमा, D1 6 क्षतविक्षिता, T1 G शरविक्षता (for क्षतवि°)

7 For sequence of T1 G4 M1 3 4, cf v 1 1 D2 reads 7 in marg (sec m) — a) Da2 भीष्मस्तु (for °स्य) — b) D1 T2 M चिन्तयानाश्च (M2 om च). — c) D6 नालभत — d) K4 om भृशं T1 G ताडिता°, T2 विक्षता (for पीडिता°) B D (except D1-3) भीष्मवाणप्रपीडिता°, M1-3 5 भीष्मेण क्षतविक्षता°

8 For sequence of T1 G4 M1 3 4, cf v 1 1 D6 reads 8 in marg — a) D5 [ऽ]भि° (for ऽपि) — b) K3-5 B Da Dn D2 4-8 T2 M सहसृञ्जयान्, D1 T1 G सृञ्जयै सह (by transp), D3 सह शृञ्जयै° — c) D6 स्तुतैर् (for सुतैर्) — d) Da1 D5 विध्यमानश्च (for वन्द्यमानश्च).

9 For sequence of T1 G4 M1. 3 4, cf v 1 1. D5 om 9ab — a) K3 न्यवसत्, D6 न्यवसु (for न्यविशत्) T1 G कुरुशार्दूलै (for कुरुभिः सार्धं) T2 M प्राविशच्छिबिरं हृष्टै° (T2 सृष्टै°, M2 हृष्ट°).

सृञ्जयाश्च दुराधर्षा मन्त्राय समुपाविशन् ॥ १०
आत्मनिःश्रेयसं सर्वे प्राप्तकालं महाबलाः ।
मन्त्रयामासुरव्यग्रा मन्त्रनिश्चयकोविदाः ॥ ११
ततो युधिष्ठिरो राजा मन्त्रयित्वा चिरं नृप ।
वासुदेवं समुद्वीक्ष्य वाक्यमेतदुवाच ह ॥ १२
पश्य कृष्ण महात्मानं भीष्मं भीमपराक्रमम् ।
गजं नलवनानीव विमृद्नन्तं बलं मम ॥ १३
न चैवैनं महात्मानमुत्सहामो निरीक्षितुम् ।
लेलिह्यमानं सैन्येषु प्रवृद्धमिव पावकम् ॥ १४
यथा घोरो महानागस्तक्षको वै विषोल्बणः ।
तथा भीष्मो रणे कृष्ण तीक्ष्णशस्त्रः प्रतापवान् ॥ १५
गृहीतचापः समरे विमुञ्चंश्च शिताञ्शरान् ।
शक्यो जेतुं यमः क्रुद्धो वज्रपाणिश्च देवराट् ॥ १६
वरुणः पाशभृच्चापि सगदो वा धनेश्वरः ।
न तु भीष्मः सुसंक्रुद्धः शक्यो जेतुं महाहवे ॥ १७
सोऽहमेवं गते कृष्ण निमग्नः शोकसागरे ।

C 6 4903
B 6 107 18
K 6 107 18

— [b]) T2 M कुरुभि परिवारित — [d]) Ś1 K0 1 Dn2 T1 G सर्वभूतप्रमोदिनी, K3 5 Da D2 5 सर्वभूत( Da2 D5 °लोक )विमोहि( Da1 D. °ह )नी, Dn1 °प्रमोहनी

10 For sequence of T1 G4 M1 3. 4, cf v l 1 — [a]) T2 M निशा° (for रात्रि°) T2 M1 3 4 रौद्रे (for घोरे) — [c]) Da1 मजयाश्च, D3 शृजयाश्च, M2 पाडवाश्च, M4 सृजयैश्च (for सृञ्जयाश्च) K1 सुराधर्षा, D5 महाभागा (for दुराधर्षा)

11 For sequence of T1 G4 M1 3 4, cf v l 1 — [a]) K1 आत्मने श्रेयस, K. D1 आत्मन श्रेयसे (K. °सं), S आत्मनिश्रेयसे (T2 M °स) K8 कर्म, B1 D3 मत्र, S (except G2) मत्र (for सर्वे) — [b]) K5 महाबल, D1 महाबल, T2 M विशेषत — [d]) K1 Da1 °कोविद, K6 मन्त्रिभिर्मंत्रकोविदा, T1 G2–4 मत्रनिर्णयकोविदा

12 [b]) Da Dn1 D1 8 6 S चिंतयित्वा (for मन्त्र°) K3 M4 नृप (for नृप) — [d]) K2 वाच्यम् (for वाक्यम्) D1 एवम् (for एतद्) B Da Dn D4–8 वचन चेदमाददे (Da1 चेदमब्रवीत्, Dn2 Dn1 D6 चेद मब्रवीत्), M2 ततो वाचमुवाच ह Cc cites आददे

13 Before 13, D6 ins युधिष्ठिर उवाच — [a]) B D (except D1–3 6) कृष्ण पश्य (by transp) — [c]) T2 गजो (for गज) Da1 नव, G1 2 नाळ, M4 ताळ- (for नल) D1 राजन्पद्मवनानीव — [d]) B4 D7 8 स-, Dn2 D4 स (for वि) K0 T2 वि मृद्नत, K5 विमृदत, D6 निमर्दंत K3 4 D2 महाबल (for बल मम)

14 [a]) D1 वयं चैन, T2 M नैव चैन (T2 चैव) K1 om (hapl) from त्मान (in 14[a]) up to महा (in 15[a]) — [b]) K3 D2 प्रसहामो, D1 नोत्सहामो, D3 T2 M1 उत्सहेम, G3 उत्सगामो — [c]) D3 रेरिह्यमाण, G2 लेलिहान स (for लेलिह्यमान) Ś1 K0 सैन्य तु, T1 G4 सैन्य च (for सैन्येषु) — [d]) D4 प्रवृद्ध, T G विवृद्धम् (for प्र°) D2 पर्वतेष्विव पावक

15 K1 om यथा घोरो महा in [a] (cf v l 14) — [a]) K6 महाभोगस्, D2 महानागस् T2 M1–4 यथा नागो महाघोरस् — [b]) K0 2 [ऽ]य, M3 5 वा (for वै) K3 6 D2 विषोद्धत, M2 °ल्वणै, M4 °ल्वण (for °ल्बण) — [c]) K2–5 B D (except D1 3) क्रुद्ध, M वीर (for कृष्ण) — [d]) K3 5 D2 उग्र शस्त्र, Da2 D4 5 T G1 4 M तीक्ष्णशस्त्र (for °शस्त्र) T1 G1 3 4 -प्रतापन, T2 M विषोल्बण (M3 °णै) (for प्रतापवान्)

16 [a]) K6 प्रगृहीतचाप समरे (hypermetric) — [b]) K2 4 B Da Dn D1 4–8 प्रमुचन्निशिताञ्शरान्, K3 D2 3 M प्रविमुचञ्शिताञ्शरान् (D2 °ञ्शरान्सितान्), K6 प्रतिमुचञ्शरांञ्शितान्, T2 प्रतिमुचञ्शिताञ्शरान्, G1–3 विप्रमुचञ्शिताञ्शरान् — [c]) Da Dn1 D5 transp जेतु and क्रुद्धो — [d]) D1 तु (for च) K3 वज्रभृत् (for देवराट्)

17 [a]) K2 4 5 B Da Dn1 D2 5 T G1 3 4 M2 पाशभृच्चापि, Dn2 °धृक्चापि, D1 °हस्तो वा, D4 7 8 °धृक्चापि, G2 °हस्तश्च (for °भृच्चापि) — [b]) T1 G4 वै, G1 3 [ऽ]थ (for वा) — [c]) G2 हि (for तु) S1 Da1 D6 M2 स, D1 T1 G1 3 4 M4 तु (for सु) G3 सक्रुद्ध — [d]) K3 जेतु शक्यो (by transp) T1 G महामृधे (for °हवे).

18 [a]) B2 गत (for गते) — D2 reads from निमग्न (in 18[b]) up to कृष्ण (in 19[c]) in marg

C 6 4803
B 6 107 18
K 6 107 18

आत्मनो बुद्धिदौर्बल्याद्भीष्ममासाद्य संयुगे ॥ १८
वनं यास्यामि दुर्धर्ष श्रेयो मे तत्र वै गतम् ।
न युद्धं रोचये कृष्ण हन्ति भीष्मो हि नः सदा ॥ १९
यथा प्रज्वलितं वह्निं पतंगः समभिद्रवन् ।
एकतो मृत्युमभ्येति तथाहं भीष्ममीयिवान् ॥ २०
क्षयं नीतोऽस्मि वार्ष्णेय राज्यहेतोः पराक्रमी ।
भ्रातरश्चैव मे शूराः सायकैर्भृशपीडिताः ॥ २१
मत्कृते भ्रातृसौहार्दाद्राज्यात्प्रभ्रंशनं गताः ।
परिक्लिष्टा तथा कृष्णा मत्कृते मधुसूदन ॥ २२
जीवितं बहु मन्येऽहं जीवितं ह्यद्य दुर्लभम् ।
जीवितस्याद्य शेषेण चरिष्ये धर्ममुत्तमम् ॥ २३
यदि तेऽहमनुग्राह्यो भ्रातृभिः सह केशव ।
स्वधर्मस्याविरोधेन तदुदाहर केशव ॥ २४
एतच्छ्रुत्वा वचस्तस्य कारुण्याद्बहुविस्तरम् ।
प्रत्युवाच ततः कृष्णः सान्त्वयानो युधिष्ठिरम् ॥ २५
धर्मपुत्र विषादं त्वं मा कृथाः सत्यसंगर ।
यस्य ते भ्रातरः शूरा दुर्जयाः शत्रुसूदनाः ॥ २६
अर्जुनो भीमसेनश्च वाय्वग्निसमतेजसौ ।
माद्रीपुत्रौ च विक्रान्तौ त्रिदशानामिवेश्वरौ ॥ २७
मां वा नियुङ्क्ष्व सौहार्दाद्योत्स्ये भीष्मेण पाण्डव ।

---

(*sec m*) — $^{b}$) D8 विमम॰ (for नि॰)

19 $^{a}$) K8 D2 गोविंद, Da2 D6 दुर्धर्ष (for दुर्धर्ष) — $^{b}$) K4 B2-4 Dn2 D1 8 G2 M3-5 वै (for मे) B1 यत्र (for तत्र) K2 4 Da1 Dn2 D4 5 7 8 G2 M3-5 मे (for वै) D1 यादव, D6 वेगत॰ (for वै गतम्) K8 S गति (for गतम्) — $^{c}$) D1 योद्धु (for युद्ध) K2-5 B D (except D3 4 8) S रोचते (for ॰ये) T2 M मह्यं, G2 भीष्म (for कृष्ण) — $^{d}$) D5 हता (for हन्ति) M1 3 5 [ऽ]पि (for हि)

20 $^{b}$) T2 पतगा (for ॰ग) K8 D2 3 6 ॰सम भिद्रुत॰, K4 ॰भिद्रव॰, K5 ॰विश्रुत॰, Da1 ॰भिद्रुवन्, Dn1 D4 T1 G2 4 M1 3-5 ॰भिद्रवत् (for ॰भिद्रवन्) — K5 om 20$^{c}$-22$^{b}$ — $^{c}$) T2 M इ( M1 3 ऋ) च्छेत (for अभ्येति) — $^{d}$) K8 B1 2 4 D T1 G M भीष्ममेयिवान् T2 तथा भीष्म समेयिवान्

21 K5 om 21 (cf v l 20) — $^{a}$) Da Dn1 (m as in text) D5 [ऽ]स्मि, D8 हि (for ऽस्मि) — $^{b}$) D1 T2 पराक्रमन् (for ॰क्रमी) — $^{c}$) T2 सर्वा, G2 वीरा (for शूरा) — $^{d}$) M2 साक तैर् (for साय कैर्) T2 भृशवीक्षिता, G2 ॰ताडिता, M ॰विक्षता (for ॰पीडिता॰)

22 K5 om 22$^{ab}$ (cf v l 20) — $^{a}$) D1 यत्कृते, G2 अकृते (for मत्कृते) M2 ॰सौहार्दे — $^{b}$) K2 4 B Da Dn D4-8 S राज्यभ्रष्टा घन गता॰, K8 D1 2 राज्यभ्रष्टा समागता॰ — $^{c}$) Da Dn1 D5 परि क्षिप्ता (for ॰क्लिष्टा) M1 2 कृष्ण (for कृष्णा)

23 $^{a}$) D8 ह (for ऽह) — $^{b}$) K8 त्वद्य, D1 चाद्य, D3 भृशा, T2 M1-3 5 हि सु॰ (for ह्यद्य) Ś1 D5 दुर्बल (for दुर्लभम्) — $^{c}$) K3 D2 3 6 T1 G [अ]व, K5 वि, T2 [अ]र्धे॰; M1-3. 5 [अ]स्य (for [अ]द्य) Ś1 K1 2 शेषे च (for शेषेण) — $^{d}$) T1 G3 4 करिष्ये (for चरिष्ये) D3 व्रतमुत्तम

24 $^{b}$) B1 Da1 Dn1 D5 माधव (for केशव) — K0-2 om. (hapl) 24$^{cd}$ — $^{c}$) D3 स (for स्व) K8 [अ]वशेषेण, K5 D2 [अ]वरोधेन, Da1 M2 विरो धेन — $^{d}$) K4 5 D2 6 त्वमुदाहर, B D (except D1-3 6) हित व्याहर, T2 तमुदाहर K5 B2 D2 6 माधव (for केशव)

25 Before 25, D6 ins संजय उवाच — $^{a}$) K2 B Da Dn D4 5 7 8 एव (for एतत्) K5 D2 एव मुक्तो (K5 ॰क्त्वा) वचस्तस्मै — $^{b}$) D1 कारण्य यद्व दाहृत — D2 reads 25$^{cd}$ in marg (*sec m*)

26 Before 26, D6 T1 G1 2 4 ins श्रीभगवानु वाच (T1 G1 4 om उवाच); G3 श्रीकृष्ण॰, M वासुदेव — D2 om 26$^{ab}$ — $^{a}$) K1 धर्मपुत्र; G3 ॰राज (for ॰पुत्र) K5 मा, T1 G4 च (for त्व) — $^{b}$) K8 सत्यविक्रम, Da1 सत्यसगरे (sic), Da2 D5 सत्यसगर, D6 सत्यपराक्रम॰, G2 सत्यसगर (for ॰सगर) K5 कृथा सत्यपराक्रम — $^{c}$) K4 Da2 D5 यस्यैते (for यस्य ते) K5 सर्वे (for शूरा) — $^{d}$) Ś1 K1 शत्रु सूदन॰, K8 G1-3 ॰कर्शन, B1 D2 ॰सूदन, D3. 6 ॰मर्दना, T1 G4 M1-3 5 ॰कर्शना, T2 शक्रसूनुना (for शत्रुसूदना॰) K5 शारा शत्रुनिषूदना॰

27 $^{a}$) D1 अर्जुनो वासुदेवश्च, G2 ॰नो वायुपुत्रश्च — $^{d}$) D1 अधीश्वरौ, T1 G1 4 इवाश्विनौ (for इवेश्वरौ)

त्वत्प्रयुक्तो ह्यहं राजन्किं न कुर्यां महाहवे ॥ २८
हनिष्यामि रणे भीष्ममाहूय पुरुषर्षभम् ।
पश्यतां धार्तराष्ट्राणां यदि नेच्छति फल्गुनः ॥ २९
यदि भीष्मे हते राजञ्जयं पश्यसि पाण्डव ।
हन्तास्म्येकरथेनाद्य कुरुवृद्धं पितामहम् ॥ ३०
पश्य मे विक्रमं राजन्महेन्द्रस्येव संयुगे ।
विमुञ्चन्तं महास्त्राणि पातयिष्यामि तं रथात् ॥ ३१
यः शत्रुः पाण्डुपुत्राणां मच्छत्रुः स न संशयः ।
मदर्था भवदर्था ये ये मदीयास्तवैव ते ॥ ३२
तव भ्राता मम सखा संबन्धी शिष्य एव च ।
मांसान्युत्कृत्य वै दद्यामर्जुनार्थे महीपते ॥ ३३
एष चापि नरव्याघ्रो मत्कृते जीवितं त्यजेत् ।
एष नः समयस्तात तारयेम परस्परम् ।
स मां नियुङ्क्ष्व राजेन्द्र यावद्द्वीपो भवाम्यहम् ॥ ३४
प्रतिज्ञातमुपप्लव्ये यत्तत्पार्थेन पूर्वतः ।
घातयिष्यामि गाङ्गेयमित्युलूकस्य संनिधौ ॥ ३५

C 6 4921
B 6 107 36
K 6 107 35

28 B1 missing from $28^{a}$ up to $53^{a}$ prob due to lost fol — $^{a}$) K6 नियुज्य (for नियुङ्क्ष्व) Ś1 K1 सौहार्याद्, Da1 सोहार्दाद् D1 अथ वा मा नियुङ्क्ष्व त्व — $^{b}$) K1 योत्स्य, G3 M8 5 योक्ष्ये (for योत्स्ये) D1 भीष्मेण सह पाडव — K5 G1–3 om (hapl) $28^{c}$–$30^{b}$ — $^{c}$) Da1 त्वत्प्रयुक्ते, M5 तत्प्रयुक्तो K4 B2–4 D (except D1–8) महाराज (for ह्यह राजन्) — Ś1 Ko 1 om. (hapl) $28^{d}$–$30^{a}$ — $^{d}$) K3 च, Dn1 T1 नु (for न)

29 B1 missing Ś1 Ko 1 5 G1–3 om 29 (cf v l 28) — $^{b}$) K8 त्व नरर्षभं, Da1 पुरुषर्षभ°, D1 8 T1 G4 भरतर्षभ D2 आह्वयश्च नरर्षभ — $^{d}$) K8 D2 यद्रिच्छति च, D5 M2 यदि नेच्छसि, M4 यदि नेच्छति K2–4 B (B1 missing) D (except D4) फाल्गुन (D5 °न)

30 B1 missing Ś1 Ko 1 om $30^{a}$, K5 G1–3 om $30^{ab}$ (cf v l. 28) — $^{a}$) M4 अद्य (for यदि) K4 B2–4 Dn2 D7 T G4 M4 वीरे, Da Dn1 D4 6 8 M1–3 5 वीर (for राजञ्) K2 त्वत्प्रयुक्तो ह्यह राजन् (= $28^{c}$), D1 यदि भीष्मस्तु हतव्यो — $^{b}$) Ś1 Ko–2 Da1 पश्यामि, M2 पश्यति, M4 पश्यतु (for पश्यसि) M भारत (M4 पाडवा) — $^{c}$) G2 हता स्म्येकरणे°, M4 हता ह्येकरथे° — $^{d}$) Da Dn1 D5 वृद्धं कुरु° (for कुरुवृद्धं) D1 T2 M महाहवे (for पितामहम्)

31 B1 missing K6 om $31^{ab}$ — $^{a}$) K8 पश्याम (for पश्य मे) — $^{b}$) D5 6 M8 °स्यैव (for °स्येव) D1 विग्रहे (for सयुगे) — $^{c}$) D1 व्यमुचत, D8 विमुचन्तु, T2 विमुचामि Ś1 Ko 1 शरान्भीष्म (for महास्त्राणि) — $^{d}$) D8 तान्रथान्, M4 त रथान् T2 पातयिष्ये महारथान्

32 B1 missing D1 om $32^{ab}$ — $^{a}$) D3 यच्छत्रु° — $^{b}$) Ko 2 मम शत्रुर्, K1 स मच्छत्रुर्, K8 5 D2 4 7 सै मे शत्रुर् (for मच्छत्रु स) T1 G2 4 च (for न) — D6 om $32^{cd}$ — $^{c}$) B4 मदीया (for मदर्था) K2 4 B2–4 D (except D1–8, D6 om) भवदीया (for भवदर्था) T G2 4 M ते (for ये) D1 तवार्थो हि समभ्येति — $^{d}$) Da2 D1 5 मदर्थास् (for मदीयास्) Da2 Dn D1. 2 T1 G1 3 तथैव, G4 तदैव (for तवैव)

33 B1 missing — $^{b}$) D8 वा (for च) — $^{c}$) D3 T2 M8 (*inf lin*) मासानुत्कृत्य (for मांसान्यु°) Ko वै दद्याम्, K4 5 B (B1 missing) Da Dn D2–6 7 8 दास्यामि, T2 M8 (*inf lin*) दास्येह (for वै दद्याम्) K8 D2 प्रियान्प्राणानह जह्याम्, D1 त पुरस्कृत्य दद्या वै, D6 अह हि जीवित जह्याम्, M स्यात्कृत्य प्रदा स्येहम् — $^{d}$) Ko 2 4 अर्जुनार्थं, B (B1 missing) D (except D1–8 6) फा(D4 फ)ल्गुनार्थे K8 पराक्रमी (for महीपते)

34 B1 missing — $^{a}$) G2 M2 वापि (for चापि) Ś1 Ko नरश्रेष्ठो, K2 °श्रेष्ठ, D6 °व्याघ्र (for °व्याघ्रो) — $^{b}$) K8 मदर्थे, Da Dn1 D5 ममार्थे (for मत्कृते) — $^{c}$) K5 D2 मे, D1 व°, D8 नौ (for न°) M8 5 समय, Cc समयस् (as in text) — $^{d}$) K5 मारयैन, D1 तारयेम°, D8 तारयेव, T1 G3 4 रमयेम; T2 तारयाव, G2 रमयेयं, M1 2 तारयाव ; M4 तारयेय — After $34^{cd}$, K5 *repeats* $34^{ab}$ — $^{e}$) Da1 नियुद्ध (for नियुङ्क्ष्व) K3 6 D2 भद्र ते, Da1 राजेंद्रो (for राजेन्द्र) T2 M मा समायुंक्ष्व राजेंद्र — $^{f}$) K2 4 B (B1 missing) Dn D4 7 8 यथा योद्धा, K3 यावद्दीयो, D6 प्रतियोद्धा, T1 G यावत्सज्जो, T2 यदि जीवो, M4 यावज्जीवो (for यावद्द्वीपो) Cd cites द्वीपो (as in text) D1 यावज्जीव्य वधाम्यह

35 B1 missing K6 D2 om $35^{ab}$ — $^{a}$) Ko Da1 D5 उपप्लुवे, D1 अह चित्य, S उपप्लाव्ये, Cc d °प्लव्ये (as in text) — $^{b}$) K3 T G धीमता; D1

C. 6 4921
B 6 107 36
K 6 107 36

परिरक्ष्यं च मम तद्वचः पार्थस्य धीमतः ।
अनुज्ञातं तु पार्थेन मया कार्यं न संशयः ॥ ३६
अथ वा फल्गुनस्यैष भारः परिमितो रणे ।
निहनिष्यति संग्रामे भीष्मं परपुरंजयम् ॥ ३७
अशक्यमपि कुर्याद्धि रणे पार्थः समुद्यतः ।
त्रिदशान्वा समुद्युक्तान्सहितान्दैत्यदानवैः ।
निहन्यादर्जुनः संख्ये किमु भीष्मं नराधिप ॥ ३८
विपरीतो महावीर्यो गतसत्त्वोऽल्पजीवितः ।
भीष्मः शांतनवो नूनं कर्तव्यं नावबुध्यते ॥ ३९

युधिष्ठिर उवाच ।

एवमेतन्महाबाहो यथा वदसि माधव ।
सर्वे ह्येते न पर्याप्तास्तव वेगनिवारणे ॥ ४०
नियतं समवाप्स्यामि सर्वमेव यथेप्सितम् ।
यस्य मे पुरुषव्याघ्र भवान्नाथो महाबलः ॥ ४१
सेन्द्रानपि रणे देवाञ्जयेयं जयतां वर ।
त्वया नाथेन गोविन्द किमु भीष्मं महाहवे ॥ ४२

---

पूर्ववत्, M4 पृच्छत (for पूर्वत) — c) B2 Da Dn1 D5 T G M4 पात° (for घात°) — d) K4 B (B1 missing) Da Dn D4-8 T2 G2 इति लोकस्य, K5 इत्यल्पास्य (sic), D1 मृत्युलोकस्य (for इत्युल्कस्य)

36 B1 missing — a) K0 1 Da1 D2 8 परिरक्ष (for °रक्ष्य) K2 4 B (B1 missing) Da Dn D4-8 इद तावद्, D8 M4 मम तु तद्, T G M1 (sup lin) 2 8 5 मम कृत, M1 (orig) मया ह्यस्य (for च मम तद्) K5 परिरक्षत मद्वाक्य, D1 परिरक्षे समक्ष तु Cc cites तावत्. — b) K5 पार्थस्यैव च धीमत — c) K8 D6 अनुज्ञाते तु, K5 D2 T1 G °ज्ञातेन, D1 °ज्ञातश्च, T2 °ज्ञातस्तु (for °ज्ञात तु) M4 अनुज्ञात त्वया तेर्थे — d) D1 करिष्येह (for मया कार्य) K8 5 D2 असशय (K5 °य), T2 M8 5 नसंशय

37 B1 missing — a) Ś1 फल्गुणस्यैष, K0 2-4 B (B1 missing) D (except D4) T2 M5 फाल्गुनस्यैष (K0 °व), T1 G2 4 फल्गुनस्यैव — b) K8 5 D2 6 भाग, G2 मारं, G4 वाण (also भार as in text) K0 1 5 B4 Da1 परमितो, G2 परिमित, M2 °मिते, Cc °मित (as in text) — c) K5 D2 G2 8 निहनिष्यामि, B3 4 Da2 Dn2 D4 5 7 8 स हनिष्यति, T2 निहनिष्यंति — d) K8 भीष्म, D6 पार्थ (for भीष्म) K8 D3 4 6 8 परपुरजय, Dn1 °जय, D1 T2 M परमदुर्जय, G2 परपुरचय

38 B1 missing — a) G2 निःशेषम् (for अशक्यम्) — c) D8 त्रिदशान्वासवयुतान् — d) K8 D1 6 T2 देव° (for दैत्य°) — e) T2 M सखे, G1 2 मघे (for सख्ये) D1 हन्यादेवार्जुन सख्ये — f) K3 किं तु (for किमु) K1 नराधिप, M2 °धिप

39 B1 missing — a) Cd विपरीत D1 नष्टबुद्धिर्, T2 G2 8 M1-3 5 महावीर्य (for °वीर्यो) — b) M2 मितसत्त्वो, M8 5 हत°, Ca c d गत° (as in text) K1 D6 [s]ल्पजीविन, K4 B2 Da Dn1 D5 T1 G °चेतन, B4 D4 7 8 °जीवन — c) M5 शतनवो — d) K5 नान्व, B4 वा न, D1 नानु (for नाव) — After 39, D1 ins an addl colophon [adhy name जनार्दनवाक्य]

40 B1 missing — a) D1 एवमेव (for एवमेतन्) — b) T2 M2 यदा (for यथा) D1 केशव (for माधव) — c) Ś1 K0 1 8 D2 8 सर्वेप्ये(K1 °र्वे ए)ते, D1 सर्वेपि ते (for सर्वे ह्येते) — d) K2 B (B1 missing) Da Dn D8-5 7 8 वेगविधारणे (Dn1 by corr वेगवतो रणे), D1 वेग विधारितु, T2 M वेगस्य धारणे (for वेगनिवारणे)

41 B1 missing. D8 reads 41 in marg (sec m) — a) M4 नियत (for °त) T2 नियत सम्य करिष्यामि (hypermetric) — b) K4 B (B1 missing) D (except D1-8 6) सर्वमेतद् (for सर्वमेव) G2 मये° (for यथे°) — c) K5 यथा स, M1 (sup lin) 2 8 5 तस्य मे (for यस्य मे) K1 D7 पुरुषव्याघ्रा, B (B1 missing) Da Dn1 D4 5 8 S (except T2 M4) पुरुषव्याघ्रो — d) K4 B (B1 missing) Da Dn D4 5 8 पक्षे (for नाथो) K8 4 D8 T1 G4 M4 महाबल; B (B1 missing) Da Dn D4 5 7 8 व्यवस्थित, D2 महाबली (for °बल)

42 B1 missing — a) Da1 D5 सेंद्रेपि च (for सेन्द्रानपि) D8 (m as in text) देवान्सदैत्यगधर्वान् — d) K8-5 D2 8 6 T2 M महारणे; B (B1 missing) Da Dn D4 5 7 8 °रथ (for °हवे)

43 B1 missing — a) D1 न तु (for न तु) T2 न कृत्वामनृत वक्तुम् (sic) — b) K2 4 B8 Dn2 D4 6-8 स्वात्मगौरवात्, D1 स्वामि°, D8 पार्थ°, D5

न तु त्वामनृतं कर्तुमुत्सहे स्वार्थगौरवात् ।
अयुध्यमानः साहाय्यं यथोक्तं कुरु माधव ॥ ४३
समयस्तु कृतः कश्चिद्भीष्मेण मम माधव ।
मन्त्रयिष्ये तवार्थाय न तु योत्स्ये कथंचन ।
दुर्योधनार्थे योत्स्यामि सत्यमेतदिति प्रभो ॥ ४४
स हि राज्यस्य मे दाता मन्त्रस्यैव च माधव ।
तस्मादेवव्रतं भूयो वधोपायार्थमात्मनः ।
भवता सहिताः सर्वे पृच्छामो मधुसूदन ॥ ४५
तद्वयं सहिता गत्वा भीष्ममाशु नरोत्तमम् ।
रुचिते तव वार्ष्णेय मन्त्रं पृच्छाम कौरवम् ॥ ४६
स वक्ष्यति हितं वाक्यं तथ्यं चैव जनार्दन ।
यथा स वक्ष्यते कृष्ण तथा कर्तास्मि संयुगे ॥ ४७
स नो जयस्य दाता च मन्त्रस्य च धृतव्रतः ।
बालाः पित्रा विहीनाश्च तेन संवर्धिता वयम् ॥ ४८
तं चेत्पितामहं वृद्धं हन्तुमिच्छामि माधव ।
पितुः पितरमिष्टं वै धिगस्तु क्षत्रजीविकाम् ॥ ४९

C 6 4936
B 6 107 51
K 6 107 51

स्वार्थे', T2 चार्थे'; M1-3 5 स्वा(M2 स्व)र्थकारणात्, M4 चाथ गौरवात् (for स्वार्थे') — $^{d}$) K5 D2 यथाद्य; D1 यथोक्त (for यथोक्तं)

44 For the event, cf 6 41 38, 43 B1 missing K2 om (hapl) 44$^{ab}$ — $^{a}$) K5 D2 समय' सु, D3 T2 M4 °श्च T1 G4 तत (for कृत'). D5 किंचिन् (for कश्चिद्) — $^{b}$) K3-5 D1 2 6 T2 M1-3 5 मह (for मम) B (B1 missing) Da Dn D4 5 7 8 मम भीष्मेण (by transp) B (B1 missing) D (except D1-3 6) सयुगे (for माधव) — $^{d}$) B4 Da Dn1 D5 T1 G कदाचन (for कथ') — D2 om (hapl) 44$^{e}$-45$^{f}$ — $^{e}$) K3-5 B (B1 missing) Da Dn D4 5 7 T1 G दुर्योधनार्थं

45 B1 missing D2 om 45 (cf v l 44). — $^{a}$) K1 धाता (for दाता) Cv स हि राज्यस्य नो दाता — $^{b}$) K3 मन्त्रयिष्ये च (for मन्त्रस्यैव च) T1 G भारत (for माधव) — $^{d}$) T1 G4 M2 जयो' (for वधो') D3 वध्योपाय महात्मन' — $^{e}$) Ś1 K0 1 Da1 Dn1 (before corr) T2 महित Ś1 K0 1 सर्वं — $^{f}$) Ś1 K0 1 पृच्छामि, K2 B (B1 missing) Da Dn D4 5 7 8 प्रयाम, D3 गच्छामो, T2 M पृच्छाम, G3 प्रजामो (for पृच्छामो) Da1 मधुसूदन

46 B1 missing. D3 om 46 — $^{a}$) Da D5 त, D1 ते (for तद्) K5 सहमा (for सहिता) D6 T2 सर्वे (for गत्वा) — $^{b}$) K5 T2 M एव (for आशु). K2 D2 G2 M4 नरोत्तम D1 भीष्म नरवरोत्तम — $^{c}$) K2 रुचित, K3 T2 रोचते, K4 B2-4 Da Dn D4 5 7 8 नचिरात, K5 रुचित, D1 रुचिस्तु, D6 रुचिस्ते (for रुचिते) K4 B (B1 missing) Da Dn D4 5 7 8 सर्वे (Dn1 °वं, D8 °वें), D6 यदि (for तव) D6 वार्ष्णेय; T1 G पृच्छामि (for वार्ष्णेय) — D2 om 46$^{d}$-47$^{c}$ — $^{d}$) Ś1 K0 2 D1 पृच्छामि (for °म) T1 G मन्त्र वार्ष्णेय माचिर

47 B1 missing D2 om 47$^{abc}$ (cf v l 46) — $^{a}$) K1 Da1 D1 6 वक्षति (for वक्ष्यति) K3 हित वाच्यं, K6 हि तद्वाक्य — $^{b}$) K4 B2 3 Dn2 सत्यं (for तथ्य) K5 तथा तस्माज्, T2 तथास्माक, M1-3 5 तस्मान्मह्यं (for तथ्य चैव) K3 4 B (B1 missing) D (D2 om) T1 G1 3 4 M4 अस्मान् (for चैव) Da1 जनार्दन G2 तथ्यमस्मत्पितामह' (*inf lin* 'सजनार्दन') — T2 M om 47$^{cd}$ — $^{c}$) Da1 तथा (for यथा) K2 4 B (B1 missing) D (except D6, D2 om) T1 G च, K5 स (for स) Da D5 वक्ष्यसे, Dn1 वक्षते D5 सर्वं, G2 कृष्णस — $^{d}$) G2 कर्तासि (for °स्मि). T1 G4 स कर्तासीह सयुगे

48 B1 missing — $^{ab}$) S मे (for नो) K5 मन्त्रस्य (for जयस्य) G3 तात (for दाता) K4 B (B1 missing) Da Dn D4-8 स्यात्, K5 नो, D2 3 T1 G1 3 4 M [अ]थ (for च) K6 [s]मोघमन्त्र; D1 राज्यस्य च (for मन्त्रस्य च) B (B1 missing) Da Dn D4-8 T2 दृढव्रत (D5 °व्रत), D2 धृतव्रत, T1 G यतव्रत (for धृत°) — $^{c}$) K1 बाल', Da1 बाला; T1 G4 बाल्ये, T2 बला (for बाला') T2 पितृ- (for पित्रा) K4 B2 3 Da1 विहिनाश्च; T1 G विहीना' स

49 B1 missing Da Dn1 D5 om 49$^{ab}$ — $^{a}$) K5 ते, M2 तन् (for त) K3 5 D2 3 6 वै, T2 M मे (for चेत्) K5 D2 हतुम् (for वृद्ध) — $^{b}$) K1 हर्तुम्; G3 M2 गंतुम् (for हन्तुम्) K3 B4 Dn2 G1 3 M1 इच्छाम (for °मि) D1 भारत (for माधव) K5 D2 इच्छामि युधि माधव — After 49$^{ab}$, D1 ins

C 6 4937
B 6 107 52
K 6 107 52

संजय उवाच ।

ततोऽब्रवीन्महाराज वार्ष्णेयः कुरुनन्दनम् ।
रोचते मे महाबाहो सततं तव भाषितम् ॥ ५०
देवव्रतः कृती भीष्मः प्रेक्षितेनापि निर्दहेत् ।
गम्यतां स वधोपायं प्रष्टुं सागरगासुतः ।
वक्तुमर्हति सत्यं स त्वया पृष्टो विशेषतः ॥ ५१
ते वयं तत्र गच्छामः प्रष्टुं कुरुपितामहम् ।
प्रणम्य शिरसा चैनं मन्त्रं पृच्छाम माधव ।
स नो दास्यति यं मन्त्रं तेन योत्स्यामहे परान् ॥ ५२
एवं संमन्त्र्य वै वीराः पाण्डवाः पाण्डुपूर्वज ।
जग्मुस्ते सहिताः सर्वे वासुदेवश्च वीर्यवान् ।
विमुक्तशस्त्रकवचा भीष्मस्य सदनं प्रति ॥ ५३
प्रविश्य च तदा भीष्मं शिरोभिः प्रतिपेदिरे ।
पूजयन्तो महाराज पाण्डवा भरतर्षभ ।

---

424* यस्याङ्के क्रीडित नित्य बाल्ये च परिवर्धिता ।
अस्त्राणि विधिवच्चैव शिक्षितानि जनार्दन ।
त हन्तुमुद्यता कृष्ण राज्यहेतोर्नेय युधि ।

— $^{c}$) K3 5 D2 हि, K4 B (B1 missing) Da Dn D4–8 G1. 3 च (for वै) G2 पितु पुत्रमनिष्ट च — $^{d}$) D1 3 T1 G2 4 °जीवितं, M2 °जीविता (for °जीविकाम्) G1 3 ततो दु खतर नु किं (= 6 23 $36^{d}$) — After 49, D1 ins

425* सत्य बृहस्पतेर्वाक्यं देवानामग्रत किल ।
भाषित गुरुणा पूर्व तन्निबोध जनार्दन ।
पुत्र पितरमासाद्य पिता पुत्र च मानद ।
राज्यार्थे घातयेदेव क्षत्रधर्म सनातन ।

50 B1 missing Ś1 K0 1 om (with ref) $50^{a}$–$51^{d}$ G1 3 om the ref. — $^{a}$) K4 T2 महा तेजा, K5 स वार्ष्णेयस् (for महाराज) — M5 om (hapl.) $50^{bc}$, but writes the same within brackets after $51^{d}$ — $^{b}$) K5 तदा वै (for वार्ष्णेय) Da1 G3 °नदन, D3 कुरुनदन — $^{c}$) D1 सु, T2 M1–4 तन्, G2 ते (for मे) K2 B (B1 missing) Da Dn D4 5 7 8 महाप्राज्ञ, D1 T2 M1–4 °राज (for °बाहो) — $^{d}$) K2 B (B1 missing) D (except D1–3 6) राजेंद्र, M4 सत्य तु (for सतत)

51 B1 missing Ś1 K0 1 om $51^{abcd}$ (cf v l 50) — $^{a}$) T2 कृतो (for कृती) Da1 भीष्म — $^{b}$) M5 प्रेषितेन (for प्रेक्षितेन) K3 निर्दहन्, D3 निर्दहे K5 प्रहितेनापि निर्वृत — $^{c}$) D1 गम्यते (for °ता) K3 त, G1–3 M1–3 5 स्व (for स) K5 D2 गम्यता साधयोपाय — $^{d}$) D6 पृष्टु (for प्रष्टु) K3 5 B3 D2 6 T G M1 3–5 सागरगासुत — $^{e}$) T2 अर्हसि (for अर्हति) D3 तथ्य, T1 G सम्यक् (for सत्य) T2 यत् (for स) — $^{f}$) K5 दृष्टो, G3 पृष्टे (for पृष्टो) K1 विशेपय (sic), T1 G न सशय (for विशेषत)

52 B1 missing — $^{a}$) K5 पृच्छाम, Da1 Dn2 D2 4 5 गच्छाम — $^{b}$) T2 द्रष्टु (for प्रष्टु) — $^{c}$) K1 चैव, T2 देव (for चैन) B (B1 missing) D (except D1–3 6) गत्वा शातनव वृद्ध — $^{d}$) K5 D2 पृच्छस्व, D1 5 पृच्छामि (for पृच्छाम) K3–5 B2–4 D T G M4 भारत, M1–3 5 भारत (for माधव) — $^{e}$) K2 B4 Dn1 (by corr) n2 D4 7 8 स वो (for स नो) Ś1 K3 यन्मत्र, K4 B (B1 missing) Da Dn1 D4 5 7 8 मंत्र य (by transp), D6 सन्मत्र, T1 G समत्र (G4 °त्र), T2 M तन्मत्र (for य मन्त्र) — $^{f}$) B2 वय, M4 चरान् (for परान्)

53 B1 missing $53^{a}$ Before 53, K0–2 ins संजय उवाच — $^{a}$) B2–4 Da Dn D4–8 आमन्त्र्य (for समन्त्र्य) K3 4 B2–4 D (except D1) S (except M1–3) ते (for वै) K3 D2 रात्रौ (for वीरा) K5 एव समन्त्रिते रात्रौ — G3 om (hapl) $53^{b}$–$54^{c}$. — $^{b}$) K3. 4 B D2 3 T2 पाडुपूर्वज (B2 °ज), Da1 M2 °पूर्वजा (Da1 °जा), D1 सहपूर्वजा — $^{c}$) D1 आ जग्मु, D3 जग्मुर्वै — $^{d}$) T2 वासुदेवेन ते तदा — $^{e}$) T2 M विमुक्तकवचा सर्वे

54 G3 om $54^{abc}$ (cf v l 53) — $^{a}$) G2 प्रसाद्य (for प्रविश्य) T2 M ते (for च) T1 G1 2 4 ततो (for तदा) — $^{b}$) K3 5 D2 शिबिरे (D2 °र) (for शिरोभि) K4 B3 4 Da Dn1 D3–6 8 T G2 4 प्रणिपेदि(Da D3 °ति)रे, Co प्रति (as in text) — $^{d}$) K3 4 B D (except Dn2) G1–3 M4 भरतर्षभं; M1 3 5 °र्षभा (for °र्षभ) — $^{e}$) K3 5 D2 3 चैव, Da1 D5 चेद, T2 M भूमौ (for चैन) — $^{f}$) B1. 3 4 Dn2 D4 6–8 अभ्ययु (for अन्वयु). D1 भीष्मस्य शरण ययु — After 54, D1 6 ins

प्रणम्य शिरसा चैनं भीष्मं शरणमन्वयुः ॥ ५४
तानुवाच महाबाहुर्भीष्मः कुरुपितामहः ।
स्वागतं तव वार्ष्णेय स्वागतं ते धनंजय ।
स्वागतं धर्मपुत्राय भीमाय यमयोस्तथा ॥ ५५
किं कार्यं वः करोम्यद्य युष्मत्प्रीतिविवर्धनम् ।
सर्वात्मना च कर्तास्मि यद्यपि स्यात्सुदुष्करम् ॥ ५६
तथा ब्रुवाणं गाङ्गेयं प्रीतियुक्तं पुनः पुनः ।
उवाच वाक्यं दीनात्मा धर्मपुत्रो युधिष्ठिरः ॥ ५७
कथं जयेम धर्मज्ञ कथं राज्यं लभेमहि ।
प्रजानां संक्षयो न स्यात्कथं तन्मे वदाभिभो ॥ ५८
भवान्हि नो वधोपायं ब्रवीतु स्वयमात्मनः ।
भवन्तं समरे राजन्विषहेम कथं वयम् ॥ ५९
न हि ते सूक्ष्ममप्यस्ति रन्ध्रं कुरुपितामह ।
मण्डलेनैव धनुषा सदा दृश्योऽसि संयुगे ॥ ६०

C 6 4950
B 6 107 65
K 6 107 65

426* चरणोपगतान्गृह्य परिष्वज्य च पाण्डवान् ।
मूर्ध्नि चैतानुपाघ्राय अङ्कमारोपयत्तदा ।
वाष्पपर्याकुलमुख॰ स्मृत्वा पाण्डु पुन पुन॰ ।

[ ( L 1 ) D6 शरणो॰ ( for चरणो॰ ), and परिरभ्य ( for ॰ष्वज्य ) — ( L 2 ) D6 चैनन् ( for चैतान् ) ]

55 $^{a}$ ) K3 ॰भागो ( for ॰बाहुर् ) — Da1 D5 om ( hapl ) 55$^{cd}$ Before 55$^{cd}$, D6 ins भीष्म उवाच — $^{c}$ ) B2 तत्र ( for तव ) D3 कौंतेय ( for वार्ष्णेय ) — D8 om ( hapl ) 55$^{de}$ — $^{d}$ ) D1 युधिष्ठिर ( for धनजय ) — $^{e}$ ) K4 T1 G4 धर्मराजाय, D1 भीमविजयौ ( for धर्मपुत्राय ) — $^{f}$ ) D1 स्वागत, T2 स्वागता ( for भीमाय ) D1 द्वयो॰, G2 तदा ( for तथा )

56 $^{a}$ ) K2 5 कार्यं वा, B Da Dn D4 5 7 8 वा कार्यं, D6 व॰ कार्यं ( by transp ) — K5 om 56$^{bc}$ — $^{b}$ ) B D ( except D2 6 ) युष्माक प्रीतिवर्धन ( Da1 ॰न॰ ), T1 युष्मत्प्रीतिवर्धन ( submetric ), T2 युष्म प्रीतिविवर्धन, G2 युष्मद्रीतिविवर्धनात् — After 56$^{ab}$, G2 ins

427* युद्धादन्यत्र हे वत्सा॰ प्रीयन्तां मा विशङ्कय ।

— $^{c}$ ) D1 सर्वागम्य; D2 स चात्मना, M2 5 सर्वात्मनो K4 B Da Dn D4 5 7 8 T2 M2 5 [अ]पि, D1 हि, M1 3 4 वि ( for च ) — $^{d}$ ) K4 B Da1 Dn D3 7 8 यदपि ( for यद्यपि )

57 Before 57, D1 6 ins सजय उवाच — $^{a}$ ) K3 तत्तु, K5 D2 3 6 एवं, B2 M1 ( *sup lin* ) 3–5 ततो, T G4 M1 ( orig ) इति ( for तथा ) B2 ब्रुवत ( for ब्रुवाण ) — $^{b}$ ) T2 प्रीतियुक्तः, G2 M2 प्रिययुक्त ( for प्रीतियुक्त ) — $^{c}$ ) B Da Dn D4 5 7 8 राजा ( for वाक्यं ) D1 धर्मज्ञो ( for दीनात्मा ) — $^{d}$ ) D6 धर्मराजो ( for ॰पुत्रो ) B Da Dn D4 5 7 8 प्रीतिपूर्व ( B Dn2 ॰युक्त ) मिदं वच॰ — After 57, K4 ins

428* यथा पृच्छसि मामद्य कथ तन्मे च वा विभो ।

58 Before 58, D6 ins युधिष्ठिर उवाच — $^{a}$ ) K5 T2 M1–3 5 जयेय ( for ॰म ) B1. 3 Dn2 D1 T2 सर्वज्ञ ( for धर्मज्ञ ) — $^{b}$ ) D2 जयेमहि, D5 लभामहे — $^{c}$ ) G2 प्रजाया ( for ॰ना ) K4 B Da Dn1 D4 5 7 8 सशयो, D1 T1 G4 तु क्षयो, T2 G1. 3 M च ( M4 स्व- ) क्षयो ( T2 ॰य ) — $^{d}$ ) K1 om ( hapl ) from तन्मे up to कथ ( in 59$^{d}$ ) K0 वदाविभो, K4 B Da2 Dn D1. 2 4 5 7 8 T1 G वद प्रभो, Da1 om, M4 सदा विभो ( for वदाभिभो ) K3 5 D2 6 तन्मे वद पितामह

59 K1 om up to कथ ( in 59$^{d}$ ) ( cf v l 58 ) — $^{a}$ ) Da1 भगवान्हि नो ( hypermetric ), D1 यथा चैव, D2 भवांस्तात, D6 भवानपि, T2 भगवन्हि ( for भवान्हि नो ). — $^{b}$ ) K3 5 अब्रवीत्, M4 ब्रवीति ( for ब्रवीतु ) D1 प्रब्रवीहि त्वमात्मन — $^{c}$ ) K4 B Da Dn D4 5 7 8 वीर, D1 त्वां हि, D8 T1 G तात ( for राजन् ) — $^{d}$ ) K0 G3 विपयेम, D1 विषहाम, T2 न जयामि, M विजयेम ( for विषहेम ) K5 कथं जय, T2 M1–4 कथचन

60 $^{a}$ ) K5 T2 G1 3 M5 मे ( for ते ) Da1 न हि ते सूक्ष्ममथ स्वैर ( hypermetric ) — $^{b}$ ) K3 5 D2 M4 छिद्र, Da1 व्रतं ( sic ) ( for रन्ध्र ) — $^{c}$ ) Ś1 K0 1 सतालेन, K2 सतार्णेन ( for मण्डलेन ) K3 D2 G3 [इ]व ( for [ए]व ) M1–3 5 धनुष — $^{d}$ ) K0–2 दृश्योपि, D3 ( marg *sec m* ) दृश्यसि ( for दृश्योऽसि ) K3–5 B Da Dn D2 4–8 T1 G दृश्यसे ( K5 G2 3 ॰से ) सयुगे सदा ( K4 तथा, K5 D2 3 G2 तदा ), D1 सदा त्वं दृश्यसे मृधे, T2 M सयुगे ( T2 M4 ॰को ) दृश्यसे स- ( T2 त ) दा

C 6 4950
B 6 107 63
K 6 107 65

नाददानं संदधानं विकर्षन्तं धनुर्न च ।
पश्यामस्त्वा महाबाहो रथे सूर्यमिव स्थितम् ॥ ६१
नराश्वरथनागानां हन्तारं परवीरहन् ।
क इवोत्सहते हन्तुं त्वां पुमान्भरतर्षभ ॥ ६२
वर्षता शरवर्षाणि महान्ति पुरुषोत्तम ।
क्षयं नीता हि पृतना भवता महती मम ॥ ६३
यथा युधि जयेयं त्वां यथा राज्यं भवेन्मम ।
भवेत्सैन्यस्य वा शान्तिस्तन्मे ब्रूहि पितामह ॥ ६४
ततोऽब्रवीच्छांतनवः पाण्डवान्पाण्डुपूर्वज ।
न कथंचन कौन्तेय मयि जीवति संयुगे ।
युष्मासु दृश्यते वृद्धिः सत्यमेतद्ब्रवीमि वः ॥ ६५
निर्जिते मयि युद्धे तु ध्रुवं जेष्यथ कौरवान् ।
क्षिप्रं मयि प्रहरत यदीच्छथ रणे जयम् ।
अनुजानामि वः पार्थाः प्रहरध्वं यथासुखम् ॥ ६६
एवं हि सुकृतं मन्ये भवतां विदितो ह्यहम् ।
हते मयि हतं सर्वं तस्मादेवं विधीयताम् ॥ ६७

---

61 a) B D (except D3 6) T2 G1-3 M आद दान, T1 G4 आदधान (for नाददान) Ś1 K0-3 B1 D2 न सधान (for सदधान) — b) K3-5 D2 6 आकर्षत (for विक°) D1 नव, M2 न वा, M3 महत् (for न च) — c) D1 पश्याम, D3 8 6 T1 G4 पश्यामि K3 4 B D S (except M3) त्वां (for त्वा) — d) Dn2 D4 रथ सूर्यम्, T3 M4 रथधुर्ये (for रथे सूर्यम्) B4 D3 G2 इवास्थित, Dn2 इवापर, D8 इवोदित, T2 व्यवस्थित; M4 [ऽ]प्यवस्थित (for इव स्थितम्)

62 a) K2 B Da2 Dn D3 4 7 8 T2 M रथाश्वनर नागाना, K3 वरश्च नर°, Da1 D5 रथाश्व(D5 °श्र) रथ°, G2 न चाश्वरथ° — b) T2 क्षयिष्यन् (for हन्तार) K3 परवीरहा — c) K4 कथ वोत्सहते, B Da Dn D4 5 7 8 कोथ (Da1 Dn1 °थ) वो°, D3 6 क॰ स्मसुत्सहते (D6 °से), S क इहो° (M2 त इवो°) (for क इवो°) K1 हतुं, K4 तूर्णं, B Da Dn D4 5 7 8 T2 जेतु, D6 गतु (for हन्तु) D1 नैवोत्स हेत हतु स्वा — d) Ś1 K0-2 D3 त्वां पुनर्, D6 हतार (for त्वा पुमान्) D6 (in marg) भरतर्षभ D1 पुमान्कश्चिन्महाव्रत

63 a) D1 T2 वर्षत, D3 6 वर्ष(D6 °र्श)त; D8 वर्षतां (for वर्षता) — b) D1 महात (for महान्ति) K3 पुरुषोत्तम, T1 G पुरुषर्षभ B Da Dn D4 5 7 8 सयुगे (B1 Da Dn1 D5 भवता) वैशस कृत, T2 क्षय नीता नृपा युधि, M1-3 5 सतत भरतर्षभ, M4 क्षय नीता महारणे — cd) T2 अय (for क्षय) G3 पृतना M1-3 5 transp पृतना and भवता K4 B D (except D1-3 6) सयुगे (for भवता) G3 महतीं M4 भवता महती सेना मम या पृथिवीपते

64 a) K3 5 B Da2 Dn D4-8 T G M1-3 5 जयेम, D2 जयेमस् (for जयेय) Ś1 K1 स्वा, K3 मा, K3m त्वां (as in text) Da1 corrupt, M4 जयेय त्वा यथा राज्य — b) K3 4 D2 6 लभेमहि, Dn2 D4 7 8 भृश मम (for भवेन्मम) M4 भवेन्मम महामते — c) K0 1 3 4 D6 भवत्, B Da Dn D4 5 7 8 मम, M1-3 5 यथा (for भवेत्) K0 वा शक्तिस्, B Da Dn D4 5 7 8 च क्षेम, D1 नो शातिस्, T2 M1-3 5 चाहानिस्, G2 चाशातिस् (for वा शान्तिस्) K2 मत्सैन्यस्य च वा शक्तिस् — d) K1 G3 त मे (for तन्मे)

65 b) D1 °व (for °वान्) K3 4 B Da Dn2 D1 2 5 8 °पूर्वज (for °पूर्वज) — Before 65cd, D5 ins भीष्म उवाच — e) D1 2 T2 G1 M युष्माक (for °सु) G1-3 वुद्धि (for वृद्धि) K4 B Da Dn D4-8 जयो भवति सर्वज्ञ (Da Dn1 D5 8 धर्मज्ञ, Dn1 m धर्मस्य) — f) K4 B D (except D2) S ते (for वः)

66 a) K4 B D (except D2 3) T1 G4 युद्धेन (for युद्धे तु) — b) B Da Dn D4 5 7 8 रणे (for ध्रुव) K3 D1 T G2 4 जेष्यसि, M1-3 5 जेष्य(M2 °ष्य)ति (for जेष्यथ) K3 4 B D T2 M1 3-5 पांडवा (K3 D2 6 T2 °व) (for कौरवान्) K5 जय प्राप्स्यसि पाडव — c) K4 B3 4 Dn2 D4 6-8 प्रा(Dn2 D6-8 प्र)हरध्व, B2 प्राहरत (for प्र°) — d) Ś1 K1 यदीच्छत, K2 यद्देच्छथ, K3 D2 यदि(D2 °दी)च्छध्व, Da2 D4 यदीच्छेथ, D8 तदीच्छध्व, T G2 4 यदि(T1 G2 °दी)च्छसि, M2 यदिच्छ ह (for यदीच्छथ) K3 D1 जयं रणे (by transp) — e) K1 पार्थ, K3 G2 पार्था, Da1 G3 पार्थ (for पार्था) — f) K1 यथासुख (for °सुखम्)

67 a) T2 सुख (for एव) K3 5 D2 वै (for हि) G2 एव कृतमह मन्ये — b) D4 8 T2 भवसा, G2 भवतो, M4 भवद्भिर् (for भवतां) K2 विहितो, K3 5 D2 निहतो (for विदितो) D1 [ऽ]स्त्वह, D6

युधिष्ठिर उवाच ।
ब्रूहि तस्मादुपायं नो यथा युद्धे जयेमहि ।
भवन्तं समरे क्रुद्धं दण्डपाणिमिवान्तकम् ॥ ६८
शक्यो वज्रधरो जेतुं वरुणोऽथ यमस्तथा ।
न भवान्समरे शक्यः सेन्द्रैरपि सुरासुरैः ॥ ६९
भीष्म उवाच ।
सत्यमेतन्महाबाहो यथा वदसि पाण्डव ।
नाहं शक्यो रणे जेतुं सेन्द्रैरपि सुरासुरैः ॥ ७०
आत्तशस्त्रो रणे यत्तो गृहीतवरकार्मुकः ।
न्यस्तशस्त्रं तु मां राजन्हन्युर्युधि महारथाः ॥ ७१
निक्षिप्तशस्त्रे पतिते विमुक्तकवचध्वजे ।
द्रवमाणे च भीते च तवास्मीति च वादिनि ॥ ७२
स्त्रियां स्त्रीनामधेये च विकले चैकपुत्रके ।
अप्रसूते च दुष्प्रेक्ष्ये न युद्धं रोचते मम ॥ ७३
इमं च शृणु मे पार्थ संकल्पं पूर्वचिन्तितम् ।
अमङ्गल्यध्वजं दृष्ट्वा न युध्येयं कथंचन ॥ ७४

C 6 4965
B 6 107 80
K 6 107 79

---

T2 [s]स्म्यहं (for ह्यहम्) — c) Dn2 हता सर्वे, D3 हते सर्वं, M2 हता सर्वं, M5 जगत्सर्वं — d) K5 D2 M4 एतद्, M2 एव (for एव)

68 a) T1 G तत्त्वम्, T2 यस्माद् (for तस्माद्) D2 T2 उपायान् (for °य) S1 K0 1 D1 मे (for नो) — b) K3 D2 युधि, D1 युद्ध (for युद्धे) D1 जया°, M2 जयेमही T2 विजयो युधि लभ्यते — c) D6 एव त, T2 निहत्य (for भवन्त) T2 त्वामह (for समरे) Da Dn1 D7 क्रूर (for क्रुद्ध) — d) K2 4 B Da Dn D4 6 7 8 T2 M °हन्तम् (for °पाणिम्) K1 दडपाणिनिरातक (corrupt)

69 a) K3 4 D6 हन्तुं (for जेतु) — K0 M5 om (hapl) 69b–70c — b) B2 4 Da Dn1 D7 7 8 [s]पि; D2 T1 G वा (for ऽथ) — c) K4 न तावत्, D2 भवान (by transp) K1 शक्त (for शक्य) K5 नाह जेतु रणे शक्य (cf 70c) — d) = 6 84 43b, 103 70d

70 K0 M5 om 70abc (cf v l 69) M2 om the ref — a) K2 B2 Da Dn1 D4 6 7 8 T2 M1–4 महाराज (for °बाहो) — b) K1 यथावदस्य पाडव — c) K2 Dn2 D2 4 6 transp शक्य and जेतु

71 K4 B Da Dn D4–8 *repeat* 71ab after 81ab — a) K0 1 अस्त्रशस्त्रो, Da1 आत्तशस्त्रे, T1 G4 आर्त शस्त्रो — b) Ś1 K1 °वरकार्मुका, T1 G °शरकार्मुक — c) K1 न, T1 G हि (for तु) K0 मा (for मा) B3 4 Dn2 D4 7 8 ततो मा न्यस्तशस्त्र तु, D1 न्यस्तशस्त्र पुमाश्राजन् — d) Ś1 K0 हन्याद्यदि, K1 हन्या यदि, K3 हन्ययदि, K6 D1 हन्याद्युधि, B Da Dn D4 6 7 8 एते (B2 रणे, Da D5 हते) हन्युर्, D2 युधि हन्युर् (by transp) Ś1 K0–2 6 D1 महारथ (for °रथा)

72 a) B2 विक्षिप्तशस्त्रे, D1 विमुक्त°, D8 7 निक्षिप्य शस्त्रे, D8 निक्षिप्तशस्त्र, M3 5 निक्षिप्तशस्त्रै (for °शस्त्रे) T1 G1 3 4 विमुखे (for पतिते) — D3 transp 72b and 72d — b) Dn1 D8 विमुक्तकवचे ध्वजे — d) D3 [अ]हमिति (for [अ]स्मीति च) M1–2 5 यो वदेत् (for वादिनि) — After 72, G2 3 ins

429* स्त्रीजिते स्त्रीप्रधाने च स्त्रीप्रधायिनि धर्मज ।

73 a) Ś1 स्त्रिय, K0 1 3 6 स्त्रियि, Da1 M4 स्त्रिय (for स्त्रिया) K3 Da1 स्त्रिनामधेये च — b) K2 विकल्पे, K6 कपिले, T1 G4 विमुक्ते (for विकले) K0 2 3 6 B3 Dn2 D1 6 G1 चैव (for चैक) B3 पुत्रक, Dn2 °पुत्रिणि (for पुत्रके) K4 damaged — c) K3 अपसूते, K3p हतसूते, D8 (marg) अपुत्रिते; Ca अप्रसूते (as in text) Ś1 K0–2 [s]थ (K0 2 च) दुष्पापे, K3 6 D2 महाराज, K4 च***, B1–3 Da Dn1 D5 दुष्कृतौ (B2 °तो, Da2 °ते) च; D8 च दुष्पापे, T G M4 च षण्डे च, M1–3 5 च भीते च, text as in K3p Cd cites दुष्पोपे B4 Dn2 D4 6–8 अप्रशस्ते नरे (D6 जने) चैव, D1 अप्रबुद्धे तथा बाले — d) D2 मा च ते (for रोचते)

74 a) K0–2 6 D1 6 T2 G1 2 इद (for इम) G3 तु, B D (except D1–3 6) मे, T1 G4 हि (for च) G2 शृणु च (by transp) G3 समरे (for शृणु मे) B D (except D1–3 6) राजेंद्र (for मे पार्थ) M5 om मे — b) S1 K0–2 सुविनिश्चित, D6 पूर्वसचित (for °चिन्तितम्) — c) K1 D1 8 M5 अमगल्य, D6 अमगल, T1 G M4 असकल्प, Co अमागल्य°, Ca अमङ्गल्य (as in text) T2 सकल्पध्वजत दृष्ट्वा (sic) — d) Ś1 Da2 युधेय, Da1 D1–3 6 युद्धेय (for युध्येय) Dn2 M5 कदाचन (for कथचन) O1 8 न युद्ध रोचते मम (= 73d)

C 6 4966
B 6 107 80
K 6 107 80

य एष द्रौपदो राजंस्तव सैन्ये महारथः ।
शिखण्डी समराकाङ्क्षी शूरश्च समितिंजयः ॥ ७५
यथाभवच्च स्त्री पूर्वं पश्चात्पुंस्त्वमुपागतः ।
जानन्ति च भवन्तोऽपि सर्वमेतद्यथातथम् ॥ ७६
अर्जुनः समरे शूरः पुरस्कृत्य शिखण्डिनम् ।
मामेव विशिखैस्तूर्णमभिद्रवतु दंशितः ॥ ७७
अमङ्गल्यध्वजे तस्मिन्स्त्रीपूर्वे च विशेषतः ।
न प्रहर्तुमभीप्सामि गृहीतेषुं कथंचन ॥ ७८
तदन्तरं समासाद्य पाण्डवो मां धनंजयः ।
शरैर्घातयतु क्षिप्रं समन्ताद्भरतर्षभ ॥ ७९
न तं पश्यामि लोकेषु यो मां हन्यात्समुद्यतम् ।
ऋते कृष्णान्महाभागात्पाण्डवाद्वा धनंजयात् ॥ ८०
एष तस्मात्पुरोधाय कंचिदन्यं ममाग्रतः ।
मां पातयतु बीभत्सुरेवं ते विजयो भवेत् ॥ ८१
एतत्कुरुष्व कौन्तेय यथोक्तं वचनं मम ।
ततो जेष्यसि संग्रामे धार्तराष्ट्रान्समागतान् ॥ ८२

संजय उवाच ।

तेऽनुज्ञातास्ततः पार्था जग्मुः स्वशिबिरं प्रति ।

---

75 $^{a}$) G1 स (for य) Ko Da1 द्रोपदो, K5 Dn1 द्रुपदो, Co d द्रौपदो (as in text) — After 75$^{ab}$, D1 ins

430* अपुमांस्तस्य पुत्रस्तु पूर्वमासीद्विशा पते ।

— $^{c}$) D8 7 शिषंडी Ko 2 समर(Ko °रे)काक्षी, K3-5 B D M1 3-5 समराम(D1 °व-, D5 °ज)र्षी, T2 M2 समरश्लाघी (for °राकाङ्क्षी) — $^{d}$) D1 सुतश्च समितिंजय

76 $^{a}$) B2 D1 तथाभवच्च (D1 °द्य) D1 स्त्रीपूर्व — $^{b}$) D1 पूस्त्वम् (for पुंस्त्वम्) B D (except D1-3 6) T1 G4 समागत, M2 उपागत — $^{c}$) Dn1 चापवतोपि (for च भवन्तोऽपि) — $^{d}$) G2 पूर्वम् (for सर्वम्) D8 6 यथाभवत् (for यथातथम्)

77 $^{a}$) B2 T1 G2 4 वीर (for शूर) — $^{c}$) K4 G2 मामेव (for मामेव) Ko 2 B D (except D1-3) तीक्ष्णैर्, T1 G क्षिप्रम् (for तूर्णम्) — $^{d}$) G8 अभिद्रुत्य तु, M4 अभिद्रवत (for °द्रवतु) K1 S दसित (G2 M4 °त), D8 सयुगे (for दशित) Ko 2 अभ्यद्रवदसित (sic)

78 $^{a}$) Dn1 reads 78$^{a}$ in marg T G3 4 M2 4 असकल्प°, Cd अमङ्गल्य° (as in text) Da D5 न प्रहर्तुमभीप्सामि (= 78$^{c}$) — $^{b}$) T2 तु (for च) D1 विशा पते (for विशेषत°). — $^{c}$) D2 M1 3 5 अभीच्छामि, D6 T2 अभीप्स्यामि K5 न प्रहर्तुमिहेच्छामि, D2 न च प्रहर्तुमिच्छामि — After 78$^{c}$, Da1 reads 78$^{b}$ and repeats 78$^{c}$ — Da2 om (hapl) from गृहीतेषु (in 78$^{d}$) up to पश्यामि (in 80$^{a}$) — $^{d}$) Ko 2 D6 T2 M1 3. 5 गृहीतेषु, K3 D2 °तेषौ, K4 B Da2 Dn D3. 5 7 T1 G M2 4 °तेषु, K5 °तोपि (for °तेषु) D1 गृहीतास्त्रो विशेषत

79 Da1 om 79 (cf v l 78) — $^{a}$) T2 तदनतरमासाद्य, M3. 5 तदनतर समासाद्य (hypermetric) — $^{b}$) D3 6 पाडवाना (for पाण्डवो मां) Ś1 Ko 1 मा, G1 3 M1 3 4 वा (for मा) — $^{c}$) Ko 2 3 T2 घातयितु, K1 चातयितु, D1 घातयत, D3 6 °यता, T1 G4 शातयिता, G1-3 शातयितुं (for घातयतु). — $^{d}$) D5 भरतर्षभ° (for °भ)

80 Da1 om न तं पश्यामि (cf. v l 78) — $^{a}$) D1 6 लोकेस्मिन् (for लोकेषु) — $^{b}$) K1 om. यो K2 4 B Dn D4 7 8 मा हन्याद्य (for यो मा हन्यात्) Ś1 Ko 1 समुद्धतं, K2 °द्धृतं, Da1 °द्यतां, M2 3 5 °द्यत° (for °द्यतम्) — $^{c}$) K3 5 D2 6 महेष्वासात् (for महाभागात्)

81 $^{a}$) S पार्षतं तु (T2 तस्मादेन) (for एष तस्मात्) — $^{b}$) K3 किंचिदन्य; K5 D2 कश्चिदन्य, B1 2 Da Dn1 D5 पाचाल्यं त, S क्लीबमद्य (for कंचिदन्यं) T2 शिखडिन, M1-3 5 ममाप्रिय (for ममाग्रत°) — After 81$^{ab}$, K4 B Da Dn D4-8 repeat 71$^{ab}$ — $^{c}$) G3 मा (for मां) K3 M4 पातयति, D1 घातयतु, T2 सादयतु (for पात°) — $^{d}$) K3. 5 D2 एष ते; T2 वधार्ह (for एवं ते) K5 Dn D1 2 ध्रुव, Da D3 5 T2 M ध्रुव (for भवेत्) B D4 6-8 एव तव जयो ध्रुव

82 D3 om 82$^{ab}$ — $^{a}$) T1 G एवं (for एतत्) K3 कौतेय — $^{b}$) D1 2 G2 यथोक्त° (for °क्तं) B4 Dn2 D4 6-8 मम सुव्रत (for वचनं मम). — $^{c}$) D2 T G4 जेष्यति, D3 G1 M जेष्यथ (for °सि). B4 Dn2 D4 6-8 सग्रामे धार्तराष्ट्राश्च — $^{d}$) B4 Dn2 D4. 6-8 हन्या° सर्वान्समागतान्, D1 3 धार्तराष्ट्रान्सराजकान्; T2 °न्सबाधवान्

अभिवाद्य महात्मानं भीष्मं कुरुपितामहम् ॥ ८३
तथोक्तवति गाङ्गेये परलोकाय दीक्षिते ।
अर्जुनो दुःखसंतप्तः सव्रीडमिदमब्रवीत् ॥ ८४
गुरुणा कुलवृद्धेन कृतप्रज्ञेन धीमता ।
पितामहेन संग्रामे कथं योत्स्यामि माधव ॥ ८५
क्रीडता हि मया बाल्ये वासुदेव महामनाः ।
पांसुरूषितगात्रेण महात्मा परुषीकृतः ॥ ८६
यस्याहमधिरुह्याङ्कं बालः किल गदाग्रज ।
तातेत्यवोचं पितरं पितुः पाण्डोर्महात्मनः ॥ ८७
नाहं तातस्तव पितुस्तातोऽसि तव भारत ।
इति मामब्रवीद्बाल्ये यः स वध्यः कथं मया ॥ ८८
कामं वध्यतु मे सैन्यं नाहं योत्स्ये महात्मना ।
जयो वास्तु वधो वा मे कथं वा कृष्ण मन्यसे ॥ ८९
श्रीकृष्ण उवाच ।
प्रतिज्ञाय वधं जिष्णो पुरा भीष्मस्य संयुगे ।
क्षत्रधर्मे स्थितः पार्थ कथं नैनं हनिष्यसि ॥ ९० C 6 4982 B 6 107 96 K 6 107 96

83 M1-3. 5 om. the ref. —a) K1 Da2 D5 ते तु ज्ञातास्, K2 तेनुज्ञात्वा, K4 5 अनुज्ञातास्, B1 4 D4 ते तु ज्ञात्वा (for तेऽनुज्ञातास्) Ś1 K0 1 तदा, D8 यथु (for तत) Da1 पार्थ (for पार्था) —b) D1 स्व (for स्व) Ś1 स्वशिवरं (for स्वशिबिर)

84 a) B1 T1 G4 यथोक्तवति, D6 क्षयोक्तवति, T2 तयोक्रमति —d) S सव्रीड (T1 G1 4 M1-4 °ळ, T2 °ळम्) (for सव्रीडम्) Ś1 सव्रवीदिदमब्रवीत् (sic), D1 इद वचनमब्रवीत् After °मिद, K1 (erroneously) *repeats* from कुरु (in 83d) up to मिद (in 84d)

85 Before 85, Ś1 K0 1 D1 6 T1 G M2 ins अर्जुन उवाच —a) T1 G4 M1 3 4 कुरुणा, T2 M2 5 कुरूणां (for गुरुणा) K2-4 B Da Dn D1 3 5 6 कुरु, G2 काल (for कुल) K1 2 °वृद्धेण T2 °दीपेन —b) K3 कृतयज्ञेन, T2 कुरुवृद्धेन (for कृत प्रज्ञेन) —d) K4 B Dn2 D1 7 8 M4 योद्धासि (for योत्स्यामि) K1 वाधव (sic), Dn1 माधव (for °व)

86 a) K2 D1 क्रीडिता, K3 क्रिडता, K5 क्रीडिता (for क्रीडता) M5 [अ]पि (for हि) D1 वय नाथ (for मया बाल्ये) —b) D1 महामते, T1 G °द्युति°, T2 °त्मना (for °मना) K5 वासुदेवस्य महात्मन° (hypermetric) —c) K2 3 Da Dn D1-3 5 6 पांशु(Dn1 [*sup lin*] °सु)रू(Da1 °रु)षितगा-(Dn1 °मा)त्रेण, T2 M4 °कुंठितगात्रेण —d) D6 महता (for महात्मा) K2 परुषीकृता, B1 3 4 D8 G3 पुरुषीकृत°, Cc d परुषी° (as in text)

87 a) Ś1 K0 1 T G M4 तस्याहम्, Dn2 तथा° (for यस्याहम्) D1 अवि (for अधि) Da2 [अ]गं, D6 [अ]के (for [अ]ङ्कं) —b) D1 तदा, T2 वाल्ये (for बाल°) T2 M4 काले (for किल) Da1 M2 गदाग्रज, D1 सहाग्रज (for गदाग्रज) —c) K2 तातेति वोच, K5 तातेत्यवाप, D6 8 तातेत्यवोचन् (D8 °चत्), M3. 5 तावत्यवोच —d) D6 पिता, M2 पित° (for पितु°)

88 a) K0 तात (for तातस्) K5 D2 पिता, D1. 3 विभो (for पितुस्) —b) K3 कौरव (for भारत) K5 D1-3 पितुस्तातोस्मि तेनघ (K5 D2 कौरव), B1 तातोस्मि भरतर्षभ, D6 तस्तोस्मिनिति भारत (sic), M1-3. 5 तातोस्मीति च भारत —c) D6 बाले, G1 3 बालं (for बाल्ये) —d) G2 यस्य (for य° स) T2 युध्य° (for वध्य°) D1 कथंचन, D8 कथ मम

89 a) K5 बाधतु, D3 (marg *sec m* as in text) वर्धतु K3-5 B Da2 Dn D2 4-8 M5 सैन्य मे (by transp) Da1 कथ वध्यतु सैन्येन, D1 काम निहतु सैन्यानि, T G M1-4 सैन्य मे वध्यता (T2 M4 हन्यता) कामं (G2 काल्ये) —b) D1 पितामह (for महात्मना) —c) K0 2 वा तु, K5 D2 6 T2 M4 [s]स्तु वा (by transp) — After 89, T G M1 ins

431* कथमस्मद्विध° कृष्ण जानन्धर्मं सनातनम् ।
न्यस्तशस्त्रे च वृद्धे च प्रहरेद्धि पितामहे ।

[(L 2) G1 विवृद्धे (for च वृद्धे) G2 प्रहरेय (for °रेद्धि)]

90 Before 90, K3 4 D3 T2 ins कृष्ण उवाच, B Da Dn D4 5 7 8 M वासुदेव उवाच, D6 T1 G2 4 श्रीभगवानुवाच, G1 3 भगवान् (for श्रीकृष्ण उवाच) —a) T1 G4 त्वया, M4 पुरा (for वध) —b) T1 G3 4 M4 वध, G1. 3 कथ (for पुरा) —c) Ś1 क्षत्रे धर्मे, M1 क्षत्रधर्म° Ś1 स्थिता, K5 तत, D2 सत (for स्थित) —d) K0 T2 चैनं, Da1 D5 नेदं (for नैनं) K3 हनिष्यति, D8 वधिष्यसि (for हनिष्यसि)

C. 6 5234 B. 6 112. 37 K 6 112. 37

परिरक्षन्ति राजानं यमौ च मनुजेश्वरम् ॥ ३७
उपेन्द्रसदृशः श्यामो महाशाल इवोद्गतः ।
एष गच्छत्यनीकानि द्वितीय इव फल्गुनः ॥ ३८
उत्तमास्त्राणि चादत्स्व गृहीत्वान्यन्महद्धनुः ।
पार्श्वतो याहि राजानं युध्यस्व च वृकोदरम् ॥ ३९
को हि नेच्छेत्प्रियं पुत्रं जीवन्तं शाश्वतीः समाः ।
क्षत्रधर्मं पुरस्कृत्य ततस्त्वा विनियुज्महे ॥ ४०
एष चापि रणे भीष्मो दहते वै महाचमूम् ।
युद्धे सुसदृशस्तात यमस्य वरुणस्य च ॥ ४१

इति श्रीमहाभारते भीष्मपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

## १०९

संजय उवाच ।
भगदत्तः कृपः शल्यः कृतवर्मा च सात्वतः ।
विन्दानुविन्दावावन्त्यौ सैन्धवश्च जयद्रथः ॥ १
चित्रसेनो विकर्णश्च तथा दुर्मर्षणो युवा ।

---

37 [b]) T2 धृष्टद्युम्नो वृकोदर — [c]) K0 परिरक्षति, K4 5 B D (except D8 6) पर्यरक्ष(K5 °क्ष)त — [d]) K4 B1 Da Dn1 D5 6 °जेश्वरौ

38 [a]) Ś1 K0 1 4 5 D1 2 महेंद्रसदृश° (K5 D2 °प्रतिम°) — [b]) K1 T1 G M महासाल, T2 °बल (for °शाल) K4 इवोपात°, K5 °द्रुम, D2 °द्धत°, T1 G °च्छ्रित° — [c]) K8 B D (except D1) S अनीकाग्रे; G2 (*sup lin*) अतीकायो (for अनीकानि)

39 [a]) K0 2 4 Da Dn D4–8 चाधत्स्व; D2 चादस्व; S चादाय — [b]) K2 °त्वान्यान्, K4 B Dn1 (*sup lin*) n2 D4 6 7 गृहीत्वा च, D8 °त्वा तन्, T2 °तान्य (for °त्वान्यन्) D6 महाधनु° B4 गृहीत्वा वर्मभृद्धनु° — [c]) K4 B D (except D1–8) पार्षत (for पार्श्वतो) D1 जहि (for याहि) — [d]) K5 D2 युध्यंत (for युध्यस्व)

40 [a]) Da1 D5 स्त्रिय (for प्रिय) — [b]) K8 4 Da1 D2 5 T1 G1 3. 4 जीवित, T2 G2 जीवितु (for जीवन्त) — [c]) Ś1 K0–2 4 क्षात्र (for क्षत्र) B Da Dn D4–8 तु सं(D5 मे)प्रेक्ष्य; T G समाश्रित्य (for पुरस्कृत्य) — [d]) Da1 D5 तेन (for ततस्) K3 4 B D T G4 त्वा (D2 तां) K0 3 4 D1 2 विनिर्युक्ष्महे, K2 D8 (marg sec m) विनियुक्ष्यह, K5 युनियुक्ष्महे, B Da Dn D5–7 नियुनज्म्यह; D3. 4 8 नियुनं(D8 °न)क्ष्यह, T G4 नियुजाम्यह, G1 3 संयुजाम्यह, M [अ]भियुजाम्यह G2 सत्त्वतस्त्वायुजाम्यहं

41 [a]) B1 Dn2 D4 7 8 चातिरणे (D7 °थो), T2 चापरणे; G1 वापि रणे K5 D1. 2 भीमो — [b]) D1 दहत्येव, D5 दहते च, D8 इहते वै, T2 महते च (for दहते वै) K5 D2 महाचमू° — [c]) K2 युद्धे स; K3–5 B Da Dn D2–8 M5 युद्धेषु, D1 युद्धेष्व, T G M1–4 युद्धे हि (for युद्धे सु) — [d]) Ś1 वा (for च) — After 41, T1 G M2 ins

454* संजय ।
पुत्र समनुशास्यैव भारद्वाज प्रतापवान् ।
महारणे महाराज धर्मराजमयोधयत् ।

Colophon — *Sub-parvan* Omitting sub-parvan name, K0–2 5 D2 mention only दशमयुद्धदिवस, K4 B3 दशमेह्नि भीष्मनिपातन; D6 दशमदिवसयुद्ध; M4 दशमेह्निके — *Adhy name* K4 B3 अद्भुतदर्शन; Da Dn1 D1 5 द्रोणवाक्य, D6 अश्वत्थामानं प्रति द्रोण वाक्यं; T2 द्रोणाश्वत्थामसवाद°; M1–3 5 दुर्निमित्तकथन — *Adhy. no* (figures, words or both). K5 106, Da2 (*sec m*) 70, Dn2 106, T1 G 108 (as in text), T2 M3. 4 110, M1 2 109, M5 111 — *Śloka no* K1 Dn D5 6 41

109

1 M2 om the ref — After the ref, Ś1 K0–2 ins

दर्शैते तावका योधा भीमसेनमयोधयन् ॥ २
महत्या सेनया युक्ता नानादेशसमुत्थया ।
भीष्मस्य समरे राजन्प्रार्थयाना महद्यशः ॥ ३
शल्यस्तु नवभिर्बाणैर्भीमसेनमताडयत् ।
कृतवर्मा त्रिभिर्बाणैः कृपश्च नवभिः शरैः ॥ ४
चित्रसेनो विकर्णश्च भगदत्तश्च मारिष ।
दशभिर्दशभिर्भल्लैर्भीमसेनमताडयन् ॥ ५
सैन्धवश्च त्रिभिर्बाणैर्जत्रुदेशेऽभ्यताडयत् ।
विन्दानुविन्दावावन्त्यौ पञ्चभिः पञ्चभिः शरैः ।
दुर्मर्षणश्च विंशत्या पाण्डवं निशितैः शरैः ॥ ६

स तान्सर्वान्महाराज भ्राजमानान्पृथक्पृथक् ।
प्रवीरान्सर्वलोकस्य धार्तराष्ट्रान्महारथान् ।
विव्याध बहुभिर्बाणैर्भीमसेनो महाबलः ॥ ७
शल्यं पञ्चाशता विद्ध्वा कृतवर्माणमष्टभिः ।
कृपस्य सशरं चापं मध्ये चिच्छेद भारत ।
अथैनं छिन्नधन्वानं पुनर्विव्याध पञ्चभिः ॥ ८
विन्दानुविन्दौ च तथा त्रिभिस्त्रिभिरताडयत् ।
दुर्मर्षणं च विंशत्या चित्रसेनं च पञ्चभिः ॥ ९
विकर्णं दशभिर्बाणैः पञ्चभिश्च जयद्रथम् ।
विद्ध्वा भीमोऽनदद्धृष्टः सैन्धवं च पुनस्त्रिभिः ॥ १० C 6 5250 B 6 113 12 K 6 113 12

---

455* एतच्छ्रुत्वा वचस्तस्य द्रोणस्य च महात्मन ।

— b) B1 2 4 D (except D1-3 6) तथैव च (for च सात्वत) — c) D1 विंदानुविंदाव्

2 Ś1 K0-2 om (hapl.) 2-4 — b) Dn2 D4 6-8 °र्षणादय (for °र्षणो युवा) — c) K3 दशैव, K5 D2 तथैते; T2 नेशते (for दशैते) G1 M (except M5) यौधा — d) D2 M2 5 (inf lin) °मयोधयत्; M1 °मयोधयन्, M4 °मताडयन्

3 Ś1 K0-2 om 3 (cf. v l 2) K3. 4 D2 om. 3-4, M4 om 3a-6b — a) D1. 3 6 गुप्ता, M (M4 om) युक्तो (for युक्ता) — b) D6 °समुच्छ्रिया — d) M1 2 5 प्रार्थयानो

4 Ś1 K0-3 5 D2 M4 om 4 (cf v l 2, 3) — a) D1 दशभिर् (for नवभिर्) — D4 om 4cd, G3 M1-3 5 om (hapl) 4c-5d — c) G1 कृपश्च नवभिर्बाणै — T2 om (hapl.) 4d-6a — d) G1 कृतवर्मा तथैव च

5 T2 G3 M om 5 (cf v l 4, 3) — a) Ś1 K0-2 दुर्मर्षणो (for चित्रसेनो) — b) Ś1 K0-2 चित्रसेनश्च (for भगदत्तश्च) T1 G1. 2 4 वीर्यवान् (for मारिष) — c) Dn2 D1 4 6-8 T1 G1. 2 बाणैर् (for भल्लैर्) — d) Ś1 K0 2 Da1 Dn2 D7 °मताडयत्

6 K2 D3 M4 om. 6ab (for M4, cf. v l 3), T2 om. 6a (cf v l 4) T1 G4 transp 6ab and 6cd — b) K4 B D (except D1 2 6, D3 om) S (M4 om.) भीमसेनमताडयत् (= 4b) — Ś1 K0-2 om (hapl.) 6ef, G3 om (hapl) 6e-9b — e) B3 Dn2 D4 6-8 तु (for च) M1 सप्तत्या (for विंशत्या) — f) Da1 पांडवा Da Dn1 D6 नवभि° (for निशितै°)

7 G3 om 7 (cf. v l 6) — a) Da1 समंतात् (for स तान्) D8 तांश्च सर्वात्मना राजन् — b) K3. 4 B Da Dn D4-6 8 M राजमानान्, K5 D2 3 यतमानान्, T2 युध्यमानान् (for भ्राजमानान्) — c) Da1 प्रवरान् (for प्रवीरान्) — d) K5 D2 3 महाबलान् (for °रथान्) — e) K3 4 B1-3 Da Dn D1-3 5 6 S (G3 om) निशितैर् (for बहुभिर्) B4 D4 7 8 जघान समरे वीरो — f) K0-2 5 D2 महारथ° (for °बल°) B4 D4 7 8 पांडव° परवीरहा, M2 (before corr) भीमसेनमताडयत् (= 4b)

8 G3 om 8 (cf v l 6) — a) K3 Da D1. 2 5 M4 पंचशता; Dn1 च सप्तभिर्, D6 पंचशतैर्, T2 पंचशतान् (for पञ्चाशता) K0-2 शल्य (K2 °ल्ये) पंचशतान्विद्ध्वा (K0 °द्धा), K4 B1-3 M2 शल्यं पंच (B2 °चा) शताविध्यत्, B4 Dn2 D4 7 8 G2 सप्तभि° शल्यमाविध्यत्, G1 शल्यं च पंचविंशत्या — c) Da2 D5 कृपश्च, D2 (m as in text) अकृप्य (for कृपस्य) D1 समरे (for सशर) — d) M पांडव° (for भारत) — e) K1 तथैन (for अथैन) K0 भिन्नधन्वान — f) G2 पृष्ठे (for पुनर्) B D (except D1-3) M2 सप्तभि° (for पञ्चभि°)

9 G3 om 9ab (cf v l 6) — a) D1 विंदानुविंदौ T G2 4 [आ]वन्त्यौ (for च तथा) — b) T1 G1 2 4 तथा त्रि (G1 त्रिभिस्त्रि) भिरजिह्मगै° — c) D1 तु (for च)

10 K1 om 10a-11b — c) K0 3 5 Da1 D1 2,

C. 6 5251
B. 6 113 12
K. 6 113 12

अथान्यद्धनुरादाय गौतमो रथिनां वरः ।
भीमं विव्याध संरब्धो दशभिर्निशितैः शरैः ॥ ११
स विद्धो बहुभिर्बाणैस्तोत्रैरिव महाद्विपः ।
ततः क्रुद्धो महाबाहुर्भीमसेनः प्रतापवान् ।
गौतमं ताडयामास शरैर्बहुभिराहवे ॥ १२
सैन्धवस्य तथाश्वांश्च सारथिं च त्रिभिः शरैः ।
प्राहिणोन्मृत्युलोकाय कालान्तकसमद्युतिः ॥ १३
हताश्वात्तु रथात्तूर्णमवप्लुत्य महारथः ।
शरांश्चिक्षेप निशितान्भीमसेनस्य संयुगे ॥ १४
तस्य भीमो धनुर्मध्ये द्वाभ्यां चिच्छेद भारत ।
भल्लाभ्यां भरतश्रेष्ठ सैन्धवस्य महात्मनः ॥ १५

स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
चित्रसेनरथं राजन्नारुरोह त्वरान्वितः ॥ १६
अत्यद्भुतं रणे कर्म कृतवांस्तत्र पाण्डवः ।
महारथाञ्शरैर्विद्ध्वा वारयित्वा महारथः ।
विरथं सैन्धवं चक्रे सर्वलोकस्य पश्यतः ॥ १७
नातीव ममृषे शल्यो भीमसेनस्य विक्रमम् ।
स संधाय शरांस्तीक्ष्णान्कर्मारपरिमार्जितान् ।
भीमं विव्याध सप्तत्या तिष्ठ तिष्ठेति चाब्रवीत् ॥ १८
कृपश्च कृतवर्मा च भगदत्तश्च मारिष ।
विन्दानुविन्दावावन्त्यौ चित्रसेनश्च संयुगे ॥ १९
दुर्मर्षणो विकर्णश्च सिन्धुराजश्च वीर्यवान् ।

---

1 8 T2 M (except M2) नदन् (for ऽनदत्) — d) G8 सैंधवश्च B2 ततस्त्रिभि ; Da Dn1 D5 पुन पुन (for पुनस्त्रिभि ) — After 10, G3 ins

456* द्रोणस्य च धनुर्भीमस्त्रिभिर्बाणैरचिच्छिदे ।

11 K1 om. $11^{ab}$ (of v 1 10) — c) T1 G2-4 विव्याथ K5 सरथो, D2 सरथ (for संरब्धो) — d) K4 D2 दशभि, D8 निशते (for निशितै )

12 D1 om $12^{ab}$, T2 om (hapl) $12^{a}$-$13^{b}$ — a) K8 B D (except D2 8, D1 om.) S (T2 om) दशभिर् (for बहुभिर्) — b) Da1 D5 महाधिप, G1 महाद्विपं — c) K1 महाबाहु, B D (except D2) S (T2 om) महाराज — d) K5 D2 महाबल (for प्रतापवान्) — e) G2 गौतमिं — f) D8 M (except M4) सायसै (for आहवे)

13 T2 om $13^{ab}$ (of v l. 12) — a) K8 Da2 M2 सैंधवश्च, D7 सात्वतस्य (for सैन्धवस्य) K8 M2 रथाश्वाश्च (for तथाश्वाश्च) K5 D2 तथाश्वां (K5 °श्वा) श्चतुरश्चास्य — b) D7 च तत, G2 पचभि (for च त्रिभि ) — c) K8 मृत्युलोकस्य — d) G2 M (except M4) °यमद्युति

14 c) K4 चिच्छेद (for चिक्षेप) K1 निशितैर्, T1 G सहसा (for निशितान्) — d) K3 D2 8 6 S (except M1 8 5) भीमसेनाय (for °सेनस्य)

15 a) Da Dn1 D5 ततो (for तस्य) — b) K3 4 B Dn2 D1 2 4 6-8 S (except M4) मारिष (for भारत) — d) D1 महारथ (for °त्मन )

16 a) S (except M2) सच्छिन्नधन्वा — b) T2 गताश्वो (for हताश्वो) — d) B4 स्ववाहित (sic), M2 रथान्वित (for त्वरान्वित)

17 a) T1 G2 4 अत्यद्भुतक (G2 °त )र कर्म — b) Da1 तव (for तत्र) — c) D8 महारथ, G2 मद्रराजं (for महारथान्) M1 8 5 भित्वा (for विद्ध्वा) — d) K3 4 B Da Dn D2 5-8 च मारिष; K5 [अ]थ मारिष, S च भारत (for महारथ ) D8 4 वारयामास मारिष

18 a) K3 5 D2 T G1 4 M न तु सन्, K4 D1 8 G3 न तु तं; B1 2 4 Da Dn D4-8 तदा न, B3 ततो न (for नातीव) D5 मम्लुपे, D6 ममृशे G2 नदत चापि दुर्धर्षो — c) S1 K0-2 D1 चित्रान् (for तीक्ष्णान्) — d) D8 °परमार्जितान् — G3 om $18^{ef}$ — e) T1 G4 विव्याथ K2 3 5 B D (except D1) T G1 2 4 M4 समरे (for सप्तत्या) M1-3 5 विव्याध समरे भीमं

19 b) B D (except D1-8 6) G1 3 वीर्यवान्, T G2 4 M भारत (for मारिष) — c) D1 विंदानुविंदाव्-

20 a) G2 महाबाहुर् (for विकर्णश्च) — b) T G M4 दुष्क (G3 विक )र्णश्चापि, M1-3 5 दुष्कर्णश्चैव (for सिन्धुराजश्च) D1 मारिष (for वीर्यवान्) — c) G3 तु (for ते) K8 विविधुस्, T1 G3 4 विव्यधुस्; T2 विव्यधास् (for विव्यधुस्) — d) K3 5 D2 6 भीष्म (for शल्य ) D2 8 T2 अरिंदम, G3 °दम; M (except M4) अजिह्मगै

भीमं ते विव्यधुस्तूर्णं शल्यहेतोररिंदमाः ॥ २०
स तु तान्प्रतिविव्याध पञ्चभिः पञ्चभिः शरैः ।
शल्यं विव्याध सप्तत्या पुनश्च दशभिः शरैः ॥ २१
तं शल्यो नवभिर्विद्ध्वा पुनर्विव्याध पञ्चभिः ।
सारथिं चास्य भल्लेन गाढं विव्याध मर्मणि ॥ २२
विशोकं वीक्ष्य निर्भिन्नं भीमसेनः प्रतापवान् ।
मद्रराजं त्रिभिर्बाणैर्बाह्वोरुरसि चार्पयत् ॥ २३
तथेतरान्महेष्वासांस्त्रिभिस्त्रिभिरजिह्मगैः ।
ताडयामास समरे सिंहवच्च ननाद च ॥ २४
ते हि यत्ता महेष्वासाः पाण्डवं युद्धदुर्मदम् ।
त्रिभिस्त्रिभिरकुण्ठाग्रैर्भृशं मर्मस्वताडयन् ॥ २५
सोऽतिविद्धो महेष्वासो भीमसेनो न विव्यथे ।
पर्वतो वारिधाराभिर्वर्षमाणैरिवाम्बुदैः ॥ २६
शल्यं च नवभिर्बाणैर्भृशं विद्ध्वा महायशाः ।
प्राग्ज्योतिषं शतेनाजौ राजन्विव्याध वै दृढम् ॥ २७
ततस्तु सशरं चापं सात्वतस्य महात्मनः ।
क्षुरप्रेण सुतीक्ष्णेन चिच्छेद कृतहस्तवत् ॥ २८
अथान्यद्धनुरादाय कृतवर्मा वृकोदरम् ।
आजघान भ्रुवोर्मध्ये नाराचेन परंतप ॥ २९
भीमस्तु समरे विद्ध्वा शल्यं नवभिरायसैः ।

C. 6 5272
B. 6 113 34
K. 6 113 34

---

21 a) Ko सात्वतान् (for स तु तान्) B4 Dn2 D2 4 7 8 च (for तु) T1 G2 4 °विव्याथ — b) K1 पञ्चभि (sic) (for the first पञ्चभि) — Ś1 Ko–2 om (hapl) $21^{cd}$ — c) T1 G4 विव्याथ — d) D3 G3 M (except M4) नवभि (for दशभि)

22 a) T2 स (for त) D6 [s]प्यष्टभिर् (for नवभिर्) Ś1 B Da Dn D1 4 7 8 T1 G2 4 भित्त्वा, K1 विध्यत्, K2 विद्धा (for विद्ध्वा) D5 तत शल्यो नव भित्त्वा — b) T1 G4 विव्याथ T1 G2 4 सप्तभि (for पञ्चभि) D6 नवभि सायकैस्तथा — c) Ś1 वल्लेन — d) S पुनर् (for गाढ) T1 G4 विव्याथ Ś1 Ko–2 पत्रिणा, G2 M4 वर्मणि (for मर्मणि)

23 a) K4 B D (except D1–3 6) M प्रेक्ष्य (for वीक्ष्य) T2 G1–3 M निर्भिण्ण — d) Ś1 वाहोर् (for वाह्वोर्) Ś1 Ko 2 चार्दयत् (for चार्प°)

24 a) Da1 M3 5 तथैतरान्, D7 अथेतरान् T2 महेष्वासस् — Ś1 Ko–2 om (hapl) $24^{b}$–$25^{a}$ — d) K3 B D (except D3) विननाद, G2 व्यन° (for च ननाद) B4 D3 ह, T1 G2 4 स (for च)

25 Ś1 Ko–2 om $25^{a}$ (cf v l 24) — a) D1 S [s]पि (for हि) — b) K3 युद्धकोपनं, B D (except D1. 2 6) °कोविद (for °दुर्मदम्) Ś1 Ko–2 समरे युद्धदुर्मदान् — c) D2 अकुठाग्रैर्, S अजिह्मा-ग्रैर् (for अकुण्ठाग्रैर्) — d) D1 मर्माणि, D2 सर्व सु, G2 मर्मणि (for मर्मसु) Ś1 Ko 4 Da1 Dn1 M2 5 [अ]ताडयत्, K2 ताडयत् (for [अ]ताडयन्)

26 a) D4 सोपि (for सोऽति) — c) K2 सर्वतो (for पर्वतो) — d) S सिच्यमान (for वर्षमाणैर्) — After 26, K4 B Da Dn D4 5 7 8 ins

457* स तु क्रोधसमाविष्टो भीमसेनो महाबल ।
मद्रेश्वर त्रिभिर्बाणैर्भृश विद्ध्वा महायशा ।

[(L 1) B4 Dn2 D4 7 8 पाडवाना महारथ (for the post half) — (L 2) After the prior half, Da1 *repeats* (hapl) $23^{d}$–$24^{a}$ ]

27 D4 7 8 om (hapl) $27^{ab}$ — a) K4 B Da Dn1 D5 6 कृप (for शल्य) Dn2 मद्रेश्वर त्रिभिर्बाणैर् — b) T1 G2 4 भित्त्वा (for विद्ध्वा) K1 महायश; K4 B (except B4) Da Dn1 D6 सम तत, K5 महाबल, D2 महाबलै (for महायशा) D3 भृश मर्मस्वताडयत् — c) K1 शतेनासौ, K4 शतै राजन्, B1–3 Dn2 D7 शतैराजौ, D1 M1 3–5 शरेणाजौ, G2 शतेराजौ (sic), M2 रणे राजन् (for शतेनाजौ) — d) K4 शरैर् (for राजन्) T1 G2–4 विव्याथ K3 5 B D (except D1) सा(B4 शा)यकै, S सयुगे (for वै दृढम्)

28 a) K3 ततस्तत्, K6 D2 ततोस्य (for ततस्तु) — d) S (except T2) पातयामास भारत

29 a) B Dn2 D1 5 8 T1 G4 तथा° (for अथा°) — b) Da1 Dn1 (before corr) कृतकर्मा — c) K1 अजघान, G2 निजघान — d) K4 B Da2 Dn D3–8 T1 G परतप, D1 T2 °तप — After 29, S ins

458* विरराज महाबाहुर्ललाटस्थेन पत्रिणा ।
एकशृङ्गो महाराज यथा पर्वतसत्तम ।
अथ भीमो महाबाहु क्रुद्ध सर्वान्महारथान् ।
विमुखीकृत्य बाणौघैस्तस्थौ गिरिरिवाचल ।

[(L 3) T1 G सर्वानेव (for क्रुद्ध सर्वान्) ]

C 6 5273
B 6 113 34
K 6 113 34

भगदत्तं त्रिभिश्चैव कृतवर्माणमष्टभिः ॥ ३०
द्वाभ्यां द्वाभ्यां च विव्याध गौतमप्रभृतीन्रथान् ।
ते तु तं समरे राजन्विव्यधुर्निशितैः शरैः ॥ ३१
स तथा पीड्यमानोऽपि सर्वतस्तैर्महारथैः ।
मत्वा तृणेन तांस्तुल्यान्विचचार गतव्यथः ॥ ३२
ते चापि रथिनां श्रेष्ठा भीमाय निशिताञ्शरान् ।
प्रेषयामासुरव्यग्राः शतशोऽथ सहस्रशः ॥ ३३
तस्य शक्तिं महावेगां भगदत्तो महारथः ।
चिक्षेप समरे वीरः स्वर्णदण्डां महाधनाम् ॥ ३४
तोमरं सैन्धवो राजा पट्टिशं च महाभुजः ।
शतघ्नीं च कृपो राजञ्शरं शल्यश्च संयुगे ॥ ३५
अथेतरे महेष्वासाः पञ्च पञ्च शिलीमुखान् ।
भीमसेनं समुद्दिश्य प्रेषयामासुरोजसा ॥ ३६
तोमरं स द्विधा चक्रे क्षुरप्रेणानिलात्मजः ।
पट्टिशं च त्रिभिर्बाणैश्चिच्छेद तिलकाण्डवत् ॥ ३७
स बिभेद शतघ्नीं च नवभिः कङ्कपत्रिभिः ।

---

30 M om 30–41 here and reads the same after 6 110 21 in the following sequence 36, 459*, 38^c–41^d, 30–32^b (om 32^cd), 33 (om 34, 35, 37^a–38^b and 41^ef) — ^a) D2 भीमसेनस्तु समरे — ^b) K8 T2 M आशुगै (for आयसै) T1 G शल्य च नवभि शरै — ^d) M अष्टाभिर्हृदिकात्मज

31 For sequence in M, cf v l 30 — ^a) K2 B1 Dn2 D1 3 4 7 8 S तु, K6 हि (for च) T1 G2–4 विव्याथ — ^b) K3 5 D2 अपि, M4 नृपान् (for रथान्) — ^c) K4 B Dn2 D4–8 तेपि त, D1 ततस्ते (for ते तु त) — ^d) Ko विविधुर्, D2 अ विध्यन्, T1 G2–4 विव्यथुर्, T2 विव्याध. D1 भीमं विविधुरायसै

32 For sequence in M, cf v l 30 K1 om 32^a–33^b — ^a) B2 Da Dn1 D5 T1 G2 4 तदा (for तथा) T G भिद्यमानस्तु (T2 °नोपि) (for पीड्यमानोऽपि) M1–3 5 तु (for [अ]पि) — ^b) B Dn2 D6 सर्वशस्त्रैर्, D1 सर्वैस्तैश्च, D8 सर्वशस्तैर्, M2 सर्वै तस्थैर् — M om 32^cd — ^c) D8 m बाणान् (for तुल्यान्) Ca as in text

33 For sequence in M, cf v l 30 K1 om 33^ab (cf v l 32) — ^a) K2 तेथापि, D5 तत्रापि (for ते चापि) D6 रथिनो (for °ना) — ^b) T2 भीष्माय (for भीमाय) — ^c) D1 अत्युग्रान्, G8 अव्यग्रान् — After 33, M reads 6 110 19–21, *repeating* the same at the proper place

34 M om 34–35 — ^a) T1 G2 4 तस्मै (for तस्य) — ^b) Dn2 D4 7 8 महासुर (for °रथ) — ^c) B3 शूर (for वीर) — ^d) T G हेम° (for स्वर्ण°) K5 D2 महास्वनां, B1–3 Da Dn1 D5 महीपते, B1 Dn2 D4 7 8 महामते, D8 महाध्वजा (for °धनाम्)

35 M om 35 (cf v l 34). — ^b) Ko पट्टिस (for °श) D2 महाबल (for °भुज) T G पट्टसं चैव सात्वत — ^c) K2 शतघ्नी च कृप राजन् — ^d) D1 शूलं, T1 G2 4 शरान् (for शर) D5 शल्यस्य K4 B1–3 Da Dn1 D5 वीर्यवान् (for संयुगे)

36 For sequence in M, cf v l 30 — ^a) M तयेतरे — ^d) D8 T G अजसा (for ओजसा) — After 36, M ins.

459* तत क्रुद्धो महाबाहुर्भीमो भीमपराक्रम ।
विव्याध समरे वीरस्त्रिभिस्त्रिभिरजिह्मगै ।
गौतमप्रेरित चापि तोमर त्वनिलात्मज ।
क्षुरप्रेण द्विधा चक्रे प्रहसन्निव भारत ।
हार्दिक्यप्रहित चापि पट्टस तिलकाण्डवत् । [5]
चिच्छेद समरे वीरो ह्यसम्भ्रान्तरथ शरै ।
स चिच्छेद शतघ्नीं च सैन्धवेनेरिता भृशम् ।
भीमसेनो रणश्लाघी नवभि कङ्कपत्रिभि ।

[ (L 5) M4 चैव (for चापि) — (L 7) M3 5 शरै शक्ति (for शतघ्नीं च) ]

37 M om 37^a–38^b — ^a) K3 5 D2 6 तं, B Da Dn D1 3–5 7 8 T G च (for स) — ^b) K3 5 D2 T2 क्षुरेणाथ (for क्षुरप्रेण) — Ś1 Ko–2 om 37^c–39^d — ^c) D6 पट्टिप; T G पट्टस (for पट्टिश) — ^d) T G तिलशस्तथा (for °काण्डवत्)

38 M om 38^ab, Ś1 Ko–2 om 38 (cf. v l 37) — ^a) K3 D3 6 स (for स) K3 शतघ्नी — Dn2 om. (hapl) 38^c–39^d For sequence in M, cf v l. 30. — ^c) K3 5 D2 °प्रयुक्तं तु, B1 G2 °प्रयुक्ताश्च, Dn2 D8 °प्रमुक्त च, D7 °प्रमुक्ताश्च, T G1 °प्रयुक्ता

मद्रराजप्रयुक्तं च शरं छित्त्वा महाबलः ॥ ३८
शक्तिं चिच्छेद सहसा भगदत्तेरितां रणे ।
तथेतरान्शरान्घोराञ्शरैः संनतपर्वभिः ॥ ३९
भीमसेनो रणश्लाघी त्रिधैकैकं समाच्छिनत् ।
तांश्च सर्वान्महेष्वासांस्त्रिभिस्त्रिभिरताडयत् ॥ ४०
ततो धनंजयस्तत्र वर्तमाने महारणे ।
जगाम स रथेनाजौ भीमं दृष्ट्वा महारथम् ।
निघ्नन्तं समरे शत्रून्योधयानं च सायकैः ॥ ४१
तौ तु तत्र महात्मानौ समेतौ वीक्ष्य पाण्डवौ ।
नाशशंसुर्जयं तत्र तावकाः पुरुषर्षभ ॥ ४२
अथार्जुनो रणे भीष्मं योधयन्वै महारथम् ।
भीष्मस्य निधनाकाङ्क्षी पुरस्कृत्य शिखण्डिनम् ॥ ४३
आससाद रणे योधांस्तावकान्दश भारत ।
ये स्म भीमं रणे राजन्योधयन्तो व्यवस्थिताः ।
बीभत्सुस्तानथाविध्यद्भीमस्य प्रियकाम्यया ॥ ४४
ततो दुर्योधनो राजा सुशर्माणमचोदयत् ।
अर्जुनस्य वधार्थाय भीमसेनस्य चोभयोः ॥ ४५
सुशर्मन्गच्छ शीघ्रं त्वं बलौघैः परिवारितः ।
जहि पाण्डुसुतावेतौ धनंजयवृकोदरौ ॥ ४६
तच्छ्रुत्वा शासनं तस्य त्रिगर्तः प्रस्थलाधिपः ।

C 6 5289
B 6 113 52
K 6 113 52

---

च —d) B4 D7 T1 G3 4 शरान्, T2 शक्तिं (for शर) D3 हित्वा (for छित्त्वा) K3 5 B Da Dn1 D2 5–8 G1 3 महारथ (for °बल)

39 For sequence in M, cf v l 30 Ś1 K0–2 Dn2 om. 39 (cf. v l 37, 38) —a) D3 T2 M (except M2) तरसा (for सहसा) —b) K6 भगदत्तेरितेरिणा (sic) —c) K3 5 D1. 2 तथैव तान्, D6 दृष्ट्वैव तान् (for तथेतरान्) K8 रथान्, G3 शतान् (for शरान्) K3 T2 G3 राजन्, D2 तीक्ष्णान्, T G2 4 राजन् (for घोरान्)

40 For sequence in M, cf v l. 30 —a) K0 2 भीमसेन-. M महाबाहुस् (for रणश्लाघी) —b) K6 द्विधैकैक समाचिनोत्

41 For sequence in M, cf. v l 30 —b) T1 G1 2 4 महाहवे (for °रणे) —c) K3–5 B D T1 G M2 4 आजगाम; T2 M1 3 5 आजवान (for जगाम स) D5 T1 G4 रणेनाजौ; G1–3 रणे राजन् (for रथेनाजौ) —d) T2 M (except M2) भीष्म (for भीम) D8 महाबलं (for °रथम्) — D7 om 41c–42d, M om 41ef —f) Ś1 युधमानं, K0 1 युध्यमानं; T2 योधयानां (for योधयान)

42 D7 om 42 (cf. v l. 41) —a) T1 G1 2 4 M महेष्वासौ (for महात्मानौ) —b) S1 K1 समीतौ, B1 समरे T G तत्र (for वीक्ष्य) —c) B4 Da2 Dn1 D4 5 8 G1 न शशंसुर्; D1 न सेहिरे; D3 नाशंसन्त (for नाशशंसुर्) D8 युद्धे (for तत्र) K6 नाशसुर्दुर्जय तत्र —d) K3 M1–3 5 भरतर्षभ, K5 B D (except D1 3 6, D7 om) G1 3 पुरुषर्षभा

43 a) K2 अथार्जुनं, K3 D1 तथार्जुनो, S दृष्ट्वार्जुनो (T2 °स्मनो, G2 °र्जुन) K3 5 D2 तत्र, B Da Dn D1 3–8 S (except T2) भीम (for भीष्म) —b) K3 D2 योधयस्तान्, K4 B Da Dn D3–8 G3 M योधयंत, D1 T1 G1. 3 4 योधयानं, T2 रोदयत (for योधयन्वै) K3–5 B D (except D1) S महारथान् (for °रथम्)

44 a) K3 B D S वीरां(Dn2 °र)स्, K5 वीरास् (for योधांस्) —b) Ś1 K0–2 स च (for दश) —c) K4 तु (for स्म). S transp भीम and राजन् —d) K3 D1–8 योधयाना; K6 योधयान, M4 योधयन्ति (for योधयन्तो) Da1 D5 रणे स्थिता, T2 व्यव-स्थित (for व्यवस्थिता) —e) D2 बीभत्सुश्च तथाविध्यद् —f) K5 D3 भीष्मस्य (for भीमस्य) K3 5 D6 पुरत स्थितान्, K4 प्रियकांक्षया, D2 पुरत स्थित, D3 T2 M हितकाम्यया, D8 प्रियकामया, T1 G2 4 हितकांक्षया, G1 3 कृतकांक्षया

45 b) K3 5 D1. 2 अनोदयत्, K4 अदेशयत् (for अचोद°)

46 c) G3 न हि (for जहि) —d) Ś1 K1 वृकोदरधनंजयौ

47 a) K4 B D (except D2 3 6) वचन (for शासनं) —b) K0 त्रिगर्त-, K3–5 B Da2 Dn D1 3 4 8 T1 G M2 त्रैगर्त, D2 त्रैगर्तं, D7 त्रैगर्त- T2 प्राक्स्थला° (for प्रस्थला°) —c) D1 T1 G अभिद्रुत्य (G2 °पत्य), T2 M परिवार्य (for अभिद्रुत्य) K0–2 भीष्मम् (for भीमम्) —d) D8 S (except T2 M4) धन्विन

C 6 5289 B 6 113 52 K 6 113 .2

अभिद्रुत्य रणे भीममर्जुनं चैव धन्विनौ ॥ ४७
रथैरनेकसाहस्रैः परिवव्रे समन्ततः ।
ततः प्रववृते युद्धमर्जुनस्य परैः सह ॥ ४८

इति श्रीमहाभारते भीष्मपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥

# ११०

संजय उवाच ।
अर्जुनस्तु रणे शल्यं यतमानं महारथम् ।
छादयामास समरे शरैः संनतपर्वभिः ॥ १
सुशर्माणं कृपं चैव त्रिभिस्त्रिभिरविध्यत ।
प्राग्ज्योतिषं च समरे सैन्धवं च जयद्रथम् ॥ २
चित्रसेनं विकर्णं च कृतवर्माणमेव च ।
दुर्मर्षणं च राजेन्द्र आवन्त्यौ च महारथौ ॥ ३
एकैकं त्रिभिरानर्छत्कङ्कबर्हिणवाजितैः ।
शरैरतिरथो युद्धे पीडयन्वाहिनीं तव ॥ ४
जयद्रथो रणे पार्थं भित्त्वा भारत सायकैः ।
भीमं विव्याध तरसा चित्रसेनरथे स्थितः ॥ ५
शल्यश्च समरे जिष्णुं कृपश्च रथिनां वरः ।
विव्यधाते महाबाहुं बहुधा मर्मभेदिभिः ॥ ६
चित्रसेनादयश्चैव पुत्रास्तव विशां पते ।
पञ्चभिः पञ्चभिस्तूर्णं संयुगे निशितैः शरैः ।
आजघ्नुरर्जुनं संख्ये भीमसेनं च मारिष ॥ ७

---

48 [b]) K2 परिवार्य, D2 परिचक्रे, T2 परिवव्रु B Da Dn D2 4 6 7 समतात्पर्यवारयत्

Colophon om in K3 — *Sub-parvan* Omitting sub-parvan name, Ś1 K0-2 mention only दशम युद्धदिवस, K4 दशमेह्नि भीष्मनिपातन, B3 भीष्म निपातन, M4 दशमेह्निके — *Adhy name* K4 B3 भीमयुद्ध, T2 भीमसेनयुद्ध, M1-3 5 भीमदशकयुद्ध (M1 °द्धकथन) — *Adhy no* (figures, words or both) K5 107, Da2 (*sec m*) 71, Dn2 107, D6 108, T1 G 109 (as in text), T2 M3 4 111, M1 2 110, M5 112 — *Śloka no* Dn1 42, Dn2 D5 53

## 110

1 Before the ref, Ś1 ins श्रीगणेशाय नम — D1 T2 om the ref — [b]) Da1 D5 घातयत (for यतमान) D1 T2 महारथ

2 [a]) D2 शल्य (for चैव) — [b]) B4 अताडयत्; Da Dn1 D5 अजिह्मगै, M1 3 5 अयुध्यत (for अविध्यत) — [d]) T2 M महारथ (for जयद्रथम्) — After 2, K0 (hapl) *repeats* 1[cd]

3 [d]) B D4 7 8 ह्यावन्त्यौ, D6 अवन्त्यौ

4 [b]) K0 ककबर्हिणवा**, K4 D1 °वाजिभि°, B3 कङ्कपत्रैरजिह्मगै, D2 8 कङ्कबर्हणवाजितै° — [c]) K3 शितैर् (for शरैर्) D1 °रथैर् (for °रथो) — [d]) D2 [ऽ]पीडयद्

5 [b]) K3-5 B D (except D1 3) S विद्धा (for भित्त्वा) K3 भरत K4 शायकै° — Ś1 writes 5[c]-6[a] in Devanāgarī characters — [c]) T1 G4 विव्याथ T1 G सहसा, M (except M4) समरे (for तरसा) — [d]) M1 3 5 चित्रसेनो (for °सेन) K5 स्थित

6 [a]) K0 2 शल्यस्तु, D5 शल्यस्य, M2 शल्य च K3 5 D2 M4 जिष्णु — [b]) M2 कृप च (for °पश्च) K5 M1 2 वर, D5 वर — [c]) K4 D3 विव्याधाते, K5 D2 T1 G विव्याथ (K5 D2 G1 2 °ध) त, D1 वि विधाते, T2 विव्याधाश्च, M विव्याध च (for विव्यधाते) Ś1 K0-2 4 D3 महाबाहु (K0 D3 °हू), B Da Dn D4-8 महाराज, D2 M2 5 महाबाहुर्

7 [b]) Da Dn1 D5 पुत्रा(Da2 °त्र)श्चैव, M4 पुत्रां स्तव — [d]) G1 3 विव्यधुर् (for संयुगे) — [e]) D3 T2 G1-3 M सखे (M5 सघे) — [f]) Da1 भीमसेने T2 M भारत (for मारिष)

तौ तत्र रथिनां श्रेष्ठौ कौन्तेयौ भरतर्षभौ ।
अपीडयेतां समरे त्रिगर्तानां महद्बलम् ॥ ८
सुशर्मापि रणे पार्थं विद्ध्वा बहुभिरायसैः ।
ननाद बलवन्नादं नादयन्वै नभस्तलम् ॥ ९
अन्ये च रथिनः शूरा भीमसेनधनंजयौ ।
विव्यधुर्निशितैर्बाणै रुक्मपुङ्खैरजिह्मगैः ॥ १०
तेषां तु रथिनां मध्ये कौन्तेयौ रथिनां वरौ ।
क्रीडमानौ रथोदारौ चित्ररूपौ व्यरोचताम् ।
आमिषेप्सू गवां मध्ये सिंहाविव बलोत्कटौ ॥ ११

छित्त्वा धनूंषि वीराणां शरांश्च बहुधा रणे ।
पातयामासतुर्वीरौ शिरांसि शतशो नृणाम् ॥ १२
रथाश्च बहवो भग्ना हयाश्च शतशो हताः ।
गजाश्च सगजारोहाः पेतुरुर्व्यां महामृधे ॥ १३
रथिनः सादिनश्चैव तत्र तत्र निषूदिताः ।
दृश्यन्ते बहुधा राजन्वेष्टमानाः समन्ततः ॥ १४
हतैर्गजपदात्योघैर्वाजिभिश्च निषूदितैः ।
रथैश्च बहुधा भग्नैः समास्तीर्यत मेदिनी ॥ १५
छत्रैश्च बहुधा छिन्नैर्ध्वजैश्च विनिपातितैः ।

C om
B 6 114 17
K 6 114 17

---

8 a) S1 D2 रथिनौ ( for रथिना ) — b) K8 B4 भरतर्षभ, M4 रथिनां वरौ — c) Ś1 K0 1 4 5 G1 आपीडयेता — d) G2 त्रैगर्ताना ( for त्रि° ) K5 D2 8 T1 G2–4 M4 महाबल, M1–3 5 महारथ ( for महद्बलम् )

9 a) D8 T1 G तु, T2 च ( for [अ]पि ) K1 पार्थ — b) K4 B1–3 Dn2 D4 शरैर् ( for विद्ध्वा ) K4 B Da Dn D4 5 7 नवभिर्, M4 पञ्चभिर् ( for बहुभिर् ) B4 D ( except D2 3 6 ) M ( except M4 ) आशुगैः ( for आयसैः ) — c) D2–4 S ( except G1 ) बलवान् ( for °वन् ) — d) K3–5 D1–3 G1–3 नादयानो, B Da Dn D4–8 T1 G4 त्रासयानो ( for नादयन्वै ) K3 न लक्ष्यते, B D ( except D1–3 6 ) महद्बल, S ( except G1 M5 ) नभस्थल ( for नभस्तलम् )

10 Ś1 K0–2 om 10 — a) Da Dn1 D5 बहव ( for रथिन ) D8 वीरा ( for शूरा ) — c) T1 G2–4 विव्यधुर्, T2 विष्यधन्, M4 विव्याध ( for विव्यधुर् ) — d) M1. 3 4 रुग्म° ( for रुक्म° )

11 a) Ś1 K1 B D ( except D1–3 ) तथा च, K0 तथा तु, K2 तया तौ ( for तेषां तु ) — K6 om ( hapl ) $11^{bcde}$ — b) B4 Dn2 D6–8 भरतर्षभौ ( for रथिना वरौ ) — c) K3 क्रिडमानौ, D2 क्रीडमाणौ, D8 °यानौ, T2 °मानो, G3 °मान ( for °मानौ ) K4 रणोदारौ, T G रथोदारैश् ( for °दारौ ) — d) D4 °सेनौ ( for °रूपौ ) K3 4 B D T2 M1–3 5 व्यदृश्यतां ( D2 T2 °त ), T1 G M4 अदृश्यता ( for व्यरोचताम् ) — e) K0 आमिषुप्सू ( sic ), K3 D6 आमिषार्थे, D1 2 °पार्थे ( for °पेप्सू ) D1 वने मध्ये, M यथा दृप्तौ ( for गवा मध्ये ) T1 G गजसघातमध्यस्थौ — f) K4 रणोत्कटौ, Dn2 D1 4 6–8 मदोत्कटौ, T1 G मदोद्धतौ ( for बलोत्कटौ ) M सिंहव्याघ्रौ तथा नृप

12 a) K2 धनुषि K ( except K4 ) B D ( except D1 ) M4 शूराणां ( for वीराणा ) — b) K3 शराश्च, T2 M ध्वजाश्च, G1 3 वपूषि ( for शराश्च ) — D2 om ( hapl ) $12^{cd}$ — d) K3–5 B D ( except Da2 D5, D2 om ) रणे, T1 G च तौ, M तथा ( for नृणा ).

13 a) K0 1 4 D1 T1 G3 4 बहुशो ( for बहवो ) — b) K3 हताश्च, T2 गजाश्च ( for हयाश्च ) D2 T1 G बहुशो, T2 M बहवो ( for शतशो ) K3 हया, Da1 हत ( for हता ) — c) T2 हयाश्च सहया पेतु — d) D1 पादाताश्च, T2 राजन्नुर्व्यां ( for पेतुरुर्व्यां ) B2 3 Da Dn D4 5 7 T1 G महाहवे ( for °मृधे )

14 a) B Dn2 D1 4 7 8 चापि ( for चैव ) — b) K5 B1 2 4 D ( except D7 8 ) T G निषूदिता — M ( except M3 ) om $14^{cd}$ — c) Da Dn D7 8 बहवो ( for बहुधा ) — d) K3 5 B1 Da2 D1–3 5 चेष्टमाना, B2–4 Dn D4 7 8 वेप°, Da1 श्रेष्ठ°, D6 द्रवमाणा ( for वेष्टमाना ) D1 T G M2 महीतले ( for समन्तत )

15 a) Ś1 K0 1 T2 हयैर् ( for हतैर् ) K0 Da2 D5 8 T1 G1 3 4 M गजपदात्यौघैर्, K3 5 °पदातौघैर्, D2 गजैः पदातैश्च, D8 गजैः पदात्यौघैर्, T2 गजपदान्योघैर् ( for °पदात्योघैर् ) — b) K2–5 B1 2 4 D ( except D7 8 ) T G च निषूदितैः, T2 चापि सूदितैः — c) T2 M कीर्णैः ( for भग्नैः ) — d) K3 5 D1. 2 6 समाकीर्यत, Da Dn1 ( before corr ) D5 °शीर्यत ( for °स्तीर्यत )

16 T2 om $16^{a}$–$17^{b}$ — a) T1 G2 4 भिन्नैर् ( for छिन्नैर् ) G1 5 छ( G3 चि )त्रैर्बहुविधाकारैर् — After $16^{ab}$, T1 G ins

460* चामरैर्हेमदण्डैश्च समास्तीर्यत मेदिनी ।

C. om B 6 114 17 F 6 114 17

अङ्कुशैरपविद्धैश्च परिस्तोमैश्च भारत ॥ १६
केयूरैरङ्गदैर्हारै राङ्कवैर्मृदितैस्तथा ।
उष्णीषैरपविद्धैश्च चामरव्यजनैरपि ॥ १७
तत्र तत्रापविद्धैश्च बाहुभिश्चन्दनोक्षितैः ।
ऊरुभिश्च नरेन्द्राणां समास्तीर्यत मेदिनी ॥ १८
तत्राद्भुतमपश्याम रणे पार्थस्य विक्रमम् ।
शरैः संवार्य तान्वीरान्निजघान बलं तव ॥ १९
पुत्रस्तु तव तं दृष्ट्वा भीमार्जुनसमागमम् ।
गाङ्गेयस्य रथाभ्याशमुपजग्मे महाभये ॥ २०
कृपश्च कृतवर्मा च सैन्धवश्च जयद्रथः ।
विन्दानुविन्दावावन्त्यावाजग्मुः संयुगं तदा ॥ २१
ततो भीमो महेष्वासः फल्गुनश्च महारथः ।
कौरवाणां चमूं घोरां भृशं दुद्रुवतू रणे ॥ २२
ततो बर्हिणवाजानामयुतान्यर्बुदानि च ।
धनंजयरथे तूर्णं पातयन्ति स्म संयुगे ॥ २३
ततस्ताञ्शरजालेन संनिवार्य महारथान् ।
पार्थः समन्तात्समरे प्रेषयामास मृत्यवे ॥ २४
शल्यस्तु समरे जिष्णुं क्रीडन्निव महारथः ।

— [c]) K2 D2 M8 अपि विद्धैश् (for अपविद्धैश्) — K3 om (hapl) $16^{d}$–$17^{c}$ — [d]) K5 परिस्तोत्रैश्च. — After 16, T1 G ins

461* घण्टाभिश्च कशाभिश्च समास्तीर्यत मेदिनी ।

17 K8 om $17^{abc}$, T2 om $17^{ab}$ (cf. v l 16) — [b]) K5 कवचैर्, D2 काचनैर्, D8 आयुधैर्, T1 G वल्यैर्, M (except M4) आकल्पैर् (for राङ्कवैर्) K4 अपि (for तथा). — After $17^{ab}$, T1 G ins

462* कुण्डलैर्मणिचित्रैश्च समास्तीर्यत मेदिनी ।

— [c]) K2 D2 अपि विद्धैश्च, K4 B Da Dn D3–5 7 8 M ऋष्टिभिश्चैव, T2 कचकैश्चैव (for अपविद्धैश्च) Ca cites अपविद्धै — Da D5 om (hapl) $17^{d}$–$18^{a}$ — [d]) T1 G2 4 चामरैर् (for चामर) Ś1 K0–2 च ह (for अपि)

18 Da D5 om $18^{a}$ (cf v l 17), Dn1 M1 3–5 om $18^{ab}$ — [a]) B3 तनुत्रैरपविद्धैश्च, D8 तत्र तत्रोपविद्धैश्च — [c]) K3 D5 8 उरुभिश्च; D1 2 ऊरूभिश्च Ś1 नरींद्राणां, K1 रणेंद्राणां; D1 नागेंद्राणां — [d]) D1 समाकीर्यत, D5 °शीर्यत (for °स्तीर्यत)

19 M reads (for the first time) 19–21 after 6 109 33 — [a]) D3 G2 अपश्यामो — [b]) M1. 2 4 (second time) भीमस्य, M3 5 भीष्मस्य (for पार्थस्य) — [c]) D3 वीरो, D6 T1 G सर्वान् (for वीरान्) — [d]) K1 4 B Da Dn D4 5 7 8 (before corr) यज्ञघान; M (second time) आजघान (for निजघान) B1 Dn2 D7 8 महाबल (for बल तव) T2 M1 3 4 (the last three both times) 5 (first time) जघान पल्वसर

20 [a]) K3 5 D2 3 6 T G2–4 पुत्रास्तु T2 राजेंद्र (for तं दृष्ट्वा) M (first time) तत्राद्भुततम दृष्ट्वा — [b]) K2 3 5 B D (except D1) T2 M (both times) भीमार्जुनपराक्रम — [c]) K3–5 B1 2 4 Da D2 3 5–7 रथाभ्यासम् — [d]) K3 5 D1 3 6 7 T G उप(K5 °पा) जग्मुर्; M (second time) उपयातो (for उपजग्मे) K4 B Da Dn D4 5 7 8 महाबल, D1 2 6 S (M second time) महाहवे (for °भये) M1–3 5 (all first time) आजग्मुस्ते महारथा, M4 (first time) उपागच्छन्महारथा

21 [c]) Dn2 D1 विंदानुविंदाव् — [d]) K4 B D (except D2) Ca नाजहु; S (M both times) न जहुः (for आजग्मु) K5 D2 सयुगं प्रति, S (M first time) संयुगेर्जुन — After 21, M (om 6 109. 34–35) reads 6 109 36, 459*, (om 6 109 $37^{a}$–$38^{b}$) 6 109 $38^{c}$–$41^{d}$ (om 6 109 $41^{ef}$), followed by 6 109 30–$32^{b}$ (om 6 109 $32^{cd}$), 6 109. 33

22 [a]) T1 G महाबाहु (for महेष्वास). — [b]) K0 3–5 B D फाल्गुनश्च K (except K3) B3 D1 S महाबल (for °रथ) — [c]) K5 च शूरांश्च, T2 चमू घोर — [d]) G1 3 दूर (for भृश) K0–2 प्रद्रुवतू, K3 D2 T G2 4 M4 दुद्रावतू, D3 दुद्रवतू, D4 दुद्रुवतू, M1 2 व्यद्रवता, M3 5 विद्रवता (for दुद्रुवतू)

23 [a]) K0 बर्हिणवाजानाव्; K3 D2 बर्हणवाजानाम्; K5 बर्हणवाछिनाम्, T2 बर्हिणवासानाम्; Cd °वाहिनाम्, Ca °वाजानाम् (as in text) — [b]) D1 T1 G प्रयुता (for अयुता) — [c]) Dn2 D1 धनजयरथ Dn1 तूर्णे; T2 [s]स्त्राणि (for तूर्णं) — [d]) T2 पातयत K1 स, T2 तु (for स्म) K2–5 B1–3 D (except D1) भूमिपा, S पार्थिवा (for सयुगे)

24 [a]) D1 ततस्तच्छरजालानि — [b]) M2 स (for स) — [c]) Ś1 K0–2 समस्तान् (for समन्तात्) T2 M समताद्रथिनश्चैव.

आजघानोरसि क्रुद्धो भल्लैः संनतपर्वभिः ॥ २५
तस्य पार्थो धनुश्छित्त्वा हस्तावापं च पञ्चभिः ।
अथैनं सायकैस्तीक्ष्णैर्भृशं विव्याध मर्मणि ॥ २६
अथान्यद्धनुरादाय समरे भारसाधनम् ।
मद्रेश्वरो रणे जिष्णुं ताडयामास रोषितः ॥ २७
त्रिभिः शरैर्महाराज वासुदेवं च पञ्चभिः ।
भीमसेनं च नवभिर्बाह्वोरुरसि चार्पयत् ॥ २८
ततो द्रोणो महाराज मागधश्च महारथः ।
दुर्योधनसमादिष्टौ तं देशमुपजग्मतुः ॥ २९
यत्र पार्थो महाराज भीमसेनश्च पाण्डवः ।
कौरव्यस्य महासेनां जघ्नतुस्तौ महारथौ ॥ ३०
जयत्सेनस्तु समरे भीमं भीमायुधं युवा ।
विव्याध निशितैर्बाणैरष्टभिर्भरतर्षभ ॥ ३१
तं भीमो दशभिर्विद्ध्वा पुनर्विव्याध सप्तभिः ।
सारथिं चास्य भल्लेन रथनीडादपाहरत् ॥ ३२
उद्भ्रान्तैस्तुरगैः सोऽथ द्रवमाणैः समन्ततः ।
मागधोऽपहृतो राजा सर्वसैन्यस्य पश्यतः ॥ ३३
द्रोणस्तु विवरं लब्ध्वा भीमसेनं शिलीमुखैः ।
विव्याध बाणैः सुशितैः पञ्चषष्ट्या तमायसैः ॥ ३४
तं भीमः समरश्लाघी गुरुं पितृसमं रणे । C 6 5323 B 6 114 35 K 6 114 36

---

25 [ab]) T2 शल्यश्च समरे भीष्म क्रीडन्निव महारथान् — [c]) Ś1 क्रुद्ध, K1 क्रुद्धौ (for क्रुद्धो)

26 [a]) B1 धनुष्कोटी, D1 [ऽ]तिसंक्रुद्धो, D2 महाबाहुर् (for धनुश्छित्त्वा) — [b]) K5 हत्वा चाप (for हस्तावाप) M1 3 (inf lin) पचक (for पञ्चभि) B1 जघान पच पचभि, D1 धनुश्चिच्छेद सायकैः; D3 धनुश्छित्त्वा विनद च; D6 हस्तावाप च पंचभि — [c]) D3 तथैन (for अथैनं) — [d]) T1 G1 विव्याथ K1 वर्मणि; M मर्मसु (for मर्मणि)

27 [a]) K2 अथान्यधनुर् (for °न्यद्धनुर्) — [c]) K1 transp मद्रेश्वरो and रणे

28 [a]) K4 B1 3 धर्मराज (B1 °ज) (for महाराज) S त्रिभिर्गाण्डीवधन्वान — [b]) K3 5 D2 सप्तभि (for पञ्चभि) — [d]) Ś1 Ko 2 चार्दयत् (for चार्पयत्)

29 [a]) D1-3 T2 M महेष्वासो (for महाराज) — [b]) D1 माधवश्च (for मागधश्च) T2 M महाबल (for °रथ) — [c]) K2 °समाविष्टौ, K3 °समादिष्टो; D5 °समाविष्टौ, M1 °मसुदिष्टौ — [d]) T2 M अभिजग्मतु (for उपजग्मतु)

30 [c]) D1 महत्सेनां, D5 lacuna, M3 महासेना — [d]) D2 जग्मतु, D5 lacuna (for जघ्नतुस्) K3 तु, K4 B2-4 Da Dn D1 4 6-8 G1 सु, D2 स, D3 स्स; D5 lacuna (for तौ) B1 T2 M जघ्नतु सुमहाबलौ

31 [a]) D2 जयसेनस्तु Ko 2 D3 च (for तु) — [b]) K3 भीम (for भीम) D1 भीमायसैर्, T2 भीमायुधे (for °युध) K3-5 B Da2 Dn D1-4 6-8 G1 2 युधि, T2 M रणे (for युवा) Da1 D5 भीम भीमो युधिष्ठिर, T1 G2 4 भीम भीमपराक्रम (G2 °म) — [c]) T1 G1 विव्याथ, G3 विव्यधे — [d]) K3 D3 S (except G3) अष्टाभिर् (for अष्टभिर्) D1 भरतर्षभ

32 [a]) Ko 2 भीम M3 निशितैर् (for दशभिर्) K5 बाणै (for विद्ध्वा) — [b]) T1 G1 विव्याथ K3 5 B D (except D1) T2 M पचभि (for सप्तभि) — [c]) B1 सारथिं च रणे राजन् — [d]) T G1 M (except M5) रथनीळाद् (for °नीडाद्) K1 B D (except D1 8) अपातयत् (for अपाहरत्)

33 [a]) Da1 D5 उद्भ्रातैस्तु रणे पार्थ — [b]) T2 M द्रावितो रथसत्तम — [c]) Da1 माधवो, D3 मगधो (for मागधो) K4 B1-3 D (except D2 3 7) [ऽ]प्सृतो; B1 [ऽ]पसृतो, M पृष्ठतो, Ca [ऽ]पहृतो (as in text) K2 3 5 Da Dn1 D2 5 राजन्, T2 M [ऽ]या(M1 हा)सीत् (for राजा)

34 [a]) K4 त, B1-3 D (except D1-3 6) G1 च, T1 G1 3 4 [अ]पि (for तु) K1 विरथ (for विवर) B1 Dn2 D1 4 6-8 दृष्ट्वा, G2 कृत्वा (for लब्ध्वा) — [b]) B1-3 Da Dn1 D5 भीमसेनमथायसै — [c]) T1 G1 विव्याथ K3 5 B1 D2 6 S निशितैर्बाणै, K4 B1-3 Da Dn D3 4 7 8 बाणैर्निशितै (for बाणै सुशितै) — [d]) K3 5 B1 Dn2 D1-4 6-8 पचषष्टिभिरायसै, B1-3 Da Dn1 D5 पचषष्ट्या शिलीमुखै, S पचभि पङ्क्तिरायसै

35 [a]) Da1 Dn1 T2 भीम (for भीम) T1 M1 3 5 समरे क्रोधी M1 तद्भीम परमक्रुद्धो — [b]) K1 2 Da1 गुरु (for गुरुं) T2 M2 5 नृप (for

C 6 5123 B 6 114 26 K 6 114 36

विव्याध नवभिर्भल्लैस्तथा पष्ठ्या च भारत ॥ ३५
अर्जुनस्तु सुशर्माणं विद्ध्वा बहुभिरायसैः ।
व्यधमत्तस्य तत्सैन्यं महाभ्राणि यथानिलः ॥ ३६
ततो भीष्मश्च राजा च सौबलश्च बृहद्बलः ।
अभ्यद्रवन्त संक्रुद्धा भीमसेनधनंजयौ ॥ ३७
तथैव पाण्डवाः शूरा धृष्टद्युम्नश्च पार्षतः ।
अभ्यद्रवन्रणे भीष्मं व्यादितास्यमिवान्तकम् ॥ ३८
शिखण्डी तु समासाद्य भारतानां पितामहम् ।
अभ्यद्रवत संहृष्टो भयं त्यक्त्वा यतव्रतम् ॥ ३९
युधिष्ठिरमुखाः पार्थाः पुरस्कृत्य शिखण्डिनम् ।
अयोधयन्रणे भीष्मं संहताः सह सृञ्जयैः ॥ ४०
तथैव तावकाः सर्वे पुरस्कृत्य यतव्रतम् ।
शिखण्डिप्रमुखान्पार्थान्योधयन्ति स्म संयुगे ॥ ४१
ततः प्रववृते युद्धं कौरवाणां भयावहम् ।
तत्र पाण्डुसुतैः सार्धं भीष्मस्य विजयं प्रति ॥ ४२
तावकानां रणे भीष्मो ग्लह आसीद्विशां पते ।
तत्र हि द्यूतमायातं विजयायेतराय वा ॥ ४३
धृष्टद्युम्नो महाराज सर्वसैन्यान्यचोदयत् ।

---

रणे) — $^c$) T1 G4 विव्याथ K3 5 D2 निशितै र्बाणैस्, K4 नि॰तैर्भल्लैस्, B3 4 Dn D4 6-8 पञ्चभि र्भल्लैस्, D1 T1 G नवभिर्बाणैस्, D8 दशभिर्बाणैस् (for नवभिर्भल्लैस्) — $^d$) Ś1 K0-2 चतु पष्ठ्या तथा नृप

36 Ś1 K0-2 D6 om 36$^{ab}$ — $^b$) Da Dn1 D3 5 नवभिर्, D8 बाहुभिर् (for बहुभिर्) — $^c$) T1 G4 व्ययमत् D8 सैन्य स, T1 G सैन्यानि (for तत्सैन्य) — $^d$) T2 यथाभ्राणि (for महाभ्राणि)

37 $^a$) M4 भीष्मस्तु D8 द्रोणश्च (for राजा च) — $^b$) Ś1 सौबल स, K2 4 B D7 T2 G3 M2 4 कौसल्यश्च, K3 5 Da2 Dn D1 2 4 6 8 कौशल्यश्च, Da1 D5 कौइयकश्च, T1 G1 2 4 कौसलश्च, M1 3 5 कौरव्यश्च (for सौबलश्च) K1 बृहत्स्थल, B4 बृहद्रथ — $^c$) K2 4 B Da Dn D4-8 समवर्तत, K5 D2 3 T2 M4 अभ्यवर्तत, T1 G2 4 °वर्षत, G1 3 °वर्षत (for °द्रवन्त) T G सक्रुद्धौ (T2 °द्धो)

38 $^a$) G2 अथैव G3 4 शूरो (for शूरा) — $^c$) K3 4 Da1 D2 G2 3 M4 अभ्यद्रवद् (for °द्रवन्) — $^d$) Ś1 K0-2 D2 व्यावृतास्यम् (for व्यादि°)

39 $^b$) K3 4 B Da2 Dn1 D1 5-8 T2 G1 3 M भरताना — $^c$) T2 अभ्यवर्तत K1 सहृष्टौ, T2 M सग्रामे (for सहृष्टो) — $^d$) K2 महारथान्; K3 B4 Dn D4 6-8 महारथात्, K4 यतव्रतात्, B1 3 महारथा, B2 Da D5 M4 महारथ, D2 3 महाव्रतात्, M1 3 5 महाग्रस; M2 महाव्रत (for यतव्रतम्)

40 K0 om (hapl) 40$^a$-41$^b$ — $^a$) K3 D2 G3 अयोधयद् G1 3 बाणै (for भीष्म) — G1 3 om 40$^c$-42$^a$ — $^d$) K1 सहत, K2 3 B D T G2 4 M सहिता K2-5 B D T2 M सर्वे (for सह) K1. 2 5 B1 3 4 Da1 संजयै, B2 सृजया (for सृञ्जयै)

41 K0 om 41$^{ab}$, G1 3 om 41 (of v l 40) — $^a$) T2 कौरवाश्च तत सर्वे, M कौरवा सहिता (M3 तथैव कौरवा) सर्वे — $^b$) B2 महाव्रत, Da Dn1 D5 जयद्रथ (for यतव्रतम्) — $^c$) K3 Da1 D3 शिखडी (for शिखण्डि-) Ś1 K0-2 योधान्, D2 सर्वान् (for पार्थान्)

42 G1 3 om 42$^a$ (of v l 40) — $^b$) K3 T2 M भयकर (for भयावहम्) — $^c$) T1 G4 तथा, T2 तत (for तत्र) D8 शूरैर् (for सार्धं) K3 D2 स जयै पाडवै सार्धं — $^d$) K4 निधन, T2 M च जय (for विजय).

43 $^a$) B3 4 जये, Dn2 D4 7 8 जयं (for रणे) — $^b$) K2 3 5 D2 5 Cc d ग्रह, D1 पण, S प्लव (for ग्लह) Cv as in text — $^c$) K1 दूतम्, K5 D2 द्रुतम्, Cc द्यूत (for द्यूतम्) K2 5 D2 आयातं, K4 आपन्न, B Da Dn D4-8 आसक्त, D8 आयत्त (for आयात) K2 तत्र य त तमायात, T1 G1 4 M2 तत्र हि द्यूत आसक्तो, T2 G3 तत्राभि (G3 °पि) धूत आसक्तो, G2 तत्राभूद्युद्ध आसक्तो; M1 3-5 तत्र हि व्यूह (M4 *sup lin* द्यूत) आसक्तो — $^d$) Da1 D2 6 च (for वा) K2 विजयायेति राघवा (*sic*), K5 विजयायेपराजय (*sic*)

44 $^a$) K3 5 D2-4 6 T2 M धृष्टद्युम्नोपि राजेंद्र, B Da2 Dn D7 8 °द्युम्नस्तु राजेंद्र, Da1 D5 धार्तराष्ट्रस्तु राजेंद्र — $^b$) Ś1 K0-2 सर्वसैन्यमचोदयत्; K3 5 °न्यान्यनोदयत् — $^c$) K B2 3 D2 3 7 G2 M (except M4) अभ्यद्रवत, T2 अभ्यद्रवत — $^d$) K4 B

अभिद्रवत गाङ्गेयं मा भैष्ट नरसत्तमाः ॥ ४४
सेनापतिवचः श्रुत्वा पाण्डवानां वरूथिनी ।
भीष्ममेवाभ्ययात्तूर्णं प्राणांस्त्यक्त्वा महाहवे ॥ ४५
भीष्मोऽपि रथिनां श्रेष्ठः प्रतिजग्राह तां चमूम् ।
आपतन्तीं महाराज वेलामिव महोदधिः ॥ ४६

इति श्रीमहाभारते भीष्मपर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥

## १११

धृतराष्ट्र उवाच ।
कथं शांतनवो भीष्मो दशमेऽहनि संजय ।
अयुध्यत महावीर्यैः पाण्डवैः सहसृञ्जयैः ॥ १
कुरवश्च कथं युद्धे पाण्डवान्प्रत्यवारयन् ।
आचक्ष्व मे महायुद्धं भीष्मस्याहवशोभिनः ॥ २

संजय उवाच ।
कुरवः पाण्डवैः सार्धं यथायुध्यन्त भारत ।
यथा च तदभूद्युद्धं तत्ते वक्ष्यामि शृण्वतः ॥ ३
प्रेषिताः परलोकाय परमास्त्रैः किरीटिना ।
अहन्यहनि संप्राप्तास्तावकानां रथव्रजाः ॥ ४

C 6 5130
B 6 115 4
K 6 115 4

---

D (except D2 8) M2 रथसत्तमा, T2 कुरुसत्तम, M1 2-5 कुरुसत्तम G2 मा मा भैष्ट रहसा

45 [a]) K1 2 सेनापतिर्, T1 G °पतेर् (for °पति) —[b]) K3 Da1 वरूथिनीं, K5 अनीकिनी —[c]) B Da Dn D3-8 समभ्ययात् D2 एवाभ्ययास् (for एवा भ्ययात्) —[d]) K3 त्यक्त्वा प्राणभयं महत्, K6 D2 त्यक्त्वा मरणजं भयं

46 [c]) K2 3 Dn1 आपतती —[d]) K3 4 B1 3 4 Da1 D1 2 महोदधेः, K5 महोदधौ D8 T2 वेलेव मकरालयः, M1 3 वेला इव महोदधिं, Cv वेलामिव महोदधेः

Colophon om in Ś1 K0-2 — *Sub-parvan* Omitting sub-parvan name, K4 T2 mention only दशमेह्नि (K4 cont भीष्मनिपातन), K6 D1 6 दशमयुद्ध- (D6 om. युद्ध)दिवस, B3 भीष्मनिपातन, M4 दशमे ह्निके — *Adhy name* K4 युद्ध — *Adhy no* (figures, words or both) K6 Dn2 108, Da2 (*sec m*) 72, D6 109, T1 G 110 (as in text), T2 M3. 4 112, M1 2 111, M5 113 — *Śloka no* Dn2 D5 47, D6 45

### 111

1 [c]) K3-6 B D (except D8 1) G2 महावीर्यः, T2 °वीरै (for °वीर्यैः)

2 [a]) K2 Da1 कुरवश्च, T2 कौरवाश्च (for कुर वश्च) —[b]) G1 पांडवा (for °वान्) T1 G पर्य° (for प्रत्य°) —[c]) K5 आचक्रमे, Da1 आचक्ष मे, T2 आचक्षेमे (for आचक्ष्व मे) D8 सु- (for मे) K2 महायुद्धे, K4 तथा युद्धं, K6 महाबाहो, B2 Dn1 D5 महद्युद्ध, D1 T1 G2 4 यथा युद्ध, G1 3 यथा वृत्त (for महायुद्ध) —[d]) Da1 °शोभन (for °शोभिन)

3 [a]) D2 पांडवश्चैव (for पाण्डवैः सार्धं) —[b]) B D (except D2 6) S (except G1 3) यद् (for यथा) K3 भारतः (for °त) —[c]) T1 G2 4 यदा (for यथा) K4 B4 यथा तदभवद्युद्ध, B1 3 सर्वमेतदशेषेण —[d]) B3 तात, B4 Dn2 D4 6 7 8 तत्तु, T2 ततो (for तत्ते) K2 4 B2 4 Da2 Dn D1-3 T2 साम्प्रत, B1 तत्तत°, M भारत (for शृण्वत) — Da1 om from वक्ष्यामि up to 31[b] on the missing fol 266, a different fol 266 is subst in its place, which is here ignored

4 Da1 missing (cf v 1 3) —[a]) B Da2 Dn D4 5 7 8 गमिता (for प्रेषिता) —[b]) B1 Da2 Dn1 D4 5 7 8 किरीटिनः — K5 om 4[c]-5[b] —[c]) K3 4 Da2 Dn1 D2 3 5 T2 M सम्ब्धास् (M4 °ब्धा), B Dn2 D4 7 8 सकृद्धास्, D6 T1 G संप्राप्ते, D1 संप्राप्ता (for °प्तास्) —[d]) K1 रथव्रज, B4 Dn2 D1 4 7 8 T1 G महारथा (for रथव्रजाः)

C 6 5339
B 6 115 5
K 6 115 5

यथाप्रतिज्ञं कौरव्यः स चापि समितिंजयः ।
पार्थानामकरोद्भीष्मः सततं समितिक्षयम् ॥ ५
कुरुभिः सहितं भीष्मं युध्यमानं महारथम् ।
अर्जुनं च सपाञ्चाल्यं दृष्ट्वा संशयिता जनाः ॥ ६
दशमेऽहनि तस्मिंस्तु भीष्मार्जुनसमागमे ।
अवर्तत महारौद्रः सततं समितिक्षयः ॥ ७
तस्मिन्नयुतशो राजन्भूयश्च स परंतपः ।
भीष्मः शांतनवो योधाञ्जघान परमास्त्रवित् ॥ ८
येषामज्ञातकल्पानि नामगोत्राणि पार्थिव ।
ते हतास्तत्र भीष्मेण शूराः सर्वेऽनिवर्तिनः ॥ ९
दशाहानि ततस्तप्त्वा भीष्मः पाण्डववाहिनीम् ।
निरविद्यत धर्मात्मा जीवितेन परंतपः ॥ १०
स क्षिप्रं वधमन्विच्छन्नात्मनोऽभिमुखं रणे ।
न हन्यां मानवश्रेष्ठान्संग्रामेऽभिमुखानिति ॥ ११
चिन्तयित्वा महाबाहुः पिता देवव्रतस्तदा ।
अभ्याशस्थं महाराज पाण्डवं वाक्यमब्रवीत् ॥ १२

5 Da1 missing (cf v 1 3) K5 om 5ab (cf v 1 4) —a) K0 2 T3 यथा प्रतिज्ञा (K0 T3 °ज्ञा); Dn3 तथाप्रतिज्ञ K1 कौरव्या, K3 D2 5 8 M1 3-5 कौरव्य (for °व्य) —b) K1 2 स चापि, D8 स सर्व, T2 सदा च, M1 4 सदा हि, M3 5 सभा हि (sic) (for स चापि) —c) Ś1 भीष्म, D1 भीष्म, T2 सीम (for भीष्म) — D1 om (hapl) 5d–6a —d) M2 सतत K5 M1–3 5 समितिंजय (M1 adds क्षयं after °जय)

6 Da1 missing (cf v 1 3) D1 om 6a (cf v 1 5) M1 2 om (hapl) 6–7 M3 om 6–8 —a) Ś1 (orig) K0–2 पावकिं, Ś1 (by corr) तावकैः (for कुरुभिः) Ś1 K0 1 4 B1 सहितो भीष्म (B1 °ष्मो); B2 3 Da2 Dn1 D5 T2 M4 सहिते भीष्मे, G3 सहिता भीष्म (for सहित भीष्म) Co cites भीष्म —b) B2 3 Da2 Dn1 D5 T2 M4 युध्यमाने, T1 G3 4 वध्यमान (for युध्यमान) K3–5 B Dn2 D2–4 6–8 M5 परतप (K3 D3 °प), Da2 Dn1 D5 T2 M4 परतपे (for महारथम्) — K5 D2 om (hapl) 6c–8b —c) K1 सपचाल्य B2 3 Da2 Dn1 D5 T2 M4 अर्जुने च सपाचाल्ये, T1 G4 अर्जुनं सहपाचाल्य —d) B Da2 Dn D4–8 T3 M3 5 सशयो (Da2 Dn1 [orig] °ये, D5 सक्षये) विजये (T2 °यो) भवत् (B2–4 मवेत्)

7 Da1 missing (cf v 1. 3) K5 D2 M1–3 om 7 (cf. v 1 6) —b) K0 2 भीमा° (for भीष्मा°) —c) K2 आवर्तत, K3 D6 T1 G2–4 प्रा°, T3 अवर्तत (for अवर्तत) K2 महारौद्र; T1 G2 4 °रौद्र (for °रौद्र) —d) D1 स तदा, T2 M4 तदा तु (for सतत) K2 समितक्षय, T1 G3 4 M4 समितिक्षय, T3 स जनक्षय

8 Da1 missing (cf v 1 3) K5 D2 om 8ab, M3 om 8 (cf v 1 6) —b) K3 B1 3 Da2 Dn D1 3–5 7 8 भूयश्च (D2 7 °स) श्च; T2 भूयश्चापि (for भूयश्च स) Dn1 D3 परतप, M4 °तपं (for °तप) —c) Ś1 शतनवो Ś1 K0 1 राजन्, K4 धीमान्; G3 योधान् (for योधान्) —d) T2 M1 4 जघान समितिंजय

9 Da1 missing (cf v 1 3) —a) D2 M1 2.4 तेषाम्; M4 एषाम् (for येषाम्) D1 5 8 (before corr) अज्ञानकल्पानि —b) D1 म ने मात्राणि (sic) K1 G3 पार्थिव, K4 B2 D3 6 T2 M भारत, D1 मारिष (for पार्थिव) —d) T3 °वर्तन (for °वर्तिन) T1 G शूरेण सह सयुगे, M2 शूरा सर्वेविवर्तिन, M4 शूरा सर्वे निपातिता

10 Da1 missing (cf v 1 3) —a) Dn2 तपस्; T1 G1 3 4 M2 तथा (for ततस्) T2 दशाहानि तदा भूत्वा —b) K3 भीष्म (for भीष्मः) —c) K2 D3 4 T1 G2 4 निरवद्यत, K3 °धीयत, K5 °भिद्यत, T3 °निद्यत, Cc d °विद्यत (as in text) —d) T1 G M2 जीविते स, M1 3–5 °ते च (for °तेन) K2 4 B Da2 Dn1 D1 2 4–8 M4 परतप (for °तप)

11 Da1 missing (cf v 1 3) —a) D3 शीघ्र (for क्षिप्रं) K5 D2 धर्मम् (for वधम्) — K2 om 11b–12a —b) K3 [ऽ]भीमुखं, B1 3 4 Da2 Dn D4 6 8 [ऽ]भिमुखो, D7 T G1 [ऽ]भिमुखान्; M4 विमुखं —c) K3 D2 न हन्यात्, K5 न्यहनत्; Da2 Dn1 D5 7 अहनन्, T2 महात्मा, M1 निहन्यान्, M2 न्यहनन् (for न हन्या) Ś1 K0 1 आहवे श्रेष्ठान्, K5 D2 पाण्डवश्रे°, D6 तावश्रे°, G1 मानवाञ्श्रे° —d) K3 5 D2 सग्रामा (D2 °मे) भिमुखानपि, K4 B Da2 Dn D3–5 7 8 T2 M सग्रामे सु (Dn2 °मेषु, T2 °मे स) न्वहूनिति (M1–3 5 °नपि), D1 सग्रामे तु बहूनिव

12 Da1 missing (cf v 1 3) K2 om 12a (cf v 1 11) —b) K2 मम्रा (sic) (for पिता) —c)

युधिष्ठिर महाप्राज्ञ सर्वशास्त्रविशारद ।
शृणु मे वचनं तात धर्म्यं स्वर्ग्यं च जल्पतः ॥ १३
निर्विण्णोऽस्मि भृशं तात देहेनानेन भारत ।
घ्नतश्च मे गतः कालः सुबहून्प्राणिनो रणे ॥ १४
तस्मात्पार्थं पुरोधाय पाञ्चालान्सृञ्जयांस्तथा ।
मद्वधे क्रियतां यत्नो मम चेदिच्छसि प्रियम् ॥ १५
तस्य तन्मतमाज्ञाय पाण्डवः सत्यदर्शनः ।
भीष्मं प्रतिययौ यत्तः संग्रामे सह सृञ्जयैः ॥ १६
धृष्टद्युम्नस्ततो राजन्पाण्डवश्च युधिष्ठिरः ।
श्रुत्वा भीष्मस्य तां वाचं चोदयामासतुर्बलम् ॥ १७
अभिद्रवत युध्यध्वं भीष्मं जयत संयुगे ।
रक्षिताः सत्यसंधेन जिष्णुना रिपुजिष्णुना ॥ १८
अयं चापि महेष्वासः पार्षतो वाहिनीपतिः ।
भीमसेनश्च समरे पालयिष्यति वो ध्रुवम् ॥ १९
न वै भीष्माद्भयं किंचित्कर्तव्यं युधि सृञ्जयाः ।
ध्रुवं भीष्मं विजेष्यामः पुरस्कृत्य शिखण्डिनम् ॥ २० C 6 5354 B 6 115 20 K 6 115 20

K2 D5 सम्यामर्न्, K3 5 Da2 Dn1 (before corr) D2 2 6 7 8 सम्यामस्य, T2 सम्यागय D2 महाबाहु (for °राज) — $^{d}$) D3 (m as in text) कामम् (for वाक्यम्)

13 Da1 missing (cf v 1 3) Before 13, D6 ins भीष्म उवाच — $^{a}$) M4 युधिष्ठिरो Ś1 D7 महाप्रज्ञ, D3 M4 °प्राज्ञ, D5 °राज (for °प्राज्ञ) — $^{b}$) K2 शर्वशास्त्र, K5 G3 M1 3 सर्वशास्त्र D3 M4 विशारद — $^{c}$) B Da2 Dn D1 4 - 7 शृणुष्व, D8 शृणुष्व (m °ष्व) (for शृणु मे) — Ś1 reads 13$^{d}$–14$^{a}$ in marg — $^{d}$) D5 धर्मं स्वर्गं, T2 धर्मं कीर्तिं, G1 3 धर्म्यं तथ्य, M2 स्वर्गं धर्मं, M5 स्वर्ग्यं धर्म्यं (by transp) D4 m T2 तत्त्वत, G1 M (M4 क)ल्पित, G3 कल्प्य त (for जल्पत) K4 धर्मं युक्त च भारत

14 Da1 missing (cf v 1 3) Ś1 reads 14$^{a}$ in marg (cf v 1 13) — $^{a}$) T2 [s]ह (for ऽस्मि) — $^{b}$) M2 देहनाशेन (for देहेनानेन) G3 M2 सुव्रत (for भारत) — $^{c}$) Ś1 Ko–2 transp घ्नत and गत M5 घ्नतश्च मे

15 Da1 missing (cf v 1 3) — $^{a}$) B2 T2 G2 4 पार्थ; M4 पार्थं (for पार्थं) T2 परोधाय — $^{b}$) D2 पाञ्चाला, T1 G पाण्डवान्, T2 M पाचाल्य D2 रणे (for तथा) — $^{c}$) K1 मद्वधे

16 Da1 missing (cf v 1 3) Before 16, D6 ins संजय उवाच — $^{b}$) K6 T G1 4 पाण्डवा K3, 6 D2 सत्यविक्रम (K6 °मा), Da2 Dn D5 7 8 T G1 3 4 M4 सत्यदर्शिन, D6 प्रियदर्शन — $^{c}$) T1 G2 4 °ययुर् (for °ययौ) K3 तत्र, K5 यत्र, B Da2 Dn D1–8 राजा, T1 G1 3 4 यत्ता, T2 यत्न, G2 युक्ता (for यत्त) — $^{d}$) K6 संयुगे (for संग्रामे) K1 सहसृंजय, K2 सह सृजय

17 Da1 missing (cf v 1 3) — $^{a}$) Da2 Dn1 D6 राजा (for राजन्) — $^{c}$) Ko ता वाचो (sic), K3 5 D2 6 तद्वाक्य, T2 वचन (for ता वाच) — $^{d}$) K3 D1 3 6 नोदया, K4 देशया (for चोदया)

18 Da1 missing (cf v 1 3) — $^{a}$) K3 5 सम्या(K5 °भ्य)द्रवत, B1 Dn2 D4 7 8 अभिद्रवध्व, D2 3 °द्रवद्, T2 समद्रवत T2 M सयोद्धं (for युध्यध्व) — $^{c}$) D2 रक्षिता, T2 रोक्षिता Ś1 सति सधेन, D8 मत्यसत्वेन — $^{d}$) D2 विष्णुना (for जिष्णुना) D1 रिपुघातिना, D2 अपि जिष्णुना, T1 G सर्वजि°, M1 3 (sup lin) 5 वरजि° (M3 [orig] 5 °यि°) M2 4 परजि°

19 Da1 missing (cf v 1 3) — $^{a}$) D6 अय यापि, T1 G2 4 आरोपित- (for अय चापि) — $^{b}$) Ś1 पार्थिवो, K2 पार्थिवो, T2 पार्श्वतो (for पार्षतो) — $^{c}$) K6 D2 तु (for च) — $^{d}$) Ś1 पालयिष्यति (for °ष्यति)

20 Da1 missing (cf v 1. 3) — $^{a}$) K3–5 B D (Da1 missing) T2 M मा वो (M4 मां वा), T1 G न वो (for न वै) D2 भीष्मादिप, D8 भीष्माद्भय°, T1 G भीष्मभय (for भीष्माद्भय) K3 D8 कश्चित् (for किंचित्) — $^{b}$) K8 इत्यस्य, K4 B Dn2 D1–4 6–8 T2 अस्त्वद्य, K5 T1 G M अस्त्वद्य, Da2 Dn1 D6 अद्यास्तु (for कर्तव्यं) T2 इति (for युधि) K1 2 सृजया, T2 सृजय°, G3 सजया°, M4 सृजयान् (for सृञ्जया) — K5 D2 om 20$^{c}$–22$^{b}$ — $^{c}$) Ko 2 विजि(Ko °जी)ष्याम°, D1 वधिष्यामि, D8 निजेष्याम°, D5 विजेष्याम, T G वधिष्याम°, M4 जयेष्याम (for विजेष्याम°) — After 20, T2 M1 4 ins

463* ते तथेति प्रतिज्ञाय पुरस्कृत्य शिखण्डिनम् ।

C 6 5355
B.6.115 21
K.6 115 21

तथा तु समयं कृत्वा दशमेऽहनि पाण्डवाः ।
ब्रह्मलोकपरा भूत्वा संजग्मुः क्रोधमूर्छिताः ॥ २१
शिखण्डिनं पुरस्कृत्य पाण्डवं च धनंजयम् ।
भीष्मस्य पातने यत्नं परमं ते समास्थिताः ॥ २२
ततस्तव सुतादिष्टा नानाजनपदेश्वराः ।
द्रोणेन सहपुत्रेण सहसेना महाबलाः ॥ २३
दुःशासनश्च बलवान्सह सर्वैः सहोदरैः ।
भीष्मं समरमध्यस्थं पालयांचक्रिरे तदा ॥ २४
ततस्तु तावकाः शूराः पुरस्कृत्य यतव्रतम् ।
शिखण्डिप्रमुखान्पार्थान्योधयन्ति स्म संयुगे ॥ २५
चेदिभिश्च सपाञ्चालैः सहितो वानरध्वजः ।
ययौ शांतनवं भीष्मं पुरस्कृत्य शिखण्डिनम् ॥ २६
द्रोणपुत्रं शिनेर्नप्ता धृष्टकेतुस्तु पौरवम् ।
युधामन्युः सहामात्यं दुर्योधनमयोधयत् ॥ २७
विराटस्तु सहानीकः सहसेनं जयद्रथम् ।
वृद्धक्षत्रस्य दायादमाससाद परंतपः ॥ २८
मद्रराजं महेष्वासं सहसैन्यं युधिष्ठिरः ।
भीमसेनाभिगुप्तश्च नागानीकमुपाद्रवत् ॥ २९

---

21 Da1 missing (cf. v l 3) K5 D2 om 21 (cf v l 20) T2 M om $21^{ab}$ — a) K8 D6 त तथा, K4 B Da2 Dn D3–5 7 8 ते तथा, D1 ते घातु॰ (for तथा तु) K1 यत्वा (for कृत्वा) — G1 3 om $21^{cd}$ — c) T G2 4 M ब्रह्म( T2 M इन्द्र )लोक जेतुकामा — After $21^{c}$, D4 erroneously *repeats* $21^{cb}$

22 Da1 missing (cf v l 3) K5 D2 om $22^{ab}$ (cf. v l 20) T2 M transp $22^{ab}$ and $22^{cd}$ — a) T2 M पांचाल्य ते (for शिखण्डिन) — c) Ś1 K0 1 पालने, K8 D2 T1 G4 M1 3 4 पतने (for पातने) G4 यत्त (for यत्न) — d) K5 D2 त (for ते) B1 समाहिता (for °स्थिता) D1 परमं योगमास्थिता॰

23 Da1 missing (cf v l 3) — a) D8 T2 G2 सुता दृष्ट्वा (for सुतादिष्टा) — b) D8 °जनपदेश्वरान्, G3 °पद्जनेश्वरा — c) T1 G सद्रोण (for द्रोणेन) T2 सहिता युद्धे (for सहपुत्रेण) — d) K3. 5 D2 6 सहितास्ते, Dn2 सहसेनो, D1 सहसैन्या (for °सेना) K1 Dn2 महाबल॰

24 Da1 missing (cf v l 3) — b) K3 स हि (for सह) — d) T1 G2 4 तथा (for तदा)

25 Da1 missing (cf v l 3) — a) Ś1 K0–2 ततस्ते K3 5 D2 सर्वे (for शूरा) — b) K3–5 B1–3 D (except D1 3, Da1 missing) T2 M महा॰ (for यत॰) — c) D2 शिखंडी (corr from °टि) K3 सर्वान्, T2 शूरान्, M वीरान् (for पार्थान्) — d) K1 योधयति समं युगे, G1–3 योधयामासुराहवे

26 Da1 missing (cf v l 3) — a) D (Da1 missing) तु (for च) K4 B सपचालै, M1 3–5 सपाचाल्यै॰ K5 चेदिभिश्चैव पांचाल्यै, T G चेदिभि सहपांचालै॰ — b) K5 सह वैर्, D2 सहितैर् (for सहितो) — d) K2 यतव्रत (*also* शिखडिनं as in text)

27 Da1 missing (cf v l 3) — a) D1 द्रोण॰ पुत्र॰, D6 °पुत्रे (for °पुत्रं) K3 5 D2 शमेर् (for शिनेर्) — b) K3 Da2 Dn1 D1 2 5 6 T1 G M1–3 5 च (for तु) B4 Dn1 D4 8 M1–3 5 कौरव, D1 पौरुष, D7 कौरवान् (for पौरवम्) D3 सात्यकि समयोधयत् — c) K3 4 B D (Da1 missing) T2 M अभिमन्यु॰, K5 अभिमन्यु (for युधामन्यु॰) K0–2 महामात्य, D8 समासाद्य, T1 G3 4 सहामात्यो (for °त्य)

28 Da1 missing (cf v l 3) — a) K3 सु॰, D8 T1 G च (for तु) K0–2 D2 4 T2 महानीक (K2 °क); K4 सहामात्य — b) K3 5 D2 सहसैन्यं, D5 °सेने, T1 G सवैर् (for °सेन) K0–2 जयद्रल (for °द्रथम्) — c) K3 D7 वार्धक्षत्रस्य, K4 5 B1, 2 4 Da2 Dn D4 5 वार्धक्षेमे( K5 °क्षेम, Da2 D5 °क्षेमि, Dn2 °क्षमे )स्तु, D1 वार्धक्षत्रिस्तु, D2 वार्धक्षेत्रस्य, M1 वृद्धक्षेमस्य (for वृद्धक्षत्रस्य) B2 Da2 Dn1 D5 दायाद (for °दम्) — d) K3 4 B D (Da1 missing) परंतप, M4 °तपं (for °तप॰) — After 28, Da2 Dn1 D5 ins

464* चित्रसेनस्तव सुत विचित्रशरकार्मुकम् ।

29 Da1 missing (cf v l 3) — a) D2 मद्रराज महेस्वांस (corrupt) — b) T1 G3 4 सह सैन्यैर् (for °सैन्य) K1 M2 युधिष्ठिर, D4 M3 5 °ष्ठिर (for °ष्ठिर॰) — c) K4 B Dn2 D1 4 7 8 G2 M2 5 °सेनो भिगुप्त॰, Da2 Dn1 D2 3 5 6 °सेनाभि( D2 6 °सेनोति॰, D8 °सेनोभि )गुप्त K4 B Da2 Dn1 D2–6 M तु (for च) K5 भीमसेनो गदा गृह्य, T2 भीमसेनो महाराज — d) T2 M गजानीकम्, G3 नगा॰ (for नागा॰)

स तेनाभिहतः संख्ये भीष्मः कुरुपितामहः ।
नाकम्पत महाराज क्षितिकम्पे यथाचलः ॥ ४२
ततः प्रहस्य बीभत्सुर्व्याक्षिपन्गाण्डिवं धनुः ।
गाङ्गेयं पञ्चविंशत्या क्षुद्रकाणां समर्पयत् ॥ ४३
पुनः शरशतेनैनं त्वरमाणो धनंजयः ।
सर्वगात्रेषु संक्रुद्धः सर्वमर्मस्वताडयत् ॥ ४४
एवमन्यैरपि भृशं वध्यमानो महारणे ।
न चक्रुस्ते रुजं तस्य रुक्मपुङ्खाः शिलाशिताः ॥ ४५
ततः किरीटी संरब्धो भीष्ममेवाभ्यवर्तत ।
शिखण्डिनं पुरस्कृत्य धनुश्चास्य समाच्छिनत् ॥ ४६
अथैनं दशभिर्विद्ध्वा ध्वजमेकेन चिच्छिदे ।
सारथिं विशिखैश्चास्य दशभिः समकम्पयत् ॥ ४७
सोऽन्यत्कार्मुकमादत्त गाङ्गेयो बलवत्तरम् ।
तदप्यस्य शितैर्भल्लैस्त्रिधा त्रिभिरुपानुदत् ।

C 6 5619
B 6 119 53
K 6 119 53

ᶜहुद्) — ᵇ) D2 6 T1 G1 2-4 M2 भारताना — ᶜ) Ś1 K0-2 जघानोरसि सक्रुद्धो, D1 आजघान सुसक्रुद्धो — ᵈ) D1 सुपर्ब्बैर् (for नवभिर्) — After 41, T G read 45ᶜᵈ

42 ᵃ) S मग्ने — ᵇ) Ś1 K1 2 D1 भरतानां पिता मह — After 42ᵃᵇ, T1 G read line 4 of 476*, and read 42ᶜᵈ after 45ᵃᵇ — ᶜ) K2 नाकंपंत — ᵈ) Ś1 क्षिते कपे (sic), T2 भूमिकपे

43 ᵃ) D1 तत प्राणान्परिप्रेप्सुर् — ᵇ) Da2 Dn1 D5 M3 व्याक्षिपद्, M2 विक्षिपन्, M4 आक्षिपन् K2 5 D2 विक्षिपन्कार्मुकं मुहु (K5 D2 मुहु), G1 3 गाडिव निक्षिपन्धनु — ᵈ) K0 क्षुद्रकाना, D2 क्षुर प्राणा, Ca क्षुद्रकाणा (as in text) Ś1 समर्दयत्; K2-4 B D समार्पयत — After 43, T2 reads 50-52

44 ᵃ) T2 G1 M4 तत (for पुन) K1 शरशतै नेम, K2 ᵒशतेनैन, K3 5 D2 ᵒशतेनैव (K5 ᵒव), K4 B Da Dn D4 4-8 T1 G2 4 शर(Dn2 D4 पुन)- शतैरेन, D3 T2 G3 (also as in text) M2 ᵒशतेनैव — ᵇ) K2 धरमाणो — ᶜ) D1 शरघातेषु (for सर्व गात्रेषु) Ś1 K0 D1 सरब्ध, K3 समूढ (for सं क्रुद्ध) — ᵈ) K3 5 D2 3 S तथा (for सर्वं) Ś1 सर्वमर्मसु ताडयत्

45 ᵃ) D3 तदा (for भृश) — ᵇ) K1 वध्यमाणो, K2 ᵒमाने, K3 B D (except D1-3) M1-3 5 विध्य मान K4 B D (except D1-3) महन्रण, S महारथ (M1-3 5 ᵒथै) — After 45ᵃᵇ, T1 G read 42ᶜᵈ N ins after 45ᵃᵇ T1 G (all om lines 1-3) ins after 42ᵃᵇ

> 476* तानप्याशु शरैर्भीष्म प्रविव्याध महारथ ।
> तैश्च मुक्तान्शरान्भीष्मो युधि सत्यपराक्रम ।
> निवारयामास शरैः सम सनतपर्वभि ।
> शिखण्डी तु रणे बाणान्यान्मुमोच महारथ ।

[ (L 1) K0 2 तानप्याशु, K1 तानस्याशु, D1 तमᵒ, D2 न तथा ते Ś1 K0-2 D1 महामति, K3 5 D2 3 6 महारणे, D3 महायशा — (L 2) K4 5 B Da Dn1 D5 तैर्वि- (for तैश्च) D3 मुक्ताम् K2 सत्य (for सत्य-) — (L 3) Ś1 K0-3 5 D1-3 शि(D2 मि)तै शरै, D6 शरै शितै (for शरै सम) Co cites सम as above — (L 4) Da1 D5 8 शिखडि तु, D1 शिखडी च, T1 G शिखण्डिनि (for शिखण्डी तु) D1 तथा (for रणे) K2 बाणान् (for बाणान्) K3 5 D2 प्र, D1 T1 G न (for यान्) K3 5 D1 2 6 महाव्रते, D3 ᵒरथे, T1 G नगाधिप (for महारथ) ]

— T G read 45ᶜᵈ after 41 — ᶜ) D2 जय, T1 G4 रजा, T2 रद (for रुज) — ᵈ) K1 रुक्मपुग (sic), M1 2 4 रुक्मपुरा K1 शिलाशिव, Da1 शिलासिता

46 ᵃ) K4 शिखडी (for किरीटी) N (except Ś1 K0-2) सक्रुद्धो (for सरब्धो) — ᵈ) G3 महा (for समा)

47 D7 om 47ᵃᵇ — ᵃ) Ś1 K0 2 5 तथैनं K4 B Dn2 Da 4 8 नवभिर्, D1 शतभिर् (for दशभिर्). S विद्धा च (G1 3 स विद्धा) नवभिर्बाणैर् — ᵇ) K4 B2 4 चाच्छिनत्, S चाक्षिपत् (for चिच्छिदे) — ᶜᵈ) S transp विशिखै and दशभि K3 तस्य (for चास्य) Ś1 K1 समकर्पयत्

48 ᵃ) K1 आदत्त, K3-5 B1 3 4 Dn D1-4 6-8 T G आदाय, M2 आदत्ते — ᵇ) B4 D4 7 8 पार्थं तु (B4 ᵒर्थस्तु) नि, D2 तदप्यश्म (for तदप्यस्य) K4 B1-3 Da Dn1 D5 बाणैर् (for भल्लैस्) — ᵈ) B4 T2 G त्रिभिस् (for त्रिधा) K3-5 B1-3 Da Dn1 D2 3 5 6 अपातयत्, B4 Dn2 D4 7 8 अवातयत्, D1 अपा- नुदत्, S अथाच्छिनत् (G1 ᵒन) — ᵉ) K3-5 B Da Dn D2-8 S निमेे(K3 D2 3 ᵒमि)पार्थेन कौंतेय — ᶠ) Ś1 K0-2 आत्त(K2 ᵒत्ते)मात्र, Dn2 D5 6 आत्तमात्र (D5 ᵒण) T1 G महारथ

C 6 5520
B 6 119 53
K 6 119 53

निमेषान्तरमात्रेण आत्तमात्तं महारणे ॥ ४८
एवमस्य धनूंष्याजौ चिच्छेद सुबहून्यपि ।
ततः शांतनवो भीष्मो बीभत्सुं नाभ्यवर्तत ॥ ४९
अथैनं पञ्चविंशत्या क्षुद्रकाणां समर्दयत् ।
सोऽतिविद्धो महेष्वासो दुःशासनमभाषत ॥ ५०
एष पार्थो रणे क्रुद्धः पाण्डवानां महारथः ।
शरैरनेकसाहस्रैर्मामेवाभ्यसते रणे ॥ ५१
न चैष शक्यः समरे जेतुं वज्रभृता अपि ।
न चापि सहिता वीरा देवदानवराक्षसाः ।
मां चैव शक्ता निर्जेतुं किमु मर्त्याः सुदुर्बलाः ॥ ५२
एवं तयोः संवदतोः फल्गुनो निशितैः शरैः ।
शिखण्डिनं पुरस्कृत्य भीष्मं विव्याध संयुगे ॥ ५३
ततो दुःशासनं भूयः स्मयमानोऽभ्यभाषत ।
अतिविद्धः शितैर्बाणैर्भृशं गाण्डीवधन्वना ॥ ५४
वज्राशनिसमस्पर्शाः शिताग्राः संप्रवेशिताः ।
विमुक्ता अव्यवच्छिन्ना नेमे बाणाः शिखण्डिनः ॥ ५५

---

49 $^{a}$) T1 G1 3 4 एवमेव, T2 M4 एवमेष Ko 2 5 धनुष्याजौ, T2 M धनूंष्यष्टौ Da1 एवमस्य धनुष्याजो मादत (corrupt) — $^{b}$) G8 विच्छिनत् (for चिच्छेद) Ko 2 स्ववलाम (Ko °न्य) पि, K8-5 B1 2 D1. 2 7 सुबहून्यथ; B8 4 Da Dn D4 5 8 S सुबहून्युत (Da1 °बहून्युन, M4 °महाच्छरै) — K8 5 D2 om 49$^{cd}$ — $^{cd}$) = 40$^{cd}$ D8 6 यतमानोपि गागेयो (for $^{c}$) K4 B Dn2 D8 4 7 M1 8 5 नात्य° (for नाभ्य°)

50 T2 reads 50–52 after 43 — $^{a}$) K8 5 D2 तथैन (for अथैन) S बीभत्सुरेन विंशत्या — $^{b}$) Ko क्षुद्रकाना K1 समर्दयन्, K8-5 B1 2 4 Da Dn D2-8 समार्पयत्, B3 समाचिनोत्, D1 S समर्प° — After 50$^{ab}$, D1 ins

477* पश्यता कुरुवीराणां सर्वेषां तत्र भारत ।

51 For sequence in T2 (of v 1 50). Before 51, D6 reads भीष्म उवाच — $^{a}$) T2 एषमन्यो (sic), M8 5 एवं पार्थो (M5 °र्थे) — $^{d}$) K4 B Da Dn D1-8 मामेवाभ्यहनद्, D1 मामेवाभ्यस्यते, S °वाभ्यपतद् (T2 °द्रवद्) (for °वाभ्यसते)

52 For sequence in T2 (of v. 1 50) Da1 reads 52 in marg — $^{a}$) Ś1 चेष, K1 चै*, K2 D6 T1 G2-4 चैव K4 B Da Dn D4 5 7 8 T G2 4 M transp शक्य and समरे G1 8 समरे जेतु (for शक्य समरे) — $^{b}$) G1 8 शक्यो (for जेतु) Ś1 Ko-2 वज्रभृतापि हि, K5 °धरा अपि, B4 D4 °भृता ह्यपि, S °भृता स्वय — $^{c}$) D5 तत्रापि K1. 2 D1 वीर (for क्रुद्धो) S समरे क्रुद्धो (for सहिता वीरा) — $^{d}$) D3 6 S °राक्षसै — $^{e}$) K8-5 B Da Dn D1. 2 4-8 मा चापि (K8 5 D2 मामेव) (for मा चैव) D3 न च शक्ता विनिर्जेतु, S एष शक्यो रणे जेतु — $^{f}$) S मर्त्यैर् (for मर्त्या) K4 B1. 3 4 Dn2 D8 4 7 8 T G4 महारथा (T G4 °थ), K5 D2 महाबला°, B2 Da Dn1 D5 महारणे, G1-3 M महारथै°. — After 52, S (G1-3 om line 1) ins

478* न चाहमपि शक्तस्तु सर्वैरपि महारथै° ।
ऋतेऽर्जुन सुसंक्रुद्धैरेतत्सत्य ब्रवीमि ते ।

[(L. 1) M शक्यस्तु (for शक्तस्तु)]

53 Before 53, D6 reads सजय उवाच — $^{a}$) S तयो संवदतोरेव (T2 M1-3 5 °व). — $^{b}$) K1 फल्गुणो, K2-5 B D (D4 by corr) फाल्गुनो D1 [s]पि (for नि) — $^{d}$) T1 G4 विव्याथ

54 $^{a}$) B3 S भीष्म (for भूय) — $^{b}$) K5 भीह मान, T1 G2 4 श्वसमान, G8 स्मयमानम् All MSS (except Ś1 Ko-2 D1) इवाब्रवीत् (for ऽभ्यभाषत) — $^{c}$) K8 5 D2 अभिविद्ध°, S आर्दितो नि (for अति विद्ध) K5 D2 सितैर् — $^{d}$) K5 Da1 गाजीव K1 Da Dn1 धन्वन; K8 5 D1-8 6 -धन्विना — After 54, B1 D5 read 60$^{cd}$, while Da1 Dn1 read 60$^{cdab}$

55 D6 om 55, Da1 Dn1 om 55$^{ab}$ — $^{a}$) D1 °सम स्पर्शा°, D8 °समस्पर्शैः — M8 5 om. (hapl) 55$^{b}$–57$^{a}$ — $^{b}$) K1 सिताग्रा संप्रवे शिरै (sic), K8 D2 शि(D2 सि)ताग्रास्तिग्मतेजस°, K4 B Da2 Dn2 D6-3 अर्जुनेन शरा युधि, K5 सिताग्रा सम तेजस, D1 शिताग्रा सुप्रवेशिता, D8 सिताग्रै सुप्रतेजनै, D4 वज्रवेगा दुरासदा (= 57$^{b}$), T G M1 2 4 सुपुंखा सुप्रतेजना (M1 सुप्रवेजिता, M2 सुवैशिता [submetric], M4 सुप्रवेगिता) — After 55$^{ab}$, Da2 reads 60$^{cdab}$ — D4 om 55$^{c}$-56$^{b}$ — $^{c}$) K8 5 D1. 8 T G M1 2 4 सु (for वि) G2-4 M2 4 अस्य°, Ca अव्य° (as in text) K4 B Da Dn D6-8 Ca मुक्ता सर्वेऽव्यवच्छिन्ना — $^{d}$) Ko 2 न मे, K8 5 B1 D2

निकृन्तमाना मर्माणि दृढावरणभेदिनः ।
मुसलानीव मे घ्नन्ति नेमे बाणाः शिखण्डिनः ॥ ५६
ब्रह्मदण्डसमस्पर्शा वज्रवेगा दुरासदाः ।
मम प्राणानारुजन्ति नेमे बाणाः शिखण्डिनः ॥ ५७
भुजगा इव संक्रुद्धा लेलिहाना विषोल्बणाः ।
ममाविशन्ति मर्माणि नेमे बाणाः शिखण्डिनः ॥ ५८
नाशयन्तीव मे प्राणान्यमदूता इवाहिताः ।
गदापरिघसंस्पर्शा नेमे बाणाः शिखण्डिनः ॥ ५९
कृन्तन्ति मम गात्राणि माघमासे गवामिव ।
अर्जुनस्य इमे बाणा नेमे बाणाः शिखण्डिनः ॥ ६०
सर्वे ह्यपि न मे दुःखं कुर्युरन्ये नराधिपाः ।
वीरं गाण्डीवधन्वानमृते जिष्णुं कपिध्वजम् ॥ ६१

C 6 5633
B 6 119 67
K 6 119 67

नैते (for नेमे) — After 55, K2 reads 57ab, D3, 59ab, T1 G, 58 and 60

56 M3 5 om 56 (cf v l 55) D3 4 om 56ab (for D4, cf v l 55) — a) K0 2 वि(K0 नि)कृत्त माणा, K4 B D5 M1 निकृतमाणा, Da1 Dn1 D6-8 M2 निकृत्तमाना, G3 निकृतनाना T1 G2 4 गात्राणि (for मर्माणि) — b) K0-2 दृढा वारण°, B4 °वरणमे दिभि — c) Ś1 K0 1 मुसुलानी(K0 °न्ये)व, K2 मुशलान्येव, K4 B Da Dn D2-3 मुसला (B3 अलसा, Da1 Dn1 D5 6 मुशला) इव, K5 मुशालानीव, T2 °लानिव K5 मा (for मे) D4 मम प्राणानारुजति (= 57c) — d) K2 D3 न मे, K5 नैते (for नेमे) — After 56, T2 reads 60 and G1-3, 61

57 G1-3 om (hapl) 57 M3 5 om. 57a (cf v l 55) K2 reads 57ab after 55 — b) K4 B Da2 Dn D2 4 6-8 वज्र° (for ब्रह्म°) — b) K4 B Da2 Dn2 D5 6 वज्रवेग ; M2 °वेगे S (G1-3 om) दुरावरा (for दुरासदा) — c) D1 आरुजते, D3 (marg sec m as in text) न क्षजति, T1 G4 M निकृतति (for आरुजन्ति) — d) K5 नैते (for नेमे)

58 T1 G read 58 after 55 K4 B Da Dn D2-3 transp 58 and 59 — a) D1 S (except G3) भुजंगा G3 संक्रुद्धो — b) K3 लिलिहाना, G2 लेलिह्याणा D2 विपोल्वणै, T1 G4 °ह्वणा — c) K1-4 Da Dn D1 6-8 समा(D1 सम)विशति, K5 D2 विशति मम, D2 T2 M2 मामाविशति, T1 G इमे त्रिशति, M5 ममापि शक्ति (for ममाविशन्ति) — After 58, T1 G read 60

59 G1-3 om 59 K4 B Da Dn D3-3 transp 58 and 59 D3 reads 59ab after 55 — a) T1 G4 °यन्येव K5 मे याणा, M3 मे वाणान् (for मे प्राणान्) — b) K2 इवोदिता, K5 इवाहवे, T G4 इवागता Ca cites आहिता — c) M1-3 5 °सकाशा — d) Da1 न मे (for नेमे)

60 K0 1 4 B2-4 D1 3 7 om (hapl) 60 T1 G read 60 after 56 B1 D5, om 60ab, read 60cd after 54 Ś1 (marg sec m) Da Dn D4 6 8 Cv transp 60ab and 60cd (Da1 Dn1 reading the st after 54 and Da2, after 55ab) — a) Ś1 तुदति, K2 भिद्यत, D8 (marg sec m) छिंदति, M भिंदति (for कृन्तन्ति) K5 D2 मर्माणि (for गात्राणि) T G एते (T1 G4 इमे) कृतति (T2 कृदति) गात्राणि — b) Cf B 12 139 89 Ś1 मागमामेघवारिव (sic), K2 मावमा सेगव यथा, K3 Da Dn D2 4 M2 माघमा (Da °गमा, Dn1 °गमा)से गवा इव; D6 8 (marg sec m) माघमा सेगवा (D8 orig मा च मां योगवा) इव ❀ Ca मागमा वृश्चिकी प्रोक्ता तदपत्यानि सेगवा । यथा मागमां वृश्चिकीं यथा तदपत्यानि मेगवा वृश्चिकीं मातर उदरस्यान्यपत्यानि पृष्ठ विदार्य बहिर्निर्गच्छन्ती कृन्तन्ति । ❀ — K3 5 D2 om 60cd — c) K2 इम, Cv त्यर्थ ❀ Cd अर्जुनस्य धव as in text — d) D8 न मे ❀ Cd अर्जुनस्य धव लस्य चन्द्रस्येति यावत् । वणन्ति शब्द कुर्वन्ति वणा सलिलानि तेषामिमे विकारा वाणा शरीराणि माघमासे शिशिरर्तु प्रथमभागे गवा सूर्यरश्मीना गायत्रीव गात्राणि शरीरावयवान् कृन्तन्ति छिन्दन्ति । अत्र चेद विवक्षितम् । यथा सूर्यरश्मीनां कारणभूताना कार्यरश्मिभिश्चन्द्ररश्मिभिकर्तनम् । कार्यत्व च रश्मीना सूर्यरश्मीनामेव चन्द्रे अनुप्रवेशात् । तथा द्रोणाद्यध्यापकद्वारेण ग्राहितैरस्त्कार्यभूतैरर्जुनबाणैरस्त्कार्यभूतैरस्मन्मर्मणा कारणभूतानां छेदनम् । अथ वा। वणन्ति शब्दान्कुर्वन्तीति वाणा पुत्रा । आसेगवौ[ वां ] कर्कटाना गात्रं कृन्तन्ति । माघ मघाभावो यथा भवन्ति[ति] । कर्कटाना मघामावास्त्रियैक्त्वात् । अर्जुनस्य तु युद्धेनाततायि वधस्य विहितत्वात् । Cv मावमा मेगवा स्वमातृभूता कर्कटीमिव । सेगवा कर्कटीसतति स्वमातृपृष्ठमेव निर्भिद्य जायत इति प्रसिद्धि ❀

61 G1-3 read 61 after 56 — a) G2 सर्वेपि च T2 मद् (for मे) a — b) D1 जगाधिप (for नराधिपा) — d) D1 एक, M5 वीर (for वीर) K5 गांजीव° — d) B1 जेतु, Da1 जिष्णु, T M2 विष्णु (T2 °ष्णु) (for जिष्णु) — After 61, D1 *repeats* (with v l) 39 — a) D1

62 Before 62, D6 ins सजय उवाच

C. 6 5634 B. 6 119 67 K 6 119 68

इति ब्रुवञ्शांतनवो दिधक्षुरिव पाण्डवम् ।
सविष्फुलिङ्गां दीप्ताग्रां शक्तिं चिक्षेप भारत ॥ ६२
तामस्य विशिखैश्छित्त्वा त्रिधा त्रिभिरपातयत् ।
पश्यतां कुरुवीराणां सर्वेषां तत्र भारत ॥ ६३
चर्माथादत्त गाङ्गेयो जातरूपपरिष्कृतम् ।
खड्गं चान्यतरं प्रेप्सुर्मृत्योरग्रे जयाय वा ॥ ६४
तस्य तच्छतधा चर्म व्यधमद्दंशितात्मनः ।
रथादनवरूढस्य तदद्भुतमिवाभवत् ॥ ६५
विनद्योच्चैः सिंह इव स्वान्यनीकान्यचोदयत् ।
अभिद्रवत गाङ्गेयं मा वोऽस्तु भयमण्वपि ॥ ६६
अथ ते तोमरैः प्रासैर्बाणौघैश्च समन्ततः ।
पट्टिशैश्च सनिस्त्रिंशैर्नानाप्रहरणैस्तथा ॥ ६७
वत्सदन्तैश्च भल्लैश्च तमेकमभिदुद्रुवुः ।
सिंहनादस्ततो घोरः पाण्डवानामजायत ॥ ६८
तथैव तव पुत्राश्च राजन्भीष्मजयैषिणः ।
तमेकमभ्यवर्तन्त सिंहनादांश्च नेदिरे ॥ ६९
तत्रासीत्तुमुलं युद्धं तावकानां परैः सह ।
दशमेऽहनि राजेन्द्र भीष्मार्जुनसमागमे ॥ ७०
आसीद्गाङ्ग इवावर्तो मुहूर्तमुदधेरिव ।
सैन्यानां युध्यमानानां निघ्नतामितरेतरम् ॥ ७१

---

इत्यब्रवीत्, D8 इति ब्रवन् — b ) K4 B2 4 Dn2 D4 7 8 पाढवान् ( for पाण्डवम् ) Da Dn1 D5 दिधक्ष्लिव पावक° — c ) Ś1 K0–3 5 D1–3 6 सविस्फुलिं ( K3 °ल्लिं )गा, T2 सस्फुलिंगा तु M1–3 5 तीक्ष्णाग्रा ( for दीप्ताग्रा ). K4 B D ( except D1–3 6 ) शक्तिं भीष्म° स पार्थाय — d ) K4 B D ( except D1–3 6 ) ततश् ( for शक्तिं )

63 a ) D1 सा तस्य ( for तामस्य ) K3 5 D2 3 6 निशितैश् ( for विशिखैश् ) Da Dn1 D1 छिन्ना ( for छित्त्वा ) — b ) Ś1 K0–3 D1 त्रिभिस्, Dn2 तथा, D8 शरैस् ( for त्रिधा ) Ś1 K0–2 D1 अताडयत् ( for अपात° ) — d ) K4 B2 4 Dn2 D4 7 8 तव (for तत्र)

64 a ) K3 5 Da Dn1 D1 2 5 8 चर्म चा( K3 5 वा )दत्त, T2 °मादत्त — b ) Some MSS °परिस्कृत — c ) K3 Da Dn D2 5 T2 M2 4 चान्यतरप्रेप्सुर् ( T2 °प्सु ), D1 Co अन्यतर प्रे°, D6 चाप्यतरप्रे°, G1–3 चाम्यतरप्रे° — d ) Ś1 अग्र ; K0–2 अग्र, D8 अर्थे, T1 आस्ये ( for अग्रे ) K3 5 D1–3 6 जयाय च, T2 जयोथ वा, G1 जयावहा Co cites जयाय ( as in text ) Ca as in text

65 a ) T2 स तच ( for तस्य तत् ) D1 भीष्मो, D2 3 T1 G4 वर्म, D6 ( *sup lin* as in text ) कर्म ( for चर्म ) — b ) K1 व्यधमा, K2 व्यदमद् ( for व्यधमद् ) K0 1 दसितात्मज° ( K0 °न° ), K3 D2 3 शसितात्मन°, K4 B1 2 4 Da Dn D4–8 सायकैस्तथा ( Da Dn1 D5 °दा ), B3 सायकोत्तमै, S सशिता त्मन — d ) K3 तदद्भ°

66 a ) Ś1 K0–2 D1 विनदत, K3 D2 विनद्य( D2 °द्यं )त, K5 विनाद्यत ( for विनद्योच्चै ). K0–2 D1 सिंहम् ( for सिंह ) K4 B Da Dn D4–8 ततो युधिष्ठिरो राजा, D3 धृष्टद्युम्नस्तत° क्रुद्ध°, T1 G स सिंहवद्विन द्योच्चै°, T2 विनद्योच्चै सिंहनाद — b ) K1 2 °कानि चोदयत्, K3 °कान्यचोदयन्; D1 6 °कान्यनोदयत्, D4 7 °कान्ययोज( D7 °ध )यन् — c ) K5 D1 2 अभ्य द्रव( D2 °व )त — d ) G3 मा च वो, M4 मा वोस्ति T1 G2 4 अद्य वै, T2 अन्वपि ( for अण्वपि )

67 a ) T2 बाणैर् ( for प्रासैर् ) — K3 5 D2 om. 67bc — b ) Ś1 K0–2 बाणैश्चैव ( for बाणौघैश्च ) — c ) K0 पट्टिसैश्च, S पट्टसैश्च K1 4 B D ( except D8, D2 om ) सु ( for स ) — d ) K3 5 D2 नाराचैश्च सुशासितै° ( K5 °सशतै°, D2 °सशितै° ), K4 B Da Dn D1 3–8 नाराचैश्च तथा शितै° ( B3 शिला शितै°; B4 Da1 D8 तथा सितै ), S नानाशस्त्रै( G3 नाशनास्त्रै )स्तथा शितै°

68 b ) G1 3 M2 तमेवम् B3 अभिविव्यधु° — c ) T2 सिंहनाद तथा घोष — d ) K4 B D ( except D1–3 6 ) अभूत्तदा ( for अजायत )

69 a ) S पुत्राणा ( for पुत्राश्च ). — b ) K4 B D ( except D1–3 6 ) नेदुर् ( for राजन् ) S °षिणा. — c ) K4 B D ( except D1–3 6 ) S °रक्षत ( for °वर्तन्त ) — d ) K5 सिंहनादश्च K4 B D ( except D1–3 6 ) चक्रिरे ( for नेदिरे ) S कुरव सनृपा रणे

70 a ) D3 5 6 तुमल K3. 5 D2 तत° समभवद्युद्ध

71 a ) Da1 D5 गौर, S घोर ( for गाङ्ग ) Ś1 K0 1 महावर्तो, B2 इवावार्तो, M2 इवावृत्तो ( for इवावर्तो ) — b ) T1 उदये नृप; M1–3 5 उदधेस्तदा.

अगम्यरूपा पृथिवी शोणिताक्ता तदाभवत् ।
समं च विषमं चैव न प्राज्ञायत किंचन ॥ ७२
योधानामयुतं हत्वा तस्मिन्स दशमेऽहनि ।
अतिष्ठदाहवे भीष्मो भिद्यमानेषु मर्मसु ॥ ७३
ततः सेनामुखे तस्मिन्स्थितः पार्थो धनंजयः ।
मध्येन कुरुसैन्यानां द्रावयामास वाहिनीम् ॥ ७४
वयं श्वेतहयाद्भीताः कुन्तीपुत्राद्धनंजयात् ।
पीड्यमानाः शितैः शस्त्रैः प्रद्रवाम महारणात् ॥ ७५
सौवीराः कितवाः प्राच्याः प्रतीच्योदीच्यमालवाः ।
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ॥ ७६
शाल्वाश्रयास्त्रिगर्ताश्च अम्बष्ठाः केकयैः सह ।
द्वादशैते जनपदाः शरार्ता व्रणपीडिताः ।
संग्रामे न जहुर्भीष्मं युध्यमानं किरीटिना ॥ ७७
ततस्तमेकं बहवः परिवार्य समन्ततः ।

C 6 5650
B 6 119 64
K 6 119 97

— c) D8 सेनाना D2 5 युद्ध°, S (except T2) निघ्न° (for युध्य°) — d) S युध्य(T2 हन्य)ताम् (for निघ्नताम्)

72 a) K4 B D (except D1-3) असौम्य° (for अगम्य°) — b) K3 शोणितोका K5 तरंगिणी, K4 5 B D (except D1) S [अ]भवत्तदा (by transp) — c) B4 सम तु (for समं च) M2 समश्च विषमश्चैव — d) Ko न प्राज्ञयत, K2 3 5 D2 5 S न प्रज्ञायत, Dn1 नाप्राज्ञायत

73 a) M यौधानाम् — b) K3 5 D2 M4 transp तस्मिन् and स D6 च (for स) K2 तस्मिन्दशममे इनि — c) D1 अतिष्ठाहवे, D2 °ष्ठताहवे

74 a) T1 G पार्थ (for तस्मिन्) — b) T1 G तस्मिन् (for पार्थो) K5 B D (except D1 5 6) धनुर्धर (for धनंजय) — c) D1 मध्ये च, T G M4 मध्ये तु (for मध्येन) D3 °सेनानां — After 74, S ins

479* तत्राद्भुतमपश्याम पाण्डवानां पराक्रमम् ।
द्रावयामासुरिषुभि सर्वान्भीष्मपदानुगान् ।
[(L 1) T2 G2 3 M5 अपश्याम ]

75 a) T2 भीतात् — b) K1 धनजय, Da1 धनवनात् — After $75^{ab}$, T2 G4 read lines 3–5 of 480* T1 G4 om (hapl) $75^{cd}$. — c) Ko-2 D1 छिद्य°, K3 5 D3 8 S (T1 G4 om.) भिद्य° (for पीड्य°) D3 सितैर् (for शितै) D3 6 T2 M1-3 बाणै, B2 अस्त्रै (for शस्त्रै) — d) K3 D2 प्राद्रवाम; K4 B Da Dn D3-8 T2 G1 M2 4 प्राद्रवाम, D1 अर्थमाना K3 D2 6 रणात्तदा, K4 B Da Dn D1 4 5 7 8 S (T1 G4 om) रणे तदा, D3 रणातत (for महारणात्) K5 प्रद्रुता महतो रणात्

76 = 6 102 $7^{abcd}$ $76^{ab}$ = 6 18 $13^{cd}$ — a) D2 सिंधवा (for कितवा) K1 प्राइया (sic) — b) Ś1 D3 °मानवा, K1 प्रतीशोदीच्य°, K3 D5 प्रती(D5 °ति)च्योदिच्य°, T2 प्रतीच्योदीच्य — T2 G1-3 (G1 3 om from the post half of line 4 up to $77^a$) M1 4 ins after $76^{ab}$ T1 G4 (both om. $75^{cd}$ and lines 1-2) ins after $75^{ab}$

480* पाण्डवै पञ्चभि सार्धं सात्यकेन च धन्विना ।
धृष्टद्युम्नमुखै सर्वै पाञ्चालैश्च समन्तत ।
भिद्यमाना शरैस्तीक्ष्णै सर्वे काश्चिपुरोगमै ।
द्रोणद्रौणिकृपै सार्धं सर्वे शल्यकृपादय ।
तावका समरे राजञ्जहुर्भीष्म महामृधे ।  [5]

[(L 1) G2 सात्विकेन, M1 4 सत्यकेन — (L 3) M1 4 सर्वे (for सर्वे) G1 °पुरोगमा — (L 4) T2 G1 द्रोणद्रोणि-, G3 द्रोणद्रौणिस् G1-3 -स्त्रिगर्ताश्च (for -कृपै सार्ध) — (L 5) M1 महारणे (for महामृधे) ]

— After 480*, T2 G2 M1, 4 *repeat* $76^{ab}$ $76^{cd}$ = 6 18 $12^{cd}$ — c) D5 अभिषाहा; T2 M2 अभीषहा K3 सूरसेना — d) = 6 47 $14^b$ Ś1 Ko D4 7 शिवयो, D2 शवयो K4 B (except B1) Dn2 D1 4 6-8 वशातय

77 G1 3 om $77^a$ (cf v l 76) — a) Ko 2 सा(Ko सा)ल्वाश्रयास्, K5 शाल्वमेयस्, D2 T2 शा(T2 सा)ल्वेयाश्च, D3 शाल्वास्तत्रास्, T1 G4 शाल्वा शूरास्, G2 M साल्वाश्रयास् (for शाल्वा°) B4 शाल्वास्त्रिगर्ताश्चावष्टा — b) B4 शकाश्च, Da2 Dn1 आंवष्टा K3 B4 D (except D1) कैकयै°, G1 3 मालवै — c) K4 B Da Dn D4 5 7 8 सर्वे ए(B1 सर्वत्र)ते महात्मान — d) D3 व्रणतापिता, T G2 4 M2 प्राणपीडिता — e) T2 समरे (for संग्रामे) K3 5 D1-3 6 प्राजहुर्, B1 Da Dn1 D5 T2 G1 3 M Ca प्रजहुर्, T1 G2 4 विजहुर् (for न जहुर्) — f) K3 5 D2 3 6 T1 G4 व(K5 या)ध्यमाना, D1 G1-3 युध्यमाना

78 a) K3 तमेव — b) Ś1 Ko-2 परिवार्यं, D2 परिपाल्य, S परि(G3 °री)ता(T2 °त)प्य (for परिकाल्य) T1 G4 कुरुश्रेष्ठ (for कुरून्सर्वान्) — d)

C. 6 5641
B. 6 119 84
K. 6 119 87

परिकाल्य कुरून्सर्वाञ्शरवर्षैरवाकिरन् ॥ ७८
निपातयत गृह्णीत विध्यताथ च कर्षत ।
इत्यासीत्तुमुलः शब्दो राजन्भीष्मरथं प्रति ॥ ७९
अभिहत्य शरौघैस्तं शतशोऽथ सहस्रशः ।
न तस्यासीदनिर्भिन्नं गात्रेष्वङ्गुलमात्रकम् ॥ ८०
एवं विभो तव पिता शरैर्विशकलीकृतः ।
शिताग्रैः फल्गुनेनाजौ प्राक्शिराः प्रापतद्रथात् ।
किंचिच्छेषे दिनकरे पुत्राणां तव पश्यताम् ॥ ८१
हा हेति दिवि देवानां पार्थिवानां च सर्वशः ।
पतमाने रथाद्भीष्मे बभूव सुमहान्स्वनः ॥ ८२
तं पतन्तमभिप्रेक्ष्य महात्मानं पितामहम् ।
सह भीष्मेण सर्वेषां प्रापतन्हृदयानि नः ॥ ८३
स पपात महाबाहुर्वसुधामनुनादयन् ।
इन्द्रध्वज इवोत्सृष्टः केतुः सर्वधनुष्मताम् ।
धरणीं नास्पृशच्चापि शरसंघैः समाचितः ॥ ८४
शरतल्पे महेष्वासं शयानं पुरुषर्षभम् ।
रथात्प्रपतितं चैनं दिव्यो भावः समाविशत् ॥ ८५
अभ्यवर्षत पर्जन्यः प्राकम्पत च मेदिनी ।
पतन्स ददृशे चापि खर्वितं च दिवाकरम् ॥ ८६
संज्ञां चैवालभद्वीरः कालं संचिन्त्य भारत ।

---

D8 °किरत् T2 पांडवेयास्त्वयोधयन्

79 $^{a}$) K2 निपातयद्यद् (for निपातयत) — $^{b}$) K3. 5 D2 युु( K5 D2 व )ध्यताभिनिकृंतत, K4 B Da Dn D4–8 युु( B1 Da Dn1 D5 वि )ध्यध्वमवकृतत, D1 बध्यतैवावकृंतत (corrupt), D3 T1 G युु( D3 वि )ध्यताव ( G2 °वि )चकर्तत ( G3 °तं च ); T2 विविध्यत च कृंतत, M1–3 5 वध्यत ह्यप( M2 °व )कृंतत, M4 विध्यता थावकृंतत — $^{c}$) Some MSS तुमल°

80 $^{a}$) D1 च (for स) K1 अभिहत्य शरै राजन्, K2 4 B Da Dn D4 5 7 8 निहत्य समरे राजन्, K3 5 D2 विभिन्नस्य शरैर्घोरै, D3 विभिन्न शरसंघैश्च, D6 विभिन्न स शरौघैश्च, S शरौघैरभिवृ( T2 °पि वि )ष्टस्य — D4 om $80^{c}$–$81^{b}$ — $^{c}$) K3 तत्र (for तस्य) D1 अनाभिन्न, S अनिर्भिण्ण — $^{d}$) K3 4 B D ( D4 om. ) T1 G M गात्रे ष्व( D1. 3 °त्र ष्य, D2 °त्रसं )गुल- मतर ( D1 °मण्वपि ), K5 गात्र ह्यगुलमात्रत°, T2 गात्रे- ष्वतरमंगुलिं Cc cites अंतर

81 D4 om $81^{ab}$ ( cf. v l. 80 ) — $^{a}$) Ś1 D3 एवं विभोस्, K0–2 एव वै भोस्, K4 B Da Dn D5–8 एवमूतस्, D2 एवविधस्, M1 2 5 एवं हि भो — $^{b}$) D2 च ( for वि ) — $^{c}$) D8 सिताग्रै° K2–4 B D ( D4 before corr ) G2 फाल्गुनेनाजौ, M5 फल्गु नेराजौ — $^{d}$) K5 प्राक्शरान्, D2 प्राक्शरा Da1 D2 प्रपतद् — D5 om $81^{c}$–$82^{b}$. — $^{e}$) Ś1 K0 1 D1 किंचिच्छिष्टे, K2 °च्छेष्टे (sic), Cc °च्छेष

82 D5 om $82^{ab}$ ( cf v l. 81 ) — $^{b}$) D3 भुवि राज्ञां ( for पार्थिवाना ) B4 Dn2 D4 6–8 भारत ( for सर्वशः ) — $^{c}$) Ś1 K1. 2 तदा ( for रथाद् ) — $^{d}$) K2 च, G1 स ( for सु ) K3 4 B D ( except Dn2 D1 3 ) T1 G4 सुमहास्वन

83 $^{a}$) K4 B D ( except D1–3 ) M2 सपवतम् — $^{b}$) T1 G2 4 भारवाना, T2 G1 3 M भरताना ( for महात्मानं ) — Da Dn1 D5 om $83^{cd}$ — $^{d}$) D3 च ( for न ) D2 M2 प्रापतद्धृदयानि व° ( M2 °निल° ).

84 $^{b}$) B4 Dn2 D4–8 वसुधा सम( B4 Dn2 सप्र ) कपयन् — $^{d}$) D1 देह°, Cc केतु° ( as in text ) K5 D2 °महीभृता ( for °धनुष्मताम् ) — $^{e}$) K1 धरणी, D3 स भूमिं K2 5 नास्पृश( K5 °श )श्चापि, K4 B Da Dn D4 5 7 8 न स ( B1 तु न ) पस्पर्श- — $^{f}$) K3 समाहित°, K5 Dn2 D4 6–8 °वृत°, D3 °र्चित D1 शरसघा° समंतत°

85 $^{a}$) Ś1 K0–2 महात्मान, D3 S ( except T2 ) महेष्वास° — $^{b}$) D2 S शयान° ( T2 °न ) पुरुषर्षभ° ( T2 °भ ) — $^{c}$) Da Dn1 D5 निपतित, D2 प्रपतिन Ś1 K0–2 5 चैव, D2 सर्वं; S भीष्म ( for चैन ) — $^{d}$) K2 दिव्याभाव°, D1 दिव्या भावा, Cc दिव्यो भाव ( as in text ) D3 समादिशत्, G2 स्वमाविशत्, M1 3 5 समस्पृशत्

86 $^{a}$) K4 5 B Dn2 D2–4 6 7 S ( except G2 ) अभ्यवर्षच्च — $^{b}$) K5 D2 T2 प्रकपत. K3 स प्राकंपत मेदिनी — $^{c}$) K3 Da1 D3 पतत्, D1 पुतत् ( for पतन् ) K5 प्रपतन् ( for पतन्स ) K3 Dn1 स, Da1 च ( for स ) D3 वापि ( for चापि ) K2 यतन- सद्दशे चापि (sic), D2 पतन्दृष्टवाश्चापि — $^{d}$) K0 खचित च (sic), K3–5 B D S दक्षिणेन ( for खर्वितं च )

87 $^{a}$) K2 सज्ञा K4 B Da Dn D1 4–8 M चो-

अन्तरिक्षे च शुश्राव दिव्यां वाचं समन्ततः ॥ ८७
कथं महात्मा गाङ्गेयः सर्वशस्त्रभृतां वरः ।
कालं कर्ता नरव्याघ्रः संप्राप्ते दक्षिणायने ॥ ८८
स्थितोऽस्मीति च गाङ्गेयस्तच्छ्रुत्वा वाक्यमब्रवीत् ।
धारयामास च प्राणान्पतितोऽपि हि भूतले ।
उत्तरायणमन्विच्छन्भीष्मः कुरुपितामहः ॥ ८९
तस्य तन्मतमाज्ञाय गङ्गा हिमवतः सुता ।
महर्षीन्हंसरूपेण प्रेषयामास तत्र वै ॥ ९०
ततः संपातिनो हंसास्त्वरिता मानसौकसः ।
आजग्मुः सहिता द्रष्टुं भीष्मं कुरुपितामहम् ।
यत्र शेते नरश्रेष्ठः शरतल्पे पितामहः ॥ ९१

ते तु भीष्मं समासाद्य मुनयो हंसरूपिणः ।
अपश्यञ्शरतल्पस्थं भीष्मं कुरुपितामहम् ॥ ९२
ते तं दृष्ट्वा महात्मानं कृत्वा चापि प्रदक्षिणम् ।
गाङ्गेयं भरतश्रेष्ठं दक्षिणेन च भास्करम् ॥ ९३
इतरेतरमामन्त्र्य प्राहुस्तत्र मनीषिणः ।
भीष्म एव महात्मा सन्संस्थाता दक्षिणायने ॥ ९४
इत्युक्त्वा प्रस्थितान्हंसान्दक्षिणामभितो दिशम् ।
संप्रेक्ष्य वै महाबुद्धिश्चिन्तयित्वा च भारत ॥ ९५
तानब्रवीच्छांतनवो नाहं गन्ता कथंचन ।
दक्षिणावृत्त आदित्ये एतन्मे मनसि स्थितम् ॥ ९६
गमिष्यामि स्वकं स्थानमासीद्यन्मे पुरातनम् ।

C. 6 5971
B 6 119 105
K 6 119 108

---

पालभद् D2 सज्ञां चैवाप्य वल्वत् —$^{b}$) M4 काले, Cc कालं (as in text) K2 मचिरय —$^{c}$) D5 अंतरीक्षे —$^{d}$) K3 B1.3 D दिव्या वाच K4 B2 4 दिव्यदुंदुभिनिस्वन, S (except T2) दिव्या (G1.3 देवा) ना च शुभा गिर (M शुभ वच)

88 $^{a}$) D1 पश्यति (for महात्मा) —$^{c}$) D1 अलं, T G काल-; Ca.c काल (as in text) K3 T2 नर- व्याघ्र, M1-3 5 महाप्राज्ञ —$^{d}$) T1 G4 पतितो (for संप्राप्ते) Cv मस्थितो दक्षिणायने

89 $^{a}$) D1 कृष्ण ससर (for स्थितोऽस्मीति च) T2 गांगेय (for °यस्) —$^{c}$) S धारयिष्याम्यहं प्राणान् —$^{d}$) K3.4 B Da Dn D2-8 S महीतले, D1 स भूतले (for हि भूतले) D2 पतितो धरणीतले —$^{e}$) D2 5 उत्तरायनम् Da1 Dn1 अन्विच्छद् —$^{f}$) T1 G सु- गतिप्रतिकांक्षया

90 $^{a}$) G2 आदाय (for आज्ञाय)

91 $^{a}$) K3 तत्र, K4 B1-3 तेय, Da Dn1 ते च, D5 तेन (for तत) D1 समागता, D3 T2 G1 3 M सपतिता; D6 संपातितो, T1 G4 त प्रति ते, G2 स पतित, Cc सपातिनो (as in text) —$^{b}$) S त्वर- माणा महौजस (G1 3 °णा समंतत) —$^{c}$) Ko स- हितान्, D2 T1 G4 सहसा (for सहिता) Ko प्रष्टु, K2 पृष्ट; G3 दृष्टिं, M1 3-5 तत्र, M2 पुत्रं (for द्रष्टुं) — K2 om. 91$^{d}$–93$^{c}$ —$^{d}$) M1-3 5 द्रष्टुं (for भीष्मं) —$^{e}$) K5 तत्र K3 5 D2 3 कुरुश्रेष्ठ (K3 °ष्ठ), B1 नरव्याघ्र —$^{f}$) K5 D2 भीष्म कुरुपितामह (= 89$^{f}$)

92 K2 om 92 cf. v l 91) —$^{a}$) D2 तत्र (for ते तु) Ś1 Ko 1 D3 समागम्य, G1 समासाद्य —$^{b}$) K4 B D (except D2 3) ऋषयो (for मुनयो) —$^{c}$) K3 अपश्यत्, Dn2 T2 अपश्य —$^{d}$) = 91$^{d}$ K3.4 B D (except D1-3) °कुलोद्वह (for °पितामहम्)

93 K2 om 93$^{abc}$ (cf v l 91) —$^{a}$) Ś1 Ko 1 T2 तु, T1 तुं (sic) (for तं) D3 महाबुद्धिं, T2 °स्मान —$^{b}$) Ś1 कृत्वा चाति-, Ko 1 °त्वा चाभि; D3 कृत्वा चैव, S परिवृत्य —$^{d}$) D1 दिवाकरे (for च भास्करम्)

94 $^{b}$) G1 2 (sup lin) 3 यास्यामेति (for प्राहु स्तत्र) —$^{c}$) K3 4 B D (except D1-3) कथ, K3 एष (for एव) K3 5 D1 2 [अ]सौ; D3 वै (for सन्) S अयं भीष्मो महाबुद्धि (T2 °बाहु) —$^{d}$) Ko सस्थिता; K3 सस्थातो; S सस्थितो, Cc °स्थाता (as in text)

95 D1 reads 95$^{ab}$ after 100 —$^{a}$) K1 प्रास्थि- ता, K4 B D (except D2 3 6) प्रस्थिता, S प्राद्रवन् K1 4 B D (except D2 3 6) S हसा (for हंसान्) —$^{b}$) D4 दक्षिणामिमतो दिश —$^{c}$) D2 स प्रेक्ष्य M1-3.5 च (for वै) T2 °बुद्धि Ś1 Ko-2 सप्रेक्ष्यैव च यर्हाणि —$^{d}$) D6 महारथ, T2 तु भारत

96 M om 96$^{ab}$ —$^{a}$) T1 G ततोब्र° (for तानब्र°) —$^{b}$) T1 G4 ह्यास्ये (for गन्ता) —$^{c}$) Ś1 K1 2 Da1 D2 दक्षिणावृत, K3 5 D2 °श्रित (K5 °तम्), Dn2 D4 6 8 G1 3 M1.2 5 °वर्ते, D1 °यन (for °वृत्त) Ko D2 T1 G4 आदित्य, K3 आदित्यो; K5 आश्रित्य

उदगावृत्त आदित्ये हंसाः सत्यं ब्रवीमि वः ॥ ९७
धारयिष्याम्यहं प्राणानुत्तरायणकाङ्क्षया ।
ऐश्वर्यभूतः प्राणानामुत्सर्गे नियतो ह्यहम् ।
तस्मात्प्राणान्धारयिष्ये मुमूर्षुरुदगायने ॥ ९८
यश्च दत्तो वरो मह्यं पित्रा तेन महात्मना ।
छन्दतो मृत्युरित्येवं तस्य चास्तु वरस्तथा ॥ ९९
धारयिष्ये ततः प्राणानुत्सर्गे नियते सति ।
इत्युक्त्वा तांस्तदा हंसानशेत शरतल्पगः ॥ १००
एवं कुरूणां पतिते शृङ्गे भीष्मे महौजसि ।
पाण्डवाः सृञ्जयाश्चैव सिंहनादं प्रचक्रिरे ॥ १०१
तस्मिन्हते महासत्त्वे भरतानाममध्यमे ।
न किंचित्प्रत्यपद्यन्त पुत्रास्ते भरतर्षभ ।
संमोहश्चैव तुमुलः कुरूणामभवत्तदा ॥ १०२
नृपा दुर्योधनमुखा निःश्वस्य रुरुदुस्ततः ।
विषादाच्च चिरं कालमतिष्ठन्विगतेन्द्रियाः ॥ १०३
दध्युश्चैव महाराज न युद्धे दधिरे मनः ।
ऊरुग्राहगृहीताश्च नाभ्यधावन्त पाण्डवान् ॥ १०४
अवध्ये शंतनोः पुत्रे हते भीष्मे महौजसि ।

— Ś1 K8 om (hapl) 96^d–97^a — ^d) D1 एतन्मे नैव रोचते

97 Ś1 K8 om 97^abc (cf v l 96) — ^b) K5 आसीद्यत्र, D2 (m as in text) आसीद्यात्र, D8 (before corr as in text) आसाद्यन्मे — ^c) K1 उदयावृत, K4 B1–3 Dn2 D4 6–8 उदगायन, D1 °दित्य, D2 8 °वृत, T2 उत्तरावृत्त, G1 3 उदगावर्ते T2 आदित्यो — ^d) K1 हस°, M1–3 5 हंसान् K2 सान्य (for सत्य) S (except T2) इति वचोब्रवीत् (for सत्य ब्रवीमि व°)

98 ^a) T2 प्राणानि — K8 om (hapl) 98^b–100^a — ^b) B2 °काम्यया — ^c) Ś1 °भूता, all comm °भूत (as in text) K5 ऐश्वर्यप्राणभूताना, S प्राणाना च समुत्सर्गे (M1 3 4 °र्गे). — ^d) Ś1 K2 4 B D (except D1–3) उत्सर्गो K4 B D4 6–8 हि यतो, K5 D2 नियमे (for नियतो) K4 B Da Dn D8–3 मम, K5 D2 तथा (for ह्यहम्) S ऐश्वर्यं नियत मम — T2 M om 98^cf — ^e) D8 6 इत्थ (for तस्मात्) — ^f) K5 Dn1 D2 °यन, G1–3 उदगा(G3 °या) यनात्

99 K8 om 99 (cf v l 98). — ^a) G2 यं च G3 वर, M5 वचो (for वरो) — ^cd) K5 छादतो, Ce छन्दतो (as in text) Ś1 इत्येव B1 4 Da Dn1 D1–3. 5 वचस् (for वरस्) B1 तदा S छदतस्ते भवेन्मृत्युरिति तत्सत्यमस्तु मे (T2 M1 [sup lin] 2 3 5 ते, G1 3 वै)

100 K8 om 100^a (cf v l 98) K1 om 100 T2 M om 100^ab — ^a) D1 मोच° (for धार°). Cc तत° (as in text) K5 D2 7 धारयिष्याम्यह (D7 °त°) प्राणान् — ^b) D2 6 नियमे (for नियते) K5 D2 तथा (for सति) — ^c) Da1 त (for तास्) K8 5 D2 3 6 तथा (for तदा) S इत्युक्तास्ते गता (G1 वदा) हसा — ^d) K2 4 5 B D (except D1 3) स शेते (for अशेत) K2 शरस्वल्पग, Da1 °तल्पगान् — After 100, D1 reads 95^ab

101 D1 om from 101^b up to 6 115 10^e — ^c) D3 सृजयैश्चैव. — ^d) K8 5 D2. 8 6 सिंहनादान्.

102 D1 om 102 (cf v l 101). — ^a) S (except T2) लोककाते (for महासत्त्वे) — ^b) Cf. 6. 115 14^b, 42^b K8 D2 3 6 T1 G2 4 भारताना K2 च मध्यपे, K4 5 B Da Dn D2 4–8 T1 G पितामहे, D3 मवधपे, M1 3 अमद्यचे, M2 अमद्यमे; M4 5 अमध्यपे (for अमध्यमे) — ^c) K2 कश्चित् (for किंचित्) Ś1 प्रतिपद्यत, D4 प्रत्याविंद्यत, D5 तमपद्यत — ^d) B1 सुतास्ते T1 G पुत्रास्तव विशा पते — ^e) K2 स मोहश्, G2 समोह, M3. 5 समोदश् Ś1 Ko–2 चापि (for चैव) G1 3 तत समोहनं चैव — ^f) G3 सभ° (for अभ°)

103 D1 om. 103 (cf. v l 101) — ^a) K4 B D (except D2 3 6, D1 om) कृप (for नृपा) — ^b) Some MSS निश्वस्य Ko रुरुधुस् (for °दुस्) M2 तदा. — ^c) D5 विपादाचरित कालम् — ^d) D2 G3 अतिष्ठद्, M2 व्यतिष्ठद् D3 अतिष्ठत गतेंद्रिया°, T2 तिष्ठन्विगलितेंद्रिया

104 D1 om 104 (cf v l 101) T2 om 104–105 — ^a) Da D5 महातेजा (for °राज) S (T2 om) दीर्घं च काल (G3 दिष्ट च काल, M1–3 5 दीर्घकाल च) ध्यायंतो — ^b) K5 पक्षे (for युद्धे) K5 प्रदधिरे (hypermetric), S (T2 om) दध्रिरे — ^c) K8 Da1 Dn D2 6–3 Cd उरु(D2 रुज°, D6 कुरु) ग्राह, S (T2 om) ऊरुस्तम, D3 ऊरुग्राहा — ^d) B1 Da D5 नाभ्यवर्तत B1 सयुगे

अभावः सुमहान्राजन्कुरूनागादतन्द्रितः ॥ १०५
हतप्रवीराश्च वयं निकृत्ताश्च शितैः शरैः ।
कर्तव्यं नाभिजानीमो निर्जिताः सव्यसाचिना ॥ १०६
पाण्डवास्तु जयं लब्ध्वा परत्र च परां गतिम् ।
सर्वे दध्मुर्महाशङ्खाञ्शूराः परिघबाहवः ।
सोमकाश्च सपञ्चालाः प्राहृष्यन्त जनेश्वर ॥ १०७
ततस्तूर्यसहस्रेषु नदत्सु सुमहाबलः ।
आस्फोटयामास भृशं भीमसेनो ननर्त च ॥ १०८
सेनयोरुभयोश्चापि गाङ्गेये विनिपातिते ।
संन्यस्य वीराः शस्त्राणि प्राध्यायन्त समन्ततः ॥ १०९
प्राक्रोशन्प्रापतंश्चान्ये जग्मुर्मोहं तथापरे ।
क्षत्रं चान्येऽभ्यनिन्दन्त भीष्मं चैकेऽभ्यपूजयन् ११०
ऋषयः पितरश्चैव प्रशशंसुर्महाव्रतम् ।
भरतानां च ये पूर्वे ते चैनं प्रशशंसिरे ॥ १११
महोपनिषदं चैव योगमास्थाय वीर्यवान् ।
जपञ्शांतनवो धीमान्कालाकाङ्क्षी स्थितोऽभवत् ११२ C. 6 5388 B 6 119 122 K 6 119 125

इति श्रीमहाभारते भीष्मपर्वणि चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

---

105 D1 T2 om 105 (cf v l 101, 104) — [a]) K4 B D (except D2 6, D1 om) शातनो (for श°) — After 105[ab], T1 G ins

481* दुःखार्ताम्नि तदा राजन्कुरूणां पतयोऽभवन् ।

— [c]) Ś1 अभाव, T1 G4 विमोह, G1 3 अभवत् K3-5 B D (except D3, D1 om) S (T2 om) सहसा (for सुमहान्) — [d]) K3 4 B D (D1 om) कुरुराजस्य (K3 D2 3 कुरूनागाद) तर्कित (Dn1 तर्कयत्), S (T2 om) कुरूणामभवत्त(G1 °णामभवन्न, G3 °णां समभवत्त)दा Cc cites तर्कित, Cd अतर्कित

106 D1 om 106 (cf v l 101) — [a]) K1 2 4 B2-4 D (except D2 3, D1 om) तु (for च) S विश्रान्ता (for च वय) — [b]) K3 Dn1 D3 निर्कृताश्च S निशि(G3 °कृ)तै, D6 च मितै (for च शितै) K5 शनै शनै — [c]) K2 नाभ्यजानीमो, D5 नाभिजानानि, G1 3 °जानतो — [d]) T2 निकृता (for निर्जिता)

107 D1 om 107 (cf v l 101) — [a]) K4 B Dn2 D4-8 M1-3 5 पाडवाश्च, T2 °वास्तु K1 जये — [b]) Cc परां गतिम् (as in text) S प्रहृष्टमनसोभवन् (M1 *inf lin* °त्), Cd परत्र च परा गति — [c]) Ś1 महाशस्रा, Da Dn1 D3 5 S (except G1) मुदा शस्त्रान् — [d]) Ś1 K1 2 हृ(K1 दृ)ष्टा (for शूरा) — [e]) D3 सोमकांश्च K0-3 5 D (D1 om) S स पाचाला — [f]) K0 2 D2 T G4 M1 5 प्रहृष्यत (D2 °ते), K1 प्रादृष्यत K3 D2 G3 जनेश्वरा, Dn1 °श्वर

108 D1 om 108 (cf v l 101) — [a]) B1 °सहस्रे च — [b]) K0 2 B1 3 D6 नदत्सु च, K4 B2 Dn2 D4 7 8 नदत्सु स, S प्रगदत्सु (T2 °द सु) — [c]) D3 स्फोटयामास च भृश — [d]) K4 B2 4 Dn D4 6-8 S ननाद, B1 3 Da D3 5 ननर्द (for ननर्त)

109 D1 om 109 (cf v l 101) — [a]) D2 चैव, D3 राजन्, S मध्ये (for चापि) — [b]) K2 D2 च निपातिते, K4 B Da Dn D4 6 7 8 निहते (D6 °तो) विभो (B2 युधि, Dn विभौ, D4 सति) — [c]) K3 धीरा (for वीरा) — [d]) K3 प्राध्मायत, T1 G2 4 M1-3 5 प्रधावत, T2 G1 3 M1 (*inf lin*) प्रध्यायत (G3 °त), M4 प्राध्यायत

110 D1 om 110 (cf v l 101) — [a]) K2 D4 6 आक्रोशन् K3 5 Da Dn1 D2 3.5 प्रारुदंश्चान्ये (D3 °श्चैव), K4 B Dn2 D4 6-8 प्राद्रवश्चान्ये, T G M4 विप्रमूढाश्च, M1-3 5 च विमूढाश्च — [b]) K0 1 होमं (sic), G3 मोहात् T1 G4 तदापरे — T2 om (hapl) 110[c]-111[d] — [c]) K1 वत्र, K2 छत्र, K5 क्षात्रैश्च, D2 क्षात्र K5 विनिंदत, D2 विनदत, D3 व्यनिंदत, D6 [ऽ]भ्यनंदत S (T2 om) क्षुद्रा(G3 °द्रा)श्चैके विनिंदति (M1 [*sup lin*] 2 3 5 °तो) — [d]) K0 चैको, K3-5 B D (D1 om) चान्ये (for चैके) G1 3 ह्यपूज (for ऽभ्यपूज)

111 D1 T2 om 111 (cf v l 101, 110) — [b]) K3 D3 प्रशससुर्, D2 प्रशसन्सु — [c]) K3 D2 T1 G2 4 M2 भारतानां D6 त्रयो, M2 तु ये (for च ये) K2 D3 पूर्वं (for पूर्वे) — [d]) K1 ते चैव, T1 G2 4 तथै(G2 °वै)व, G1 M1 3-5 ते चैव

112 D1 om 112 (cf v l 101) — [a]) B1 3 अथोपनिषद, D2 महौप°, T2 M4 सांगोप, M2 महोपनिषदश्, Cd महोपनिषद (as in text) K3 5 D2 3 चापि (for चैव) — [c]) K2 जल्प, M1 3 5 स्वपन्;

# ११५

C. 6 5569 B 6 120 1 K 6 120 1

धृतराष्ट्र उवाच ।
कथमासंस्तदा योधा हीना भीष्मेण संजय ।
बलिना देवकल्पेन गुर्वर्थे ब्रह्मचारिणा ॥ १
तदैव निहतान्मन्ये कुरूनन्यांश्च पार्थिवान् ।
न प्राहरद्यदा भीष्मो घृणित्वाद्द्रुपदात्मजे ॥ २
ततो दुःखतरं मन्ये किमन्यत्प्रभविष्यति ।
यदद्य पितरं श्रुत्वा निहतं मम दुर्मतेः ॥ ३
अश्मसारमयं नूनं हृदयं मम संजय ।
श्रुत्वा विनिहतं भीष्मं शतधा यन्न दीर्यते ॥ ४
पुनः पुनर्न मृष्यामि हतं देवव्रतं रणे ।
न हतो जामदग्न्येन दिव्यैरस्त्रैः स यः पुरा ॥ ५
यदद्य निहतेनाजौ भीष्मेण जयमिच्छता ।

M4 शिश्ये, Co जपन् (as in text) K8 S भीष्म (for धीमान्) — d) Da1 D5 कालाकांक्षि, T G4 कालकांक्षी D6 स्थिरो, T1 G4 ततो M वसूनामष्टमो वसु

Colophon om in D1 — *Sub-parvan* Omitting sub-parvan name, K0-2 mention only दशमयुद्धदिवस, K8 5 T2 दशमेहनि, B8 दशमेह्नि भीष्मनिपातन, D2 दशमे, D6 दशमदिवसयुद्ध, M4 दशमेह्निके — *Adhy name* D6 भीष्मपतन, T2 G1-3 (G2 with prefixed श्री) M1-3 5 भीष्मनि(T2 M2 om. नि)पात — *Adhy no* (figures, words or both) K6 Dn2 113, Da2 (sec m) 77, D6 114 (as in text), T1 G 115, T2 M1 2 116, M3 4 117, M5 118 — *Śloka no* Dn2 121, D6 120

## 115

1 D1 om 1–10c (cf v l 6 114 101) — a) Ś1 कथमास्तस्तदा, K8 °मासस्ततो, T2 G1 2 °मास स्तथा M1. 3–5 यौधा — b) T2 विना भीष्मेण, G4 भीष्मेण सह (for हीना भीष्मेण) K8 D2 सयुगे K5 हीना भीष्मे महाबले — d) S कौमारब्रह्मचारिणा

2 D1 om 2 (cf. v l 1) — a) G2 M1 3 5 तदेव, M4 तथैव (for तदैव) — b) K4 B Da Dn D4–8 पाडवै° (for पार्थिवान्) — c) K5 D2 नाप्राहरन्, D5 T2 न प्रहार (for न प्राहरद्) T1 G2 4 यथा, G1 3 तदा (for यदा) — d) K5 घृणत्वाद्, T2 G4 M2 5 घृणी च, G1–3 घृणीवान् (for घृणित्वाद्) K4 B Da Dn D4–8 द्रुपदात्मज

3 D1 om 3 (cf v l 1) — a) Ś1 क्षत्रो (sic), K0 2 5 D2 क्षतो, K3 D3 S हतो (T2 हृद) (for ततो) Da1 ततो दु खेतर मन्य (sic) — cd) K2 यद्यद्य, K3 5 क्षद्येह, K4 B1–3 Da Dn D4–8 अद्याह, B4 यदह; D2 अद्य त, D3 यथेह, S अद्यैव (T2 M4 अद्य यत्) (for यदद्य) T1 G transp पितर and निहतं K4 B D (except D2 3, D1 om) स सुदुर्मति (for मम दुर्मते)

4 Cf 6 15 53 D1 om 4 (cf v l 1) — b) K3 5 D2 हृदय सुदृढ मम (D2 मत) — Ś1 K0-2 read 4cd after 5 — c) Ś1 K0-2 5 त, G3 [अ]पि (for वि) — d) G3 शततो (for °धा) K2 न च (for यन्न) G1 दीर्यत (for °ते)

5 D1 om 5 (cf v l 1) K3–5 B D (D1 om) T2 transp 5 and 6 — a) Ś1 K0 1 हृष्यामि, B4 मृष्याम (for मृष्यामि) — b) B4 इति (for हत) — c) G1 3 अहतो (for न हतो) — d) K2 दिव्यौस्त्रै (sic), T1 G4 दिव्यै शस्त्रै (for दिव्यैरस्त्रै) K2 4 B Da Dn D4–8 क्षय, D3 M4 च य°, T1 G तु य°, T2 स यत्, M2 स्वक (for स य°) — After 5, Ś1 K0-2 read 4cd, while K4 B Da Dn D4–8 ins

482* स हतो द्रौपदेयेन पाञ्चाल्येन शिखण्डिना ।

6 D1 M om 6 (for D1, cf v l 1) K3–5 B D (D1 om) T2 transp 5 and 6 — a) K4 B Da2 Dn2 D4 6–8 यदन्यन् (Da2 °न्य) (for यदद्य) G2 निहतान् (for निहतेन) K1 यदद्य निहतेजानौ (by metathesis), G1 3 स त्वद्य निहतश्चाजौ — b) G1 3 भीष्मस्तु (for भीष्मेण) — c) K3–5 B D (D1 om) T2 कुरु° (for नर°) — d) D5 तस्मै (for तन्मे) K4 B D (except D2 3, D1 om) सुव्रत (for संजय)

चेष्टितं नरसिंहेन तन्मे कथय संजय ॥ ६

संजय उवाच ।

सायाह्ने न्यपतद्भूमौ धार्तराष्ट्रान्विषादयन् ।
पाञ्चालानां ददद्धर्षं कुरुवृद्धः पितामहः ॥ ७
स शेते शरतल्पस्थो मेदिनीमस्पृशंस्तदा ।
भीष्मो रथात्प्रपतितः प्रच्युतो धरणीतले ॥ ८
हा हेति तुमुलः शब्दो भूताना समपद्यत ।
सीमावृक्षे निपतिते कुरूणा समितिक्षये ॥ ९
उभयोः सेनयो राजन्क्षत्रियान्भयमाविशत् ।
भीष्मं शांतनवं दृष्ट्वा विशीर्णकवचध्वजम् ।
कुरवः पर्यवर्तन्त पाण्डवाश्च विशां पते ॥ १०
खं तमोवृतमासीच्च नासीद्भानुमतः प्रभा ।
ररास पृथिवी चैव भीष्मे शांतनवे हते ॥ ११
अयं ब्रह्मविदां श्रेष्ठो अयं ब्रह्मविदां गतिः ।
इत्यभाषन्त भूतानि शयानं भरतर्षभम् ॥ १२
अयं पितरमाज्ञाय कामार्तं शंतनुं पुरा ।
ऊर्ध्वरेतसमात्मानं चकार पुरुषर्षभः ॥ १३
इति स्म शरतल्पस्थं भरतानाममध्यमम् ।

C 6 5703
B 6 120 15
K 6 120 15

---

7 D1 om 7 (cf v l 1) K8 T2 om. the ref. — a) T2 स शेते (for सायाह्ने) K1 नापतद्; K2 G3 निपतद्, K4 B Da Dn D4–7 T2 निहतो, K6 नापतन्; D8 निहते (for न्यपतद्) — Dn2 om $7^{c}$–$8^{b}$ — c) K4 B1–3 Da Dn1 D5 S पाचालान्हर्षय( Da1 °या°, T2 °न्प्रेषय )श्चैव, B4 D8 4 6–8 पा( D4 6 प )चालाना ददौ ( D8 दधन् ) हर्षं — d) K3–5 B Da Dn1 D2–8 भीष्म कुरुपितामह ( Da1 °मह )

8 D1 om 8 (cf v l 1), Dn2 om $8^{ab}$ (cf v l 7) — a) B1 8 Da D6 अशेत (for स शेते) — b) Ś1 K1 मेदिनी (for °नीम्) Ś1 K0–2 सस्पृशस् (for अस्पृशंस्) — Before $8^{cd}$, T2 ins सजय — c) T2 M2 भीष्मे (for भीष्मो) K4 B Da Dn D4–8 भीष्मे रथात्प्रपतिते, D8 रथात्प्रपतितो भीष्म — d) K8 विच्युतो, K4 B Da Dn D4 6–8 प्रच्युते, D5 प्रमुच्य (for प्रच्युतो) Da Dn2 D5 धरणीतल S प्रच्छन्नो (T1 G2–4 सछिन्नो, G1 सछन्नो) बहुभि शरै

9 D1 om 9 (cf v l 1) — a) G1–8 हते तु, M2 ह हेति K8 6 D2 3 6 8 तुमल (for तुमुल) — b) T1 G समजायत (for °पद्यत) — c) Da1 D6 T2 समावृक्षे, Ca c d मीमावृक्षे (as in text) — d) K3–5 B D (D1 om) समिति( Da1 °त्य )जये ( D3 °जय ), T2 M समितिध्वजे (for °तिक्षये)

10 D1 om $10^{abc}$ (cf v l 1) — a) K4 B1 3 4 Dn2 D4 7 8 सेनयोरुभयो (by transp) — b) K8 6 D2 सुमहद् (for क्षत्रियान्) G2 क्षत्रिया भयमाविशन्, Cap महद्भयमुपाविशत् — c) M4 भीष्म निपतित दृष्ट्वा — d) K6 D2 M4 विकीर्ण (for विशीर्ण) — e) K2 कुरुव , K8 उरव (for कुरव) S पर्यतप्यत, Ca °वर्तन्त (as in text) — f) D. पाण्डवाश्च (for पाण्डवाश्च)

11 D2 reads $11^{ab}$ in marg (*sec m*) — a) K4 B2–4 Da Dn1 D6 ख तम‍समवृत ह्यासीन्, B1 Dn2 D4 7 8 ख तम सवृतमभून् — b) K0 भानुगत K4 B Da Dn D4–8 आसीद्भानुर्गतप्रभ — After $11^{ab}$, D2 ins

483* कुरुपाण्डवयोश्छत्रे आधारे च धनुष्मताम् ।

— c) D8 भूतानि, Cc ररास (as in text) T2 सर्वा (for चैव)

12 a) D8 श्रेष्ठ (for श्रेष्ठो) — b) Ś1 K0 1 त्वय, K2 त्वयि, K4 B Da Dn D4–8 ह्यय, K5 D2 चाय; T G M1 (*orig*) 4 सदा, M1 (*sup lin*) 2 3 5 सता (for अय) K6 गर्ति, B1 2 Dn2 D4 8 वर, D2 पति (for गति) — c) D2 G3 M1 (*sup lin*) 3. 5 °भाषत (for °भाषन्त) D3 समरे (for भूतानि) — d) K8 शयने, D2 शयाने (for °न) K8 D2 भरतर्षभे, K4 B Da Dn D1 3–5 7 8 T G2–4 M4 पुरुषर्षभ

13 a) T2 आस्थाय (for आज्ञाय) — b) Dn1 कामार्थं K4 B Da2 Dn D7 8 शातनु (for शंतनु) — d) Ś1 K1 2 G2 पुरुषर्षभ, K4 B Da Dn1 D2 5 T G1 3 4 M4 भरतर्षभ (T G4 °भ) (for पुरुषर्षभ)

14 T2 M om $14^{ab}$ — a) D2 शरतल्पस्थे — b) = $42^{b}$, cf 6 114. $102^{b}$ K0 2 T1 G2 4 भारतानाम् (for भरतानाम्) K8 अपद्यप, K4 B Da Dn D4–8 महत्तम (B1 °त्तर), D2 विभूषणे, D3 अमद्यप, D1 T1 G पितामह (for अमध्यमम्) — c) K8 6 D2 3 पर्यभाषत (K8 °ते), K4 B1 3 4 Dn2 D4

C 6 5704 B 6 120 15 K 6 120 15

ऋषयः पर्यधावन्त सहिताः सिद्धचारणैः ॥ १४
हते शांतनवे भीष्मे भरतानां पितामहे ।
न किंचित्प्रत्यपद्यन्त पुत्रास्तव च भारत ॥ १५
विवर्णवदनाश्चासन्गतश्रीकाश्च भारत ।
अतिष्ठन्व्रीडिताश्चैव ह्रिया युक्ता ह्यधोमुखाः ॥ १६
पाण्डवाश्च जयं लब्ध्वा संग्रामशिरसि स्थिताः ।
सर्वे दध्मुर्महाशङ्खान्हेमजालपरिष्कृतान् ॥ १७
भृशं तूर्यनिनादेषु वाद्यमानेषु चानघ ।
अपश्याम रणे राजन्भीमसेनं महाबलम् ।
आक्रीडमानं कौन्तेयं हर्षेण महता युतम् ॥ १८
निहत्य समरे शत्रून्महाबलसमन्वितान् ।
संमोहश्चापि तुमुलः कुरूणामभवत्तदा ॥ १९
कर्णदुर्योधनौ चापि निःश्वसेतां मुहुर्मुहुः ।
तथा निपतिते भीष्मे कौरवाणां धुरंधरे ।
हाहाकारमभूत्सर्वं निर्मर्यादमवर्तत ॥ २०
दृष्ट्वा च पतितं भीष्मं पुत्रो दुःशासनस्तव ।
उत्तमं जवमास्थाय द्रोणानीकं समाद्रवत् ॥ २१
भ्रात्रा प्रस्थापितो वीरः स्वेनानीकेन दंशितः ।

त्वभ्यभाषत, B2 Da Dn1 D6–8 S प्रत्यभाषत (Da1 °त), D1 पर्यधावत (for °वन्त) — d) G2 मुनय (for सहिता) D2 सर्वचारणै

15 a) K0 2 शेते (for हते) — b) D8 T1 G2.4 भारताना (for भर°) — c) G8 कश्चित् (for किंचित्) — d) K3 विशां पते, K4 5 B D हि (K3 D1 2 च, D8 तु) मारिष (for च भारत)

16 a) K4 B4 Da Dn2 D4 5 7 8 G3 विषण्ण° (for विवर्ण°) D1 सर्वे (for चासन्) — b) K4 B4 Da Dn D4–8 G8 M4 हृतश्रीकाश्च, T2 गतस्त्रीकाश्च D1 कांतिहीना विशां पते — c) D8 अतिष्ठद्, T2 भवति (for अतिष्ठन्) S (except G1 M5) व्रीळिताश् Ca cites व्रीडिता D8 चैव K3 5 D2 आसन्सुव्रीडिता श्चैव — d) K5 वस्त्रायुक्ता (sic), Dn2 D4 (before corr) 7 8 क्रियायु(D7 °मु)क्ता, D2 लज्जायुक्ता, D6 ह्रिया सुक्ता, G3 श्रिया युक्ता K3 5 D2 अधो°, D8 त्वधो°, T2 [अ]प्यधो° (for ह्यधो°)

17 a) K5 D2 तु (for च) D6 om from जय up to तूर्य (in 18a) T2 लब्धा (for लब्ध्वा) — b) K1 महाशख, S (except G2) मुदा शखान् (T2 M युक्ता) — d) K3 5 D1–3.7 हेमजालपरिस्कृतान्; K4 B1–3 Da Dn1 D5 °विभूषितान्, S शखान् (T1 G तप्त) हेमपरिष्कृतान्

18 D6 om up to भृश तूर्य (cf. v. l. 17) — a) K4 B4 हृष्टास्, Dn2 हृष्यद्, D4 हृष्यस्, D7 हृष्ट, D8 हृष्ट- (for भृशं) B1 D2 -सहस्रेषु; D1 -निनादस्तु (for निनादेषु) K3 शखतूर्यसहस्रेषु, Da Dn1 D5 हृष्ट (Da1 D5 °ष्ट) तूर्यनिनादैश्च — b) D3 भिद्य°, T1 G वर्ते° (for वाद्य°) K3 वा पुन, K5 D2 3 6 G3 M1–3 5 भारत; T2 चानघा (for चानघ) — c) D2 अपश्यामो K4 B D (except D1–3.6) महाराज (for रणे राजन्) — d) K5 D2 महारथं (for °बलम्) — e) K1 D5 आक्रीडमाना (D5 °यानं), Dn2 D4 6–8 विक्रीडयान — f) K3 D1 S (except G1) वृत (for युतम्). K5 D2 हर्षेणोत्फुल्ललोचन

19 a) K3 4 B D (except D1) G1 तरसा (for समरे) K4 B Da Dn D4–3 G1 शत्रुं (for शत्रून्). — b) K4 B Da Dn D4–3 °समन्वित (Da1 °त) (for °तान्) — c) M1–3 5 चैव (for चापि) K3. 5 D2. 3 6 8 तुमल°, T2 तुमुल (for तुमुल°). — d) D3. 7 8 तत. (for तदा)

20 b) Ś1 K0 न्यश्वसेतां; K3 निश्वसता; G1–3 निश्वसतौ, some MSS निश्वसेता B2 पुन पुन (for मुहुर्मुहु°) — c) K3 D (except D2–4 6) निपातिते (for निप°) K2 तथा पिनतिते भीष्मे (sic) — d) K3 कुरूणा च, Da1 कौरवाना K3 D2 धनुर्धरे, K4 B Da Dn D4–3 T2 पितामहे (T2 *also* धुरधरे as in text) D1 कुरूणा प्रपितामहे — e) K3 Da Dn1 D2 5 S हाहाकृतम्, K4 B Dn2 D1 3 4 6–8 °भूतम् (for °कारम्).

21 a) K3 नि, M4 तु (for च) — b) K5 D2 G3 M2 दुर्योध(D2 °स)नस् (for दुःशासनस्) — d) B2 Da Dn1 D5 द्रोणातिकम्, D4 रणानीकम् (for द्रोणानीक) K3 4 B D (except D1) G1 3 उपाद्रवत्, T G2 4 M उपागमत् (for समाद्रवत्) — After 21, D1 ins

484* आगतस्त्वरमाणस्तु बलेन महता वृत ।
समेत्य पुरुषव्याघ्र त्वरमाणो महारथ ।,

while D2 ins.

485* दुःशासन द्रुततर द्रोणविज्ञापनाय तद् ।

प्रययौ पुरुषव्याघ्रः स्वसैन्यमभिचोदयन् ॥ २२
तमायान्तमभिप्रेक्ष्य कुरवः पर्यवारयन् ।
दुःशासनं महाराज किमयं वक्ष्यतीति वै ॥ २३
ततो द्रोणाय निहतं भीष्ममाचष्ट कौरवः ।
द्रोणस्तदप्रियं श्रुत्वा सहसा न्यपतद्रथात् ॥ २४
स संज्ञामुपलभ्याथ भारद्वाजः प्रतापवान् ।
निवारयामास तदा स्वान्यनीकानि मारिष ॥ २५
विनिवृत्तान्कुरून्दृष्ट्वा पाण्डवापि स्वसैनिकान् ।
दूतैः शीघ्राश्वसंयुक्तैरवहारमकारयन् ॥ २६

विनिवृत्तेषु सैन्येषु पारंपर्येण सर्वशः ।
विमुक्तकवचाः सर्वे भीष्ममीयुर्नराधिपाः ॥ २७
व्युपारम्य ततो युद्धाद्योधाः शतसहस्रशः ।
उपतस्थुर्महात्मानं प्रजापतिमिवामराः ॥ २८
ते तु भीष्मं समासाद्य शयानं भरतर्षभम् ।
अभिवाद्य व्यतिष्ठन्त पाण्डवाः कुरुभिः सह ॥ २९
अथ पाण्डून्कुरूंश्चैव प्रणिपत्याग्रतः स्थितान् ।
अभ्यभाषत धर्मात्मा भीष्मः शांतनवस्तदा ॥ ३०
स्वागतं वो महाभागाः स्वागतं वो महारथाः ।

C 6 5721
B 6 120. 33
K 6 120 33

---

22 D1 om 22 — $^{a}$) Ś1 भ्राता; T2 भ्रातृ- (for भ्रात्रा) Ś1 K3 M3 वीर (for वीर ) — $^{b}$) K3 स्वेनानेकेन Ś1 K0-2 सवृत, S दसित — $^{c}$) K3 Da1 D3 8 पुरुषव्याघ्र (for °घ्र ) — $^{d}$) K3 5 D2 अभिनोदयन्, K4 B Da Dn D4-8 स विषाद( Da1 °ह )यन्; D3 अभिचोदयत्, S अभिहर्षयन्

23 Ś1 om (hapl ) 23$^{ab}$ — $^{c}$) K3 दुशासन, D1 दु शासनो, G3 दुर्योधन ( for दु शासन ) T2 महाराज — $^{d}$) K0 वीक्ष्यतीति, K2 वक्षतीति (for वक्ष्यतीति ) K4 B D ( except D1-3 6 ) च ( B1 ह ) (for वै )

24 $^{b}$) K3 कौरव, D2 कौरव, S भारत — $^{c}$) K4 B1 3 4 Dn2 D4 7 8 G1 तत्राप्रिय, Da1 तदा° (for तद° ) B2 कृत्वा ( for श्रुत्वा ) — $^{d}$) K3 D1 8 प्रापतद्; D2 प्रपतद् ( for न्यपतद् ) K4 B Da Dn D4-8 मु( B2 सु )मोह भरतर्षभ, S सहसा मोहमागत ( G1 8 °माविशत् )

25 $^{a}$) K4 B Dn2 D4 6-8 [आ]शु ( for [अ]थ ) — $^{b}$) D1 शोकसंविग्नमानस — $^{c}$) D3 निवर्तयामास, T1 G4 निवासया° ( for निवारया° ) B2 तथा ( for तदा ) — $^{d}$) S भारत ( for मारिष )

26 D1 om (hapl ) 26 — $^{a}$) K5 स, D2 स- ( for वि ) — $^{b}$) Ś1 K0-3 B2 D2 T2 G2 M4 पाण्डवाश्च, T1 G1 3 4 M1-3 5 °वा हि ( for °वापि ) Ś1 K0-2 ससैनिका ( K1 °क, K2 °का ) ( for स्वसैनिकान् ) — $^{c}$) K3 5 D2 T1 G2 4 रथै° ( for दूतै° ) Ś1 शीघ्राशु-, K5 D2 शीघ्रैश्च ( for शीघ्राश्व- ) T2 जीमूतै° शीघ्रसयुक्तैः — $^{d}$) K3-5 B Da Dn D2 4 5 7 8 S Cv समतात्पर्य( Da Dn1 D5 °न्त्य )वारयन्, D3 6 समतादवहारयन्

27 $^{a}$) Ś1 K3-5 B Da2 Dn D1-4 6-8 M2 निवृत्तेषु च ( Ś1 K3 5 D1. 3 तु ), Da1 D5 निवृत्तेषु, T2 पातितेषु च ( for विनिवृत्तेषु ) — $^{b}$) G3 पर°, Ca c पार° (as in text) — $^{c}$) K0 विपक्त°, K4 B3 4 Dn2 D4 7 8 निर्मुक्त° (for विमुक्त° ) — $^{d}$) D1 °धिप ( for °धिपा )

28 In D3, the portion from रम्य in 28$^{a}$ up to हि in 39$^{e}$ is missing, the fol being blank — $^{a}$) K0 M4 व्यपारम्य, K2 व्युपारमद्, K3 व्यपारमस्, K4 B Da Dn D4-7 व्युपरम्य, D1 व्युपारमन्, T1 G2 4 उपरम्य, T2 M1-3 5 उपारम्य ( for व्युपारम्य ) — K1 om from ततो ( in 28$^{a}$) up to समासाद्य ( in 29$^{a}$) D1 तदा ( for ततो ) K5 D2 योधा ( for युद्धाद् ) — $^{b}$) K3 योधा, T1 G2 4 M यौधा T2 तत्र ( for शत ) K5 D2 शतशोथ सहस्रश — $^{d}$) B2 देवा इव प्रजापतिं

29 D3 missing, K1 om 29$^{a}$ (cf v 1 28) — $^{a}$) K5 तेषु, S ( except G2 ) ततो ( for ते तु ) — $^{b}$) D1 सग्रामे; D6 शयने ( for शयान ) K4 B Da Dn1 D1. 5 6 T2 M पुरुषर्षभ ( D1. 6 °भ ), D7 8 G2 भरतर्षभ — $^{c}$) K4 B Dn2 D4 7 8 [अ]वतिष्ठत ( for व्यति° )

30 D3 missing (cf v 1 28) — $^{a}$) D2 पाडु कुरूश् — $^{b}$) D2 प्रतिपद्य ( for प्रणिपत्य ) D1 समालोक्य समागतान्

31 D3 missing (cf v 1 28) Before 31, K4 B2-4 Da Dn1 D5 ins भीष्म उवाच — $^{a}$) K2 महाभागा, D2 °राजा ( for °भागा ) — $^{d}$) M3 5 अमरोत्तमा

32 D3 missing (cf v 1. 28) — $^{a}$) K3 5 D2

C. 6 5722 B. 6 120 33 K 6 120 33

तुष्यामि दर्शनाच्चाहं युष्माकममरोपमाः ॥ ३१
अभिनन्द्य स तानेवं शिरसा लम्बताब्रवीत् ।
शिरो मे लम्बतेऽत्यर्थमुपधानं प्रदीयताम् ॥ ३२
ततो नृपाः समाजह्रुस्तनूनि च मृदूनि च ।
उपधानानि मुख्यानि नैच्छत्तानि पितामहः ॥ ३३
अब्रवीच्च नरव्याघ्रः प्रहसन्निव तान्नृपान् ।
नैतानि वीरशय्यासु युक्तरूपाणि पार्थिवाः ॥ ३४
ततो वीक्ष्य नरश्रेष्ठमभ्यभाषत पाण्डवम् ।
धनंजयं दीर्घबाहुं सर्वलोकमहारथम् ॥ ३५
धनंजय महाबाहो शिरसो मेऽस्य लम्बतः ।
दीयतामुपधानं वै यद्युक्तमिह मन्यसे ॥ ३६
स संन्यस्य महच्चापमभिवाद्य पितामहम् ।
नेत्राभ्यामश्रुपूर्णाभ्यामिदं वचनमब्रवीत् ॥ ३७
आज्ञापय कुरुश्रेष्ठ सर्वशस्त्रभृतां वर ।
प्रेष्योऽहं तव दुर्धर्ष क्रियतां किं पितामह ॥ ३८
तमब्रवीच्छांतनवः शिरो मे तात लम्बते ।
उपधानं कुरुश्रेष्ठ फल्गुनोपनयस्व मे ।
शयनस्यानुरूपं हि शीघ्रं वीर प्रयच्छ मे ॥ ३९

---

अभिपूज्य, K4 B1 3 4 Dn2 D4-8 °भ्यच्य (for °नन्द्य) K4 B Da Dn D4-8 [अ]थ तानेव (Da1 °च), T2 सुतानेव, M1 स तानेव — After $32^{ab}$, B2 Da Dn1 D5 S ins

486* परिपार्श्वे तव सुतान्स्थितानुद्वीक्ष्य भारत ।

— c) D1 वीरा (for ऽत्यर्थं). Da1 शिरो मे लवतोत्यर्थे (sic) — d) K2 उपाधान, Ca c d उपधान (as in text) G1 3 प्रकल्प्य(G1 °ल्प)ता (for प्रदीयताम्) — After 32, B2 D8 ins

487* एतच्छ्रुत्वा तु वचनं भीष्माद्भागीरथीसुतात् ।

33 D8 missing (cf v l 28) Before 33, D6 ins भीष्म उवच (sic) — a) Da Dn1 D6 तमा जह्रुस् (for समा°) G2 तत समाहरंस्तत्र — b) Ko 2 तनूपि (for तनूनि) — d) D1 नै° श्रतानि (sic), T2 नैच्छत्यानि (sic) (for नैच्छत्तानि)

34 D8 missing (cf v l 28). — a) K4 B D (except D2, D8 missing) अथाब्रवीन् (for अब्रवीच्च) K3 G3 नरव्याघ्र — b) D2 स हसन् (for प्रहसन्) — c) Ś1 Ko.2 T2 वीरशय्याया (for °सु)

35 D8 missing (cf v l 28) — a) S (except M2) ततस्तु (T2 °श्च) भरतश्रेष्ठम् (T2 °ष्ठो) — T2 om (hapl) $35^{cd}$, D8 reads it in marg (sec m) — c) K3 D2 S (T2 om) महाबाहु (G3 °भाग) (for दीर्घबाहु)

36 D8 missing (cf v l 28) — b) D1 लवते (for लम्बत) K1 शिरो मेस्य लघत (submetric), K4 B Dn2 D4 6-8 S शिरो मे तात (T G2 4 प्रति; G1 3 [ऽ]ति प्र-, M1-3 5 प्रवि; M4 विप्र-) लम्बते, K5 शिरसो मेवलम्बते — T1 G repeat $36^{cd}$ after $39^{ab}$ — c) K5 Da Dn1 D1 6 S (T1 G1 3 4 both times, G2 second time) मे (for वै) — d) M5 इव (for इह) — After 36, Ś1 Ko 2 ins an addl colophon

37 D8 missing (cf v l 28). — Before 37, N (D8 missing) G1-3 M ins संजय उवाच — a) K4 B2 D (except D2, D8 missing) समारोप्य, B1 4 स आरोप्य; B3 अनारोप्य, G1 3 स चै न्यस्य, some MSS स सन्यस्य Cc cites आरोप्य — d) D1 दुःखितो वाक्यमब्रवीत्

38 D8 missing (cf v l 28) Before 38, D6 ins अर्जुन उवाच — b) Ko 2 Da1 D7 स(K2 श)र्वशास्त्रभृता वर, K1 शास्त्रशास्त्रभृता वर, K3 4 D2 S सर्वधर्मविदा (K3 D2 °भृता) वर — c) T1 दुर्धर्पं (for °र्ष) — d) D5 T2 क (for किं) Da1 पिता मह°, D5 M2 °मह (for °मह)

39 D8 missing up to हि (in $39^{c}$) (cf v l 28) Before 39, D6 ins संजय उवाच — a) K3 तद् (for तम्) — b) D1 [ऽ]र्जुन, T1 G2 4 प्रति, G1 3 [ऽ]ति प्र- (for तात) — After $39^{ab}$, T1 G repeat $36^{cd}$ — G1 3 om $39^{c}$–$40^{d}$ — d) Ś1 फत्गुण, K2 फाल्गुण (for फल्गुन) K3-5 B1. 3. 4 Dn2 D2 4 6-8 फाल्गुनोप(B1 °नात्र)दधस्व (K5 °स्व) मे, B2 Da Dn1 D5 फाल्गुनेहो(D5 °या)पपादय, D1 फाल्गुनापादयस्व मे S (G1 3 om) उपधेहि ममार्जुन, Ca cites इह — e) Ko 2 शयानस्यानुरूप K1 4 B Da Dn D4 8 वै, K5 D2 मे (for हि) S (G1 3 om) वीरशय्यानुरूप मे — f) Da Dn1 D5 अद्य (for वीर) M वै (for मे) D1 यदि त्वमनु- मन्यसे.

